मद्रपुरीयविश्वविद्यालयसंस्कृतग्रन्थावलिः

ग्रन्थाङ्कः ६

आचार्यमण्डनमिश्रविरचिता

# स्फोटसिद्धिः

ऋषिपुत्रपरमेश्वरकृतगोपालिकोपेता

वेदविशारदेन शे. कृ. रामनाथशास्त्रिणा
संपादिता

---

मद्रपुरीयविश्वविद्यालयः

१९३१

# FOREWORD

The Sphoṭasiddhi of Ācārya Maṇḍanamiśra, which is now edited and published under the auspices of the Sanskrit Department of the Madras University, is a very important work, attempting as the name signifies, to establish the Doctrine of Sphoṭa. In this work, Maṇḍanamiśra refutes the arguments of Kumārilabhaṭṭa and establishes the Sphoṭa Doctrine. It is a short work of less than forty Kārikās, with brief explanations in prose.

The commentary called the Gopālikā, which is printed with the text is a very learned and elaborate one, and is the work of Ṛsiputra Parameśvara belonging to the Payyoor Bhattathirippad family in Malabar. In the Sanskrit Introduction, the editor has dealt with the commentary and the commentator in detail.

The Payyoor Bhattathirippad family exists even now in the village called Porkalam, on the suburbs of the town of Kunnankulam in the Cochin State.

Parameśvara, the author of the commentary styles himself as Ṛsiputra. Besides this commentary, he has written commentaries on Tattvabindu, Nītitattvāvirbhāva and Vibhramaviveka.[1] He styles this work as Gopālikā, as that was the name of his mother.[2] He mentions his four uncles, Bhavadāsa, Subrahmaṇya, Vāsudeva and Śankara.[3]

His grandson too is Parameśvara,[4] who is also known as Ṛsiputra. This Parameśvara has written a commentary on the Mīmāṁsāsūtras, called the Sūtrārthasaṅgraha,[5] and he has also commented on the Kāśikā on the Ślokavārtika.

---

(1) *See* Sanskrit introduction p. VI
(2) „ „ p. IV.
(3) „ „ p. XI.
(4) „ „ p. VI.
(5) „ „ p. V.

The grandfather[6] of Parameśvara, the author of the Gopālikā, is still another Ṛsiputra Parameśvara. He has written two works called Svaditaṅkaranī and Juṣadhvaṅkaranī,[7] both commentaries on the Nyāyakaṇikā of Vācaspatimiśra.

Uddanda, the author of Mallikāmāruta and Kokilasandeśa mentions a Parameśvara, son of Ṛsi, who is called Mīmāmsakacakravartin,[8] in the Mallikāmāruta; and in the Kokilasandeśa,[9] he speaks of the village of Porkalam, where resided the Payyoor Bhattathirippads. All these details are given in the Sanskrit introduction.

This work is now edited for the first time, and it is hoped that it will be of some interest to students of Indian Philosophy.

MADRAS UNIVERSITY, 20*th Dec.*, 1931.

C. KUNHAN RAJA, *Reader in Sanskrit.*

---

(6) *See* Sanskrit introduction, p XIII
(7) " " p XIII.
(8) " " p. XVII.
(9) " " p. XVI.

CONTENTS.

---

परः परिचयः, यदिदमपि न दृष्टम्—शब्दादर्थं प्रतिपद्यामहे इति" इति सोल्लुण्ठवचनप्रयोगश्च तं प्रति दृश्यते। अत्र व्याख्या—"[3]अनेन च वैपरीत्यं लक्षयति कातरे धीरशब्दवत्; उपहासार्थश्चैवंप्रयोगः" इति। एवम् "[2]न चेदृशं साधर्म्यवैधर्म्यमात्रं हेतुं विपश्चितोऽनुमन्यन्ते" इति द्रष्टव्यम्। अतश्च यद्ययं मण्डनमिश्रो भट्टकुमारिलस्यान्तेऽवत्स्यत् नावक्ष्यत् तं दुर्विदग्ध इति, नोपाहसिष्यच्च "अहो! लोकशास्त्रप्रसिद्धयोः परः परिचयः" इति।

किञ्च, यथा बृहदारण्यकवार्तिके "अप्रामाण्यं त्रिधा भिन्नम्" इति भट्टवार्तिकमुपादाय "[3]महद्भिरपि भाषितम्" इति तद्वक्तरि निरतिशयो बहुमान आविष्कृतः, तथात्र वान्यत्र वा ग्रन्थेऽनेन न प्रकटीकृत इति नायं भट्टशिष्यः। किञ्च, तत्रैव वार्तिके मण्डनमतं खण्डयता सुरेश्वरेण तस्यान्यत्व-मुदितमेव। न च तदाश्रमभेदेन शक्यमन्यथाकर्तुमित्यादिकम्, उम्बेकभवभूति-विश्वरूपसुरेश्वरादीनामैक्यं न वेत्यादिकं च समये निरूपयिष्यामः। अव-तरिष्यति किल चिराय प्रतीक्षिता मण्डनदेशकालमतचर्चाविशेषकविभूषितमुख-मण्डला भगवती ब्रह्मसिद्धिः मद्रमण्डलप्राच्यपुस्तकभाण्डागारात्; तामेव प्रतीक्षामहे। प्रकृते च मण्डनः कुमारिलभट्टसमकालिकः, तदन्तेवासी, ब्रह्माद्वैतवादी, कर्मपक्षपाती चेति स्वाशयमाविष्कुर्वाणा अन्यत्र प्रवर्तामहे।

## स्फोटसिद्धिः

कारिकावृत्त्यात्मके प्रतिपक्षप्रतिक्षेपमुखेन स्फोटदिङ्मात्रप्रदर्शकेऽत्र ग्रन्थे "नेक्षितो" इतीयं कारिका अडयार् पुस्तकभाण्डागारीये सव्याख्ये वाक्यपदीय-

१. स्फोटसिद्धिः. P. 21.　३. बृहदारण्यकवार्तिकम्. 1-4-422.
२. स्फोटसिद्धिः. P. 208.　४. स्फोटसिद्धिः. P. 73. [P. 517.

लिखितपुस्तके (39. c. 7. p. 673) दृश्यमाना स्वयं वाक्यपदीयकारिकात्वे-नात्मानं संभावयति । तथा हि—तत्र पुस्तके मूलग्रन्थः पाटलया व्याख्या-ग्रन्थो नीलया च मस्या विलिख्यत इति काचन परिपाटी । इयं च तत्र पाटलमस्या लिखिता । मूलकारिकाणां संख्या च सर्वत्र लिख्यमाना अत्रापि चतुश्शताधिकद्व्यशीतिः (४८२) विलिखिता पूर्वोत्तरसंख्यासन्दष्टा च वर्तते । "संस्कारादुपकाराद्वा" इति पूर्वकारिकाया अनन्तरमेव, न तु तत्कारिका-व्याख्यान्तरिता ; पाठश्च "व्यक्तिर्वा जातिसंश्रया" इति चतुर्थपादस्य दृश्यते । एतैः कारणैरस्माकम् 'स्यादियं वाक्यपदीयस्था' इति समुचित एव सन्देहः । परन्तु पर्यालोचने लेखकप्रमाद एवात्र निदानमिति भाति । अस्ति च लेखकस्य प्रमादे पर्याप्तं कारणम् । तथा हि—वाक्यपदीयद्वितीयकाण्डे[1] शताधिकैक-षष्टितमकारिकाया इयं (१६१) व्याख्यातुरवतारिका—"ननु समुदायेषु हि वृत्ताः शब्दा अवयवेष्वपि वर्तन्ते यथा तैलं भुक्तं घृतं भुक्तं शुक्लो नीलः कपिलः इत्युक्तम् ; तदेतत् कथम् ?

उक्तं च—

'न जातिगुणशब्देषु मूर्तिभेदो विवक्षितः ।
ते जातिगुणसम्बन्धभेदमात्रनिबन्धनाः' ॥

तथा—'नेक्षिता जातिशब्दानां समुदायानुपातिनाम्[2] ।
जातिमाचक्षते ते हि व्यक्तीर्वा जातिसङ्गताः ॥' इति ।"

अत्र "उक्तं च" इत्युपक्रम्य गृहीतया "न जातिगुणशब्देषु" इति कारिकया पूर्वोक्त अडयार् पुस्तकभाण्डागारीयलिखितपुस्तकरील्या चतुश्शताधिकत्र्यशीति-तमया (४८३) सह पाठः कर्तृविशेषानुपलम्भश्च पर्याप्तमेव लेखकप्रमादे

१. Printed at Benares Sanskrit Series, Page 145.
२. समुदायानुपातिता. स्फोटसिद्धिः.

कारणम् । अपि च राजकीयप्राचीनलिखितपुस्तकभाण्डागारीये वाक्यपदीय मूलकारिकापुस्तके "नेक्षिता" इतीयं कारिका न दृश्यते । अतश्च स्फोटसिद्धिकारिकैव "नेक्षिता" इतीयं पुण्यराजेन स्वटीकायामुद्धृता—इति संक्षेपः ॥

## व्याख्याता ऋषिपुत्रपरमेश्वरः

अस्याः स्फोटसिद्धेर्व्याख्याया गोपालिकायाः प्रणेतुरितिवृत्तं व्याख्यानान्ते तेनैव विनिवेशितैः पद्यैः कियदपि विज्ञायते । तानि चेमानि पद्यानि—

तत्त्वबिन्दोः कृता येन व्याख्या तत्त्वविभावना ।
तेनेयं रचिता व्याख्या नाम्ना **गोपालिका** स्मृता ॥ १ ॥

शब्दानां पालकं ह्येतदस्या मूलं निबन्धनम् ।
एषा व्याख्येयशब्दानामुपादानाच्च पालिका ॥ २ ॥

नन्दगोपसुता देवी **वेदारण्य**निवासिनी ।
मात्रा **गोपालिका**नाम्ना सेवितास्मदपेक्षया ॥ ३ ॥

तत्प्रसादादियं व्याख्या मया विरचिता किल ।
इति गोपालिकासंज्ञामस्या व्याचक्षते बुधाः ॥ ४ ॥

**मण्डनाचार्य**कृतयो येष्वतिष्ठन्त कृत्स्नशः ।
तद्वंश्येन मयाप्येषा रचिताराध्य देवताम् ॥ ५ ॥

ब्रह्मविष्णुमहेशानरूपिणीं विश्वमातरम् ।
**ऋषिं** पितरमानम्य भवदासमनन्तरम् ॥ ६ ॥

गुरूनन्यांश्च रचिता व्याख्येयं क्षम्यतां बुधैः ।
यन्न्यूनमतिरिक्तं च दुरुक्तं चेह किञ्चन ॥ ७ ॥

परमेश्वर एवास्याः कर्ता साक्षान्निरञ्जनः ।
नायं जनस्तु तन्नामा साञ्जनो मन्दचेतनः ॥ ८ ॥

एतैश्च—(१) स्वनाम परमेश्वरः (२) मातृनाम गोपालिका (३) पितृनाम ऋषिः (४) पितृव्यनाम भवदासः (५) स्वकृतिः तत्त्वविभावना (तत्त्वबिन्दुव्याख्या) (६) अन्ये च गुरवः सन्ति इत्येतावत् स्पष्टमवगम्यते। एकैकश्लोकव्याख्यानान्ते च "ऋषिपुत्रपरमेश्वरकृतायाम्" इत्यादिको वाक्यांशोऽप्येतदनुगुणमेव दृश्यते। परमेश्वरप्रभवाश्च कृतयः— (१) गोपालिका (स्फोटसिद्धिव्याख्या) (२) मीमांसासूत्रार्थसङ्ग्रहः (३) तत्त्वविभावना (तत्त्वबिन्दुव्याख्या) (४) नीतितत्त्वाविर्भावव्याख्या (५) स्वदितङ्करणी (न्यायकणिकाव्याख्या) (६) मीमांसाकाशिकाटिप्पणी इतीयत्योऽद्य यावदवलोकिता अस्माभिः।

## (२) मीमांसासूत्रार्थसङ्ग्रहः

आस्तु अयं ग्रन्थ आदितो द्वितीयाध्यायतृतीयपादान्तमुपलभ्यते[1]। अस्यारम्भे देवताप्रार्थनानन्तरं जैमिन्यादिप्रतीतमीमांसकाननुस्मृत्य पश्चात् स्वगुरुं[2] वासुदेवाचार्यं ग्रन्थकृत् प्रणमति; ततोऽधिकरणानि तत्सूत्राणि तत्पदानि च संख्यानपूर्वकं विशदं व्याख्यानय परीष्टिपदव्युत्पादकं किमपि बृहट्टीका[3]-वचनमुद्धृत्य वृत्तिकारग्रन्थस्य युक्तायुक्ततां विचारयन्नेवं लिखति—"तथा[4] च तत्रभवन्तः षड्दर्शनीपारदृश्य(श्व)त्वे सत्यपि विशेषतः कौमरिलतन्त्रस्वातन्त्र्य-

१. सूत्रार्थसङ्ग्रहः. I.38. 37. Govt. Mss. Library, Madras.
"जैमिनि-शबर-कुमारिल-सुचरित-परितोष-पार्थसारथयः।
ल(उ)म्बेकविजयकारौ मण्डनवाचस्पती च विजयन्ताम्॥"

२. ,, "आम्नायोनिर्भुजि प्रतृणवत्युदयभाजि...।
पूणाङ्केऽध्यापीति नः प्रणमामि वासुदेवाचार्यान्॥"

३. ,, परीष्टिशब्दव्युत्पत्तिश्च बृहट्टीकायामेव मुन्दिशीकिता [मुद्दङ्किता]— "इषेरनिच्छार्थस्य" इति युच विधाय "परेर्वा" इति परिपूर्वस्य विकल्पोऽभिहितः। तस्मात् पाक्षिकी परीष्टिपदरूपसिद्धिः।" इति। P. 15. 2. बृहट्टीका गद्यरूपापि?

४. P. 47. 15.

वत्तया विवृततत्त्वाविर्भावतत्त्वबिन्दुस्फोटसिद्धयोऽस्मत्पितामहपादा विभ्रमविवेक-व्याख्यायाम्—

'प्रमाणत्वाप्रमाणत्वे व्यतिरेकविपर्ययौ । (विभ्रमविवेके)
अनङ्गमिति मोघैव तयोरत्र विचारणा ॥' (श्लो. १११—११२.)

इति श्लोकव्याख्यानावसरे तन्मतोद्धारमेवमाहुः—'यच्चोक्तं वृत्तिकारकृता सूत्र-व्याख्या न युक्तेति, तदयुक्तम्; तथा सति वृत्तिकारग्रन्थाद्यात्मवादावसानस्य ग्रन्थस्यायुक्तत्वप्रसङ्गात्। वैपरीत्यं वा कुतो न स्यात्, महाभाष्यकारवर्णित-त्वात्? यथा "गकारौकारविसर्जनीयाः" इति भगवानुपवर्षः—इति, "अत एवोचे वृत्तिकारेण" इति, "अत्र भगवान् वृत्तिकारः परिनिश्चिकाय" इत्यादौ भाष्यकारेण स्वयमुच्यमानस्यार्थस्य युक्ततरत्वद्योतनाय वृत्तिकाराङ्गीकृतत्वमुच्यते, तथात्रापि व्याख्यानान्तरस्य युक्ततरत्वद्योतनाय वृत्तिकारग्रहणम्। व्यवहितान्वयाध्याहारादियुक्तापि व्याख्या स्वीक्रियते, वृत्तिकारप्रामाण्यात्। किं पुनरेतादृश्येव व्याख्या वृत्तिकारेणाश्रीयते? अर्थबाहुल्यप्रदर्शनार्थमित्याहुः" इति।

अनेन च तत्त्वाविर्भाव-तत्त्वबिन्दु-स्फोटसिद्धि-विभ्रमविवेकानां चतुर्णां व्याख्याता परमेश्वरः सूत्रार्थसङ्ग्रहकर्तुः पितामह इतीदं सुस्पष्टम्। सूत्रार्थ-सङ्ग्रहे च प्रतिपादं समाप्तौ "इति श्रीमदृषिपुत्रपरमेश्वरविरचिते सूत्रार्थ-सङ्ग्रहे" इत्यादिः (क्वचिदुपाध्यायादिपदाधिक्येऽपि) साधारणो वाक्यावयवो

---

१. सूत्रार्थसङ्ग्रहः I. 38. 37. Govt. Mss. Library, Madras.
अत्र "न परीक्षितव्य निमित्तम्" इत्यादिकमात्मवादान्तं भाष्य शब्दतः शाबरम्, अर्थतो वृत्तिकारीयमिति, भाष्यकृता "गकारौकारविसर्जनीयाः" इति भगवानुपवर्षः—इति स्वाभिप्रायावष्टम्भकतया शब्दतोऽपि सङ्गृहीतमिति च विभ्रमविवेकव्याख्यात्राभिसहितमिति प्रतिभाति।

२. ,, उपवर्षवृत्तेः महाभाष्यशब्देन व्यवहारस्तन्त्रवार्तिके (P. 390) "ततश्च तृतीयार्थसिद्धिः" इत्यत्र तद्व्याख्यायामन्यत्रापि द्रष्टव्यः।

दृश्यते । एवं च ऋषेः पुत्रः कश्चित्, ऋषेः पिता पुत्रश्च कश्चिदिति द्वौ परमेश्वरौ निष्पन्नौ ।

## ३. तत्त्वविभावना (तत्त्वबिन्दुव्याख्या)

उपलब्धायामस्यां तत्त्वबिन्दुव्याख्यायामनुपलब्धपर्यन्तचतुर्थभागायां कर्तृनामादिकं वा ग्रन्थनाम वा न किञ्चित् क्वचिदुपलभ्यते ; किन्तु मध्ये "अस्माभिरपि विभ्रमविवेकव्याख्यायां तदुक्तसंक्षेपो दर्शित इति न प्रक्रम्यते" इतीयं पङ्क्तिर्दृश्यते । अनया च विभ्रमविवेकव्याख्यातैव तत्त्वबिन्दोरपि व्याख्यातेति सिध्यति । विभ्रमविवेकव्याख्याता च ऋषिपुत्रपरमेश्वर इत्युक्तं स्पष्टीभविष्यति च । एतादृशानि कानिचन कारणान्यवष्टभ्यैव सम्प्रति लब्धा तत्त्वबिन्दुव्याख्या परमेश्वरकृता तत्त्वविभावनाभिधाना चेति संभाव्यते । अत्र तत्त्वबिन्दुव्याख्यायाम्, न्याय[2]कणिका, भावना[3]विवेकः, नय[5]विवेकः, न्याय[4]समुच्चय इत्या[6]दयो ग्रन्थाः कण्ठत उपादीयमाना दृश्यन्ते ।

## ४. नीतितत्त्वाविर्भावव्याख्या

अयं ग्रन्थः प्रारम्भे विसंस्थुल एव दृश्यते । अत्र ग्रन्थकारः

---

१. तत्त्वविभावना. Govt. Mss. Library, Madras. T. 2. 173. P. 52. 4.

२. ,, न्यायकणिकाया त्वेवमेवाश्रितामिति प्रतीयते । यथोक्तम्— "इन्द्रियभावस्त्वणुन एव मनसः" इति । P. 89. 19.

३. ,, भावनाविवेके च P. 90. 1.

४. ,, न्यायसमुच्चये द्रष्टव्यम् P. 93. 8.

५. ,, अत्र नयविवेककृतोक्तम् P. 168. 18.

६. ,, "कोकिलालापसुभगाः सुगन्धिवनवायवः ।
यान्ति सार्धं जनानन्दैर्वृद्धिं सुरभिवासराः ॥" P. 148. 3.

उम्बेकमण्डनपार्थसारथि-सुचरितमिश्रादीन् ग्रन्थतो नामतश्च बहुत्र परामृशन्नेवं वदति—"यथा[2] च पदवत् वाक्येऽपि लक्षणासम्भवः, तथोक्तं तत्त्वविभावनाया-मस्माभिः" इति । अतश्च तत्त्वविभावनायाः कर्तुः अस्य च ऐक्यं स्फुटमेव, अस्मच्छब्दप्रयोगात् । यद्यपि पूर्वं परामृष्टा तत्त्वबिन्दुव्याख्या तत्त्वविभावनैवेति वा परमेश्वरकृतिरेवेति वा निश्चेतुं नास्माकमासील्लिखितं किञ्चन प्रमाणम्, तथापि लब्धाया अस्या अन्यः कर्तेति वा, नामान्यदिति वा, एतदितरा तत्त्वबिन्दुव्याख्या वर्तत इति वा यं कञ्चन प्रमाणाभासमपि प्रयस्यापि न पश्याम इति तदभावसहकृतेन नाम अस्मच्छब्दप्रयोगोन्नीतेन कर्त्रैक्येन 'तत्त्वविभावनैवेयम्' इति निश्चिनुमः सम्प्रति । अस्या गोपालिकायाश्च शब्दतोऽर्थतः शैलीतश्च साम्यं परिशीलयतां भावुकानां पुरःस्फूर्तिकमिति च हेतोरियम् ऋषिपुत्रपरमेश्वरकृतिरेव तत्त्वविभावनैवेति च सिद्धम् । किञ्च,

"इति गोपा[3]लिकासूनुः ऋषेः पितुरनुग्रहात् ।
अन्तेवासी पितृव्यस्य भवदासस्य धीमतः ॥

चिदानन्दकृतावाद्यं व्याचष्ट परमेश्वरः ।
व्याख्यातुं कार्यवादं च समीहा तस्य सम्प्रति ॥"

इति विलिखन्नयं न केवलमृषिपुत्रपरमेश्वरम्, किन्तु गोपालिकासूनुं तथा

---

१. Adyar Library XXXIX. A. 8. नीतितत्त्वाविर्भावव्याख्या
a. ननु तत्राप्युम्बेकादिकृतानि निबन्धनानि सन्ति । P. 5. 13.
b. ननु प्रकरणान्यपि मण्डनमिश्रादिकृतानि P. 6. 4
c. शास्त्रदीपिका P. 6. 4
d. न्यायरत्नमाला काशिका P. 39. 7, 10.
e. दृष्टान्तवर्णनं चेदं प्रतिवस्तूपमा मता ।
तथा च दण्डी प्रोवाच काव्यमीमांसकेश्वरः ॥ P. 18. 7.
f. तन्त्ररत्नम् P. 40. 7.

२. ,, P. 55. 12. ३. P. 141, 7.

भवदासस्य शिष्यं तस्यैव भ्रातृसूनं चात्मानं प्रकटयति ; यत् तत्र गोपालिकायामुक्तम्—"ऋषिं पितरमानम्य भवदासमनन्तरम्" इति । अत एव प्रमाणात् तत्रत्योऽनन्तरशब्दो न नमस्कारक्रियां विशिनष्टि, भवदासमेव विशिनष्टीति मन्यामहे । अपि चेतः स्वारस्यात् केरलेषु (अनन्तरवन्) इत्यनन्तरशब्दप्रकृतिकेन पदेन कनीयसि व्यवहारदर्शनात् अयमृषेः कनीयान् भ्राता भवदास इति निश्चेतुं प्रभवामः ।

अथायमपेक्षितार्थपरिपूरणीं व्याख्यानैपुणीं प्रकटयन् भट्टविष्णुं तन्नय-तत्त्वसङ्ग्रहं च समुद्धरन् चिदानन्दस्य तत्त्वाविर्भावादन्या काचन कृति-रस्तीति परिशीलिनां सम्भावनामुद्भावयन् टीका[3]- निबन्धन- विवरणनामग्राहं प्रभाकरगुरमनुसंदधत्—

"[4]इति व्याख्यापयामास कार्यवादमिमं सुधीः ।
सुब्रह्मण्यो यथार्थाख्यो भ्रातुरेव च सूनुना ॥

वेदारण्यनिवासिन्या हैमवत्याः प्रसादतः ।
व्याख्यानं कर्तुमेषो(ऽद्य प्रमावादे)ऽध्यवस्यति ॥"

इति कार्यवादव्याख्यानं स्वयं निगमयति । अत्र कार्यवादव्याख्यातारमात्मानं प्रयोज्यम्, स्वपितृव्यं सुब्रह्मण्याख्यं प्रयोजकं च व्यपदिशन्नयं प्रवीणो भङ्ग्या तं प्राभाकरे प्रस्थाने कृतविशेषपरिश्रममात्मनो विद्यागुरुं च सूचयति ।

---

१. नीतितत्त्वाविर्भावव्याख्या Adyar Library XXXIX. A. 8.
 a. भट्टविष्णुना P. 200. 13.
 b. नयतत्त्वसङ्ग्रहे P. 230. 6.
२. ,, निबन्धनकृता च निबन्धनान्तरे P. 247. 9.
३. ,, टीकाकारस्तु. (इत्यादि) P. 266. 8……
४. ,, P. 275. 3.

‘‘एवं[1] स्वतःप्रमावादं व्याख्यद्गोपालिकासुतः ।
वासुदेवपितृव्योक्तरीत्या केवलयैव तु ॥

अभिवन्द्य महादेवीं वेदारण्यनिवासिनीम् ।
कालप्रत्यक्षतावादे व्याख्या प्रस्तूयते मया ॥’’

इति पूर्ववादवदत्राप्यन्यं स्वपितृव्यं वासुदेवाख्यं तथाभूतमेव निरूपयन्नात्मानं गोपालिकासूनुमप्यावेदयति पुनरपीति नैतत् प्रस्मर्तव्यम् ।

कालप्रत्यक्षवादान्तपद्ये इमे—

‘‘काल[2]प्रत्यक्षतावादमेवं व्याख्यदृषेः सुतः ।
भवदासपितृव्यस्य प्रसादादेव केवलात् ॥

कायवाङ्मनसां सम्यक् प्रह्वीभावेन शङ्करे ।
अन्यथाख्यातिवादेऽपि स व्याख्यातुं समुद्यतः ॥’’ इति ।

अत्र पूर्व[4]परामृष्टभवदासपितृव्यं विशेषतः प्रकृतवादे समुपदेशकमनुस्मृत्य शङ्करपूज्याख्यं स्वपूजनीयतामात्रपुरस्कारेणानुसन्धत्ते कञ्चन महात्मानम् । यदि सम्भावनामात्रविषयार्थगोचरं सामान्यशब्दं विशेषे पर्यवस्थापयितुं प्रभवन्ति संयोगादयः[3], तर्हि शक्यमत्रापि शङ्करपूज्य ऋषेः भ्राता प्रकृतपरमेश्वरस्य पितृव्य इत्यध्यवसातुम् । न किलैतावता कश्चन प्रमाणेन परिच्छिन्न ऋषेर्भ्राता शङ्कर इति । स्वदितङ्करणीकारः शङ्करशिष्यमात्मानमावेदयन् स्वगुरुं तं स्वकुलाङ्कुरमपि न सूचयतीति न खलु संभाव्यम् ;

---

१. नीतितत्त्वाविर्भावव्याख्या Adyar Library XXXIX. A. 8. P. 323. 9.

२. ,, P. 252. 7.

३. ‘‘संयोगो विप्रयोगश्च’’ वाक्यपदीयम् ।

४. प्रास्ताविके P. 14. 2, 7.

न वा तत्पौत्रभावार्हस्य शङ्कर इति नाम न संभाव्यम् । प्रतीतं हीदमत्र दक्षिणापथे पितरः पुत्रान् स्वपितृनाम्नैवाङ्कयन्तीति, विशेषतश्च केरलब्राह्मणकुलेषु सर्वज्येष्ठमात्रायत्तकुलप्रतिष्ठेषु पितरः स्वपितृव्यनामभिरपि सत्यवकाशे पुत्रानङ्कयन्तीति । एवं चायं शङ्करोऽपि ऋषिपुत्रपरमेश्वरस्य पितृव्यो भवितुमर्हतीति सम्भावनायां न किञ्चिद्बाधकं पश्यामः । अयमेव शङ्करो वा स्यात् योगभाष्यविवरणसांख्यजयमङ्गलादीनां कर्तेत्यादिकमत्राप्रकृतमिति समये समालोचयिष्यामः ।

इयता प्रबन्धेन ऋषिप्रभृतयो भ्रातरः पञ्चेति, "[1]ऋषिं पितरमानम्य" इति परमेश्वरवचनात् सर्वज्येष्ठस्यैव तत्कुलसम्प्रदायेन कुलकरत्वात् स्वपिता ऋषिः सर्वज्येष्ठ इति, "[2]भवदासमवन्तरम्" इति तस्यैव वचनात् विशेषाभावेन स्वपितुरव्यवहितो भ्राता भवदास इति च सिद्धं भवति । सुब्रह्मण्यवासुदेवशङ्कराणां त्रयाणां कालतः परावरभावं निर्णेतुं पूर्वनिर्दिष्टेषु ग्रन्थेषु न किमपि गमकमुपलभ्यते ।

अथात्रैव ग्रन्थ उत्तरसन्दर्भे दृष्टिं प्रसारयामः—एवमन्यथाख्यातिवादं व्याचक्षाणोऽयं [3]नयतत्त्वात् कञ्चनांशमनूद्य "[4]विस्तरेणायं पक्षो विभ्रमविवेकव्याख्यावसरे नयतत्त्वसङ्ग्रहोक्तप्रकारेण सह दूषितोऽस्माभिरित्युपरम्यते" इति अत्रापि विभ्रमविवेकव्याकर्तृतामात्मनः प्रख्याप्य तद्वादान्ते—

"[5]व्याकरोदन्यथाख्यातिवादं गोपालिकासुतः ।
साक्षात्प्रतीतिवादे च व्याख्यातुमयमुद्यतः ॥"

१. स्वदितङ्करणीकृत ऋषेश्च पितृपुत्रभावः अनुपदं स्फुटीभवति ।

२. स्फोटसिद्धिव्याख्यान्ते ।

३. नीतितत्त्वाविर्भावव्याख्या. Adyar Library XXXIX. A. 8. P. 361. 7.

४. ,, P. 367. 6.

५. ,, P. 390.

इत्यत्रापि स्वमातरं गोपालिकामनुस्मृत्य समनन्तरकल्पनापोढवादान्ते तद्वादोप-संहारमनन्तरयोगरूढिवादारम्भं चेत्थं निबध्नाति—

“[1]गणेशस्य प्रसादेन वृषक्षेत्रनिवासिनः ।
कल्पनापोढवादस्य व्याख्या तावत्कृता मया ॥

अभिवन्द्य हृषीकेशं वृषक्षेत्रनिवासिनम् ।
व्याख्यानं क्रियते योगरूढिवादेऽपि शक्तितः ॥” इति ।

अत्र निर्दिष्टौ वृषक्षेत्रनिवासिनौ गणेशहृषीकेशौ न मानुषौ ; अपि तु देवौ । वृषक्षेत्रं च ग्रन्थकर्तुर्निवासदेशात् (पोर्कळम्) प्राग्भागे मार्की पञ्चदशक्रोशदवीयसि देशे साम्प्रतं श्रीशिवपुरम् (Trichur) इति प्रसिद्धं यत् तदेव । तदात्वे चैतस्य वृषक्षेत्रमिति संज्ञा संस्कृतव्यवहारिभिः समादृतेति को[2]किलसन्देशात् अन्यतश्च विज्ञायते । अधुनापि केरलेष्वसामान्यतया परिगण्यमानेऽस्मिन् वृषक्षेत्रे प्रतिष्ठापितेषु बहुषु देवेषु देवदेवो भगवान् वृषध्वजः प्रधानतया परिगण्यते । प्रकृतग्रन्थकर्ता च [3]कर्मप्रत्यक्षवादोपक्रमे—

“अथ नत्वा महादेवं वृषग्रामनिवासिनम् ।
कर्मप्रत्यक्षवादस्य व्याख्या प्रस्तूयते मया ॥”

इति तमपि देवदेवं भगवन्तं प्रणमति । मनोवैभववादान्तश्लोकाविमौ—

“[4]मनोवैभववादोऽयं व्याख्यातः साम्प्रतं पुनः ।
मरुद्विहायःप्रत्यक्षवादो व्याख्यायते स्फुटम् ॥

---

१. नीतितत्त्वाविर्भावव्याख्या Adyar Library XXXIX. A. 8. P. 424.
२. कोकिलसन्देशः १. ८१. रत्नकेतूदयम्. प्रस्तावना.
३. नीतितत्त्वाविर्भावव्याख्या. P. 492.
४. „ P. 484.

योो न्यायकणिकाव्याख्यामकरोत् परमेश्वरः ।
तस्य पौत्रेण तत्सूनोरेवान्तेवासिना स्वयम् ॥" इति ।

अत्र न्यायकणिकाव्याख्याता परमेश्वर इति, स च आत्मनः पितामह इति च स्फुटतरमेव निरूपितमनेन । एवं च चरमपरमेश्वरविद्यागुरुः शङ्करोऽन्यथापि (पितृव्यत्वेनापि) यदि गुरुर्भवेत् तस्य, तदा मध्यमपरमेश्वरपितृव्यतां प्रथमशङ्करपौत्रतां च मध्यमः शङ्करोऽर्हतीति सिद्धम् । संभाविनीयं किलेदम् —प्रथमपरमेश्वरः स्वपुत्रस्य कनीयसः स्वपितृव्यनामैव विधातुमर्हतीति ।

## ५ स्वदितङ्करणी.

अयं स्वदितङ्करणीग्रन्थः अत्यन्तशिथिलो जीर्णश्चोपलभ्यमानः करस्पर्शमपि सोढुं न शक्नोति, तथापि कथमपि परिशील्य तमस्माभिरुपलब्ध-मुपनीयते । अत्र ग्रन्थादौ—

"जुषध्वङ्करणीव्याख्या रचितास्माभिरादितः ।
स्वदितङ्करणीव्याख्या संप्रतीयं (वितन्यते) ॥"

इति दृश्यते । अत्र निर्दिश्यमानायाः परमेश्वरकृतेर्जुषध्वङ्करण्या एकापि मातृका तदा बहुप्रयतमानैरपि नास्माभिरासादिता, नाप्यद्ययावदासाद्यते, यतो वयमितिवृत्तमस्य समग्रमुपलभेमहि । आसादितायाश्च स्वदितङ्करण्या अस्मात् प्रथमश्लोकात् साकृतिरस्यैव जुषध्वङ्करणीति । तृतीयश्लोकव्याख्यानोपसंहारे च वाक्यमिदं दृश्यते—"इति श्रीमदृषिगौरीनन्दनश्रीभवदासपितृव्य-श्रीमच्छङ्करपूज्यपादाशिष्यपरमेश्वरकृतौ स्वदितङ्करण्यां तृतीयः श्लोकः" इति ।

---

१. Oriental Mss. Library. Madras. R.No. 3595. P.1.
२. „ „ P. 68.

अनेन च वाक्येन स्वस्य पिता ऋषिः, माता गौरी, पितृव्यः भवदासः, श्रीशङ्करभगवत्पूज्यपादः गुरुः इति च स्पष्टमुक्तम् । अत्र "भवदासपितृव्य" इत्यत्रान्यार्थप्रधानं समासं औचित्यादाश्रित्यास्माभिरिदमुक्तमिति तत्त्वदृशो निरूपयन्तु । अयं गुरुः श्रीमच्छङ्करपूज्यपादश्च ग्रन्थान्ते च स्मर्यतेऽनेन यथा—

"श्रीमच्छङ्करपूज्यस्य शिष्येण.......... ।
....... ...तेनेयं व्याक्रिया कृता ॥" इति ।

अयमेव शङ्करपूज्यपादः योगाभष्यविवरणादीनां कर्ता संभाव्यत इत्यन्यदेतत् । किञ्चायं परमेश्वरस्य न केवलं विद्यागुरुः अपि तु पितृव्योऽपि भवितुं नियतमर्हतीति तत्त्वाविर्भावव्याख्याविमर्शप्रस्तावे निरूपितमेवास्माभिः । केरलीयेषु व्यपदेशार्हेषु कुलेषु विशिष्य ब्राह्मेषु क्षात्त्रेषु च नियतः कश्चन सम्प्रदायोऽस्ति, यत् जन्मना प्रथमस्येयं संज्ञा, द्वितीयस्येयम् , तृतीयस्येयमिति प्रतिनियता संज्ञा कर्तव्येति । अद्यत्वे नियमस्यास्य वैयाकुली कुहचन नास्तीति न, तथापि क्वचिदवैकल्यमप्यस्ति । अधुनापि माटभूपालकुले प्रथमस्य रामवर्मेति द्वितीयस्य केरलवर्मेति तृतीयस्य रविवर्मेति च क्रमेणैव संज्ञां समाद्रियमाणामुपलभामहे । चतुर्थादिषु चास्या एव संज्ञात्रय्या यथाक्रमं पुनरावृत्तिः । एवं च यथा गोपालिकासूनोः परमेश्वरस्य पितृव्यो भवदासः स्वपितुर्द्वितीयः पुत्रः स्यादिति, ( पूर्वमुक्तम् ) तथा गौरीसूनोः परमेश्वरस्य पितृव्यो भवदासः स्वपितुर्द्वितीय पुत्रः स्यादिति केरलीयकुलसंप्रदाय-नियमानुरोधात् अनुगुणमेव संपद्यते । तथा गोपालीसूनोः अनिर्ज्ञातक्रम-पितृव्यतया संभावितः शङ्कराख्य इवायमपि श्रीमच्छङ्करपूज्यपादः गौरीसूनोः परमेश्वरस्य पितृव्यो भवितुमर्हतीत्यत एव संप्रदायनियमानुरोधात् सिध्यति । इयांस्तु—गौरीसूनुपितृव्येन परिव्राजाप्यभावीति भवितव्यम्—इति विशेष इति ।

१. Oriental Mss. Library. R. No. 3630. end.

अयमेव श्रीमच्छङ्करपूज्यपादः पातञ्जलयोगभाष्यविवरणकर्तेति अस्माकमभ्यूहः। ग्रन्थसङ्ग्रहकार्ये नियुक्तैरस्माभिः पूर्वम् "इदं पय्यूर् भगवत्पादकृतम्" इतीदं वाक्यमस्यैव ग्रन्थस्य मातृकायामन्तर्दृष्टमिति साधीयसी संभावना। कदाचिदन्यत्र दृष्टमन्यत्रेति मन्वानेन मया भ्रान्तेनापि शक्यं भवितुमिति, तस्य ग्रन्थस्य कश्चन भागः स्फोटसिद्धिरसिकैरवश्यदर्शनीय इति च स भागः चतुर्थानुबन्धतयात्र परीक्षकदृष्टिपथमवतारितः।

## ६. मीमांसाकाशिकाटिप्पणी

मीमांसाकाशिकाटिप्पण्या मातृकैकैवास्माभिरुपलब्धा; सा चासमग्रैव। "श्रुतार्थं तु परित्यज्य लक्षणार्थो विधीयते।" इति प्रतिज्ञासूत्रस्थवार्तिक-व्याख्यायाः "यथाश्रुतभाष्यस्वरसभङ्गश्चैवं सति न भविष्यतीति" इति काशिकाया व्याख्यामुपक्रममाणा सैषा क्वचित्क्वचित्किञ्चित्किञ्चिदुन्मीलयन्त्येव प्रयाति। झगिति सकृदेवैनामवलोकयितुमवाप्तसमयसंनिवेशैरस्माभिः इयदत्र वदितुं शक्यम्—इयं काशिकाटिप्पणी सूत्रार्थसङ्ग्रहकर्तुः तृतीयपरमेश्वरस्यैव कृतिरिति।

एतावता परमेश्वरकृतितया संभाव्यमानानां षण्णां प्रबन्धानां परामर्शादयमस्माकं गोपालिकाप्रणेता परमेश्वरः परिच्छिन्नोऽप्यन्यतः कियदपि नैव देशकालाभ्यां परिच्छिन्नः। यद्यपि शास्त्रदीपिकानयविवेकनयतत्त्व-सङ्ग्रहप्रभृतीनां ग्रन्थानामनुवादात् कलौ पञ्चचत्वारिंशात् (४५००) शतकात् अर्वाचीन इति परिच्छिन्नः सामान्यतः, तथापि विशेषतोऽपरिच्छिन्न इति, देशतो न कथञ्चिदपि परिच्छिन्न इति च तत्रोपायमुद्दण्डकविमुपादद्महे—

१. N--72—13. Govt. Mss. Library, Madras.
२. Trivandrum Sanskrit Series P. 37.

उद्दण्डकवेः कोकिलसन्देशेऽन्तर्भूतानि त्रीणि पद्यानीमानि—

"किञ्चित् पूर्वा रणखलभुवि श्रीमदध्यक्षयेथा-
स्तन्मीमांसाद्वयकुलगुरोः सद्म पुण्यं महर्षेः ।
विद्वद्बृन्दे विवदितुमनस्यागते यत्र शश्व-
द्व्याख्याशालावलभिनिलयस्तिष्ठते कीरसङ्घः ॥ ७८ ॥

शास्त्रव्याख्या हरिहरकथा सत्क्रियाभ्यागताना-
मालापो वा यदि सह बुधैराक्षिपेदस्य चेतः ।
तद्विस्रब्धद्विजपरिवृते निष्कुटद्रौ निषण्णः
कोकूयेथाः स खलु मधुरां सूक्तिमाकर्ण्य तुष्येत् ॥ ७९ ॥

श्लाघ्यश्छन्दःस्थितिमयि मया शोभनेऽर्थे नियुक्तं
श्राव्यं शब्दैः सरससुमनोभाजमभ्रान्तवृत्तिम् ।
दूरप्राप्त्या प्रशिथिलमिव त्वां सखे काव्यकल्पं
धीमान् पश्येत् स यदि ननु ते शुद्ध एव प्रचारः ॥ ८० ॥" इति ।

अत्र प्रथमद्वितीयपद्याभ्यां **शम्बरक्रोडवृषपुरयो**र्मध्यवर्ती रणखलाख्यः (पोर्कळं) देशः भट्टश्रीपरमेश्वरपितुः ऋषेर्निवासपात्रमासीदिति, ऋषिश्च बहुतन्त्रनिष्णातो गृहाश्रमधर्मनिरतः स्वनिरतिशयभक्तिबहुमानपात्रमासीदिति च स्फुटमवगमयति कविः । किञ्च भङ्ग्या तृतीयेन तस्य रसिकवरतां तदभ्युपगमप्रत्ययसंपादनीयनिरर्गलनिष्कलङ्कग्रन्थप्रचारतां च केरलानां प्रकटयति ।

लिपिवशात् केरलमात्रकृतसञ्चारममुमुद्दण्डकोकिलमभितो भुवनमण्डल-

---

१. Printed at Mangalodayam Press. Trichur, Malabar.
Oriental Mss. Library. Madras. II. a. 170. 1. 78, [79, 80.

२. मुद्रितपुस्तके "निष्कटात्रौ" इत्यपपाठः

मुत्पिपातयिषुरस्माकं सुहृत् ब्रह्मश्री अनन्तनारायणशास्त्री प्रसाधयंस्तमुपोद्घाते एवं विलिखति—"अपि च, अयं (उद्दण्डकविः) केरलेषु प्रतिष्ठितयशसां **पय्यूराढ्य**भूसुराणां परमप्रणयपात्रमासीदिति सन्देशादस्मादेवावसीयते । एतेऽपि (पय्यूराढ्यभूसुराः) सामूतिरिमहाराजसभालङ्कारभूता इति सर्वजनसंमतमिदम् । ६०२ कोलम्बाब्दे समधिगतजनुषः तन्त्रसमुच्चयप्रणेतुः **जयन्तमङ्गलाढ्य**द्विजवरस्य समानकालिकोऽयमिति, तदीयतन्त्रसमुच्चयान्तर्गतं "शङ्खप्रेङ्खचटुल" इत्यादिपद्यं उद्दण्डप्रणीतमिति च वर्तते वार्ता । अष्टमकोलम्बशताब्दादौ समुत्पन्नात् गुरुवायुपुरेशचरणनलिनचञ्चरीकात् **नारायणभट्टपादात्**[१] प्राचीनमिदं कोकिलसन्देशकाव्यं भवितुमर्हति । नासीच्च कोकिलसन्देशकाले **गुरुवायुपुरस्या**साधारणोऽद्ययावदुपलभ्यमानो महात्म्यातिरेकः । कथमन्यथा तत्संनिकृष्टेन वर्त्मना कोकिलं प्रहिण्वन्नेवं विस्मरेत् तमतिपावनं पवनपुरालयम् ?" इति ।

इदमुपोद्घातप्रतिपादानुगुणं कलौ षट्चत्वारिंशशतकपूर्वभागे व्यवतिष्ठमानोऽयमुद्दण्डकविश्रिषु कमप्यृषिं स्वकाले व्यवस्थापयति । अस्यैवोद्दण्डकवेः कृतिर्**मल्लिकामारुत**मस्ति काचित् । तत्र प्रस्तावप्रघट्टके कविरात्मपाण्डित्यप्रकर्षप्रशंसिनं कञ्चिदृषिपुत्रपरमेश्वरं निदर्शयन् स्वयं साभिमानमेवमुदीरयति—

"[२]कथितमप्येतन्मीमांसकचक्रवर्तिना महर्षिपुत्रेण परमेश्वरेण—

वेदे सादरबुद्धिरुद्धततरे तर्के परं कर्कशः
शास्त्रे शान्तमतिः कलासु कुशलः काव्येषु भव्योदयः ।
श्लाघ्यः सत्कवितासु षट्स्वपि पटुर्भाषासु स त्वं क्षितौ
सर्वोद्दण्डकविप्रकाण्ड ! ददसे कस्मै न विस्मेरताम् ॥" इति ।

---

१. नारायणीयस्वाहासुधाकरमानोदयादिकर्ता मेप्पत्तूर्भट्टश्रीः.

२. Edited by Jeevananda Vidyasagar. 1878. P. 15.

अपि च, उद्दण्डप्रतिस्पर्धितया तत्काले केरलेषु आ पण्डितपामरमुद्घुष्यमाणः पण्डिताग्रणीः सामूतिरिमहाराजसभाविभूषणं काक्कश्शेरिभट्टश्रीः स्वप्रबन्धे स्वाश्रयसामूतिरिमानविक्रममहाराजनेतृके वसुमतीविक्रमाख्ये नाटके प्रस्तौति कमप्यृषिमेवम्—

"यस्मिन् प्रीणाति वाणीकरतलविलसद्वल्लकीतौल्यभाजां
  स्रोता वाताशनाधीश्वरविशदशिरःकम्पडम्भावहानाम् ।
वाचां मोचामधूलीमधुररसजुषामुल्लसन्नैगमाध्व-
  श्रद्धालुः केरलक्ष्मातलतिलकमृषिः साहितीपारदृश्वा ॥" इति ।

एवं च पूर्वमस्माभिर्निरूपितानामृषीणां त्रयाणामृषिपुत्रपरमेश्वराणां चान्यतमाभ्यामेव भवितव्यमाभ्यामृषितत्पुत्रपरमेश्वराभ्यामिति, सर्वैश्च तैस्तत्सन्ताननिरन्तरावस्थितैरेव भूयत इति च हेतोः इयदत्र निर्धारयितुं शक्यम्, यत् ऋषयः परमेश्वराश्च कलौ चतुश्चत्वारिंशाच्छतकात्परं सप्तचत्वारिंशाच्च पूर्वमासामासुरिति । अत्र तन्त्रसमुच्चयकर्तुर्जयन्तमङ्गलाढ्यस्य निरुक्तकालसम्भवेऽपि तत्कालिक एवोद्दण्डकविरित्यत्र नैतिह्यादन्यत् दृढतरं प्रमाणमुपदर्शितम्, येन ऋषेः परमेश्वरस्य च कालः सुनिश्चितः संपद्येत । सन्ति च तुण्डीर(काञ्ची)मण्डलाभिजनस्य उद्दण्डस्य समयादिकं निर्णेतुं सम्यक् बहूनि साधनानि तत्काले तद्देशे च जातानां बहूनां सरसवाणीनामन्तर्वाणीनां च वाङ्मयानि परःसहस्रम् । तानि च सर्वाणि तदा तदा परीक्षकपरिशीलनापथमवगाह्य परिपूतानि असङ्कीर्णानि नीलकण्ठविजयनलचरित्रनाटकादिग्रन्थेषु तदुपोद्घातादिषु च सुलभसुदर्शानीति तल्लेखे न वयं व्याप्रियामहे । परं तु इयं दिक्—

---

१. पुन्नश्शेरिनम्बिनीलकण्ठशर्मणा पट्टाम्बिसंस्कृतविद्याशालाध्यक्षेण पत्रद्वारा निवेदितोऽयमंशः ।

२. Printed in the Trivandrum Sanskrit Series.

"अष्टात्रिंशदुपस्कृतसप्तशताधिकचतुःसहस्रेषु ।
कलिवर्षेषु गतेषु ग्रथितः किल नीलकण्ठविजयोऽयम् ॥"

इति **नीलकण्ठविजये** स्वकालं निरूपयतो **नीलकण्ठदीक्षितस्य** पितामह-भ्राता चतुरधिकशतप्रबन्धनिर्माता द्वासप्ततिवर्षजीवी तत्रभवानप्पयदीक्षितः कलौ षट्चत्वारिंशशतक एवावतस्थ इति निश्चप्रचम् । **तस्मिन्नप्पयदीक्षिते वेदान्तकल्पतरुं** व्याचक्षाणे **बालकवि**स्तमेवमुपश्लोकितवानिति **नीलकण्ठ-दीक्षितः स्वनलचरित्रनाटक**प्रस्तावनायां प्रतिपादयति । यथा—

"स खलु **कल्पतरुं** व्याचक्षाणः स्वयं **बालकवि**नैवमुपश्लोकितः—

'**अप्पदीक्षित** ! किमित्यतिस्तुतिं वर्णयामि भवतो वदान्यताम् ।
सोऽपि **कल्पतरु**रर्थलिप्सया त्वद्गिरामवसरं प्रतीक्षते ॥' इति ।"

तस्य **चाप्पयदीक्षित**समकालिकस्य **बालकवेः** कृती **रत्नकेतूदयं** नाम रूपकमस्ति । तदेतदितश्चत्वारिंशवत्सरात्पूर्वं **कुम्भघोणे श्रीविद्यामुद्राक्षर-शालायां** संपादयता भट्टश्रीबालसरस्वतीपण्डितनारायणसुदर्शनेन तदुपोद्घाते एवमुदीर्यते —

"इदं खलु **रत्नकेतूदयं** नाम नाटकं मार्की पञ्चाशदुत्तरशतसंवत्सरेभ्यः प्राक् **केरलेषु कुक्कुटक्रोडनगरे** (Calicut,) कलितराज्यभारस्य श्रीमान-विक्रमभूपतेः काले तस्यैव राज्ञः सदसि स्थितवता **तुण्डीरमण्डलमण्डनायमाने** महति **मूलाण्डनामन्यग्रहारे** (मुल्लण्डम्) समुपजातेन **बालकविना**, तत्कालममुमेव महीपालमाश्रितेन **मल्लिकामारुतप्रणेत्रा**—

'पलायध्वं पलायध्वं रे रे दुष्कविकुञ्जराः ।
कवितावनसञ्चारी क्रामत्युद्दण्डकेसरी ॥'

---

१. Printed in the Bālamanoramā Press, Mylapore,
२. Do [Madras.

इत्यभिख्यापिताख्येन **उद्दण्डकविना** स्पर्धमानेन कृतमिति श्रूयते । कविसंवादोऽप्यस्ति बहुषु पद्येषु संविधानेषु च **कविभवभूतिनिर्मितस्य मालती-माधवस्य अस्य च मल्लिकामारुतस्य च**" इति । संपादकेन प्रतिपादितमिदं तत्रैव प्रस्तावनायां स्फुटमुक्तमेवेति तत्रैव पश्यन्तु समालोचकाः । अनेनापि **कविरुद्दण्डः** षट्चत्वारिंशशतकवर्तीति समञ्जसमेव पूर्वोक्तमपि । अत एवायमस्माकमृषिपुत्रपरमेश्वरः प्रायः प्रख्यातान् मीमांसाग्रन्थानुदाहरन्नपि विधिरसायनादिकान् नोदाहरतीति युक्तम् ; दवीयानसौ समानकालिकस्य दीक्षितस्य वा ततोऽनन्तरस्य **खण्डदेवादेर्वा** ग्रन्थान् कथमुदाहरतु ?

अत्र माध्यस्थ्यमवलम्ब्य वयमौचित्यात् गोपालिकाकर्तारमृषिपुत्रपरमेश्वरं मध्यमं निर्दिष्टकालमध्यवर्तिनं च मन्यामहे । अनेन परमेश्वरेण गोपालिकायामन्यत्र च "नन्दगोपसुता देवी वेदारण्यनिवासिनी" इत्यादिभिरुट्टङ्किताः प्रदेशादयो नास्माभिरधुना निरूप्यन्ते साधनवैकल्यात् । 'वेळक्काटु' इति भाषायां प्रसिद्धः पय्यूर्भवनात् नातिदवीयान् देशः वेदारण्यमिति, तत्रत्या देवी पय्यूराढ्यानां कुलदेवतेति, अद्यापि तैरन्यैश्च सा तथा सेव्यत इति च **किलिमङ्गलं ब्रह्मश्रीनारायणनम्पूतिरिमहामहोपाध्यायः** कृपया मामावेदयति ।

यत् केचित्—

"मण्डनाचार्यकृतयो येष्वतिष्ठन्त कृत्स्नशः ।
तद्वंश्येन मयाप्येषा रचिताराध्य देवताम् ॥"

इत्यस्मिन् गोपालिकाश्लोके "येनाधीयन्त कृत्स्नशः" इति पाठं मातृकान्तरस्थं प्रतिजानते ; तत्तु वयं कथमप्यङ्गीकुर्मः । यत्तु तस्मिन् पाठे 'येन' इति यद्वृत्तेन परमेश्वर आत्मानं परामृशति 'तद्वंश्येन' इति तद्वृत्तेन मण्डनाचार्यं चेति मण्डनवंश्यममुमन्यामहे— इत्यादि, तत्तु न क्षोदक्षममिति परीक्षका एव पश्यन्तु ।

इतोऽप्यधिकमेषामितिवृत्तमुपदर्शयन्ति वाङ्मयानि स्फोटसिद्धिगोपालिका-कर्तुः परमेश्वरस्य पितृव्येन वासुदेवकविना निर्मितानि (१) शिवोदयः (२) देवीचरितम् (३) सत्यतपःकथा (४) अच्युतलीला (५) चकोर-सन्देशः इति सन्ति पञ्च काव्यान्युपलब्धानि । सर्वाणि च तानि चतुश्शतवर्षदेशीयानि अलब्धमातृकान्तराणि अनतिस्फुटाक्षराणि विशरणो-न्मुखानि तालपत्रमयानि तदात्वे अस्माभिर्नियुक्तैः मद्रपुरराजकीयप्राच्य-पुस्तकभाण्डागारकृते तत एव प्रणेतृकुलात्समाहृतानि तदधिकृतैश्च यथा-मातृकं विलेखितानि समातृकाणि च तत्रैव वर्तन्ते । एषु च सन्देश-व्यतिरिक्तानि यमकमयानि चेत्यतोऽपि हन्त किमस्ति तच्चरितविशेषसमास्वाद-लालसानामस्माकमाशाभङ्गकारणम् ? तत्कुलप्रसूतेः विभ्रमविवेकव्याख्यायाः शिथिलाप्येका मातृका न लभ्यत इति, तद्गवेषणेऽप्युदरम्भरयो न वयं प्रभवाम इति, केरलीयेषु वा कश्चित्पुण्यपुरुषः नात्र श्रद्धत्त इत्यतोऽपि नापरमस्ति निवेदनीयमस्माकं महाजनेषु । चरित्ररसिकाः स्वयं समास्वाद्य तादृशानि तुष्यन्तु तोषयन्तु च तादृशानित्यभ्यर्थनापूर्वकं प्रकृतपरमेश्वरकुलसं-निवेशं सङ्ग्रहेण परिमितैः पद्यैः सुग्रहमवतारयामि—

अस्ति कुन्नङ्कुळं नाम जनावासोऽधिकेरलम् ।
वर्तते तत्र भूभागः ख्यातः पोर्कलसंज्ञया ॥

गुरुवायुपुरक्षेत्रमुत्तरा दक्षिणा निलाम् ।
तथा शिवपुरात् पश्चात् प्रागब्धेरेष वर्तते ॥

तत्र पय्यूरिति ख्याते भवने सुचिरादपि ।
विशुद्धा विदुषी काचित् भट्टश्रीपदभाजनम् ॥

वसन्ती वर्ततेऽद्यापि केरलब्रह्मसन्ततिः ।
पञ्चम्यां च सहस्राब्द्यां पञ्चमे शतके कलौ ॥

सन्ततौ तत्र समभूदृषिरन्वर्थसंज्ञकः ।
भवदासोऽनुजस्तस्य ज्यायान् गौर्या गृहीकृतः ॥

उपलेभे सुतं तस्यां परमेश्वरनामकम् ।
श्रीमच्छङ्करपूज्येन विनीतोऽयं गृहान् गतः ॥

निर्वर्तयन् प्रत्यहं च गृहधर्माननाविलम् ।
वाचस्पतिकृतां न्यायकणिकां स्फुटयन् स्वयम् ॥

जुषध्वङ्करणीमेकां स्वदितङ्करणीं पराम् ।
द्वे व्याख्ये व्यधिताद्यात्र न दृष्टा दृश्यते परा ॥

किञ्चार्कतेजसः पुत्रान् धर्मदारेष्वजीजनत् ।
तत्राद्यस्तेजसां राशिरभूदृषिरिति प्रथाम् ॥

सुब्रह्मण्यो वासुदेवो भवदासश्च शङ्करः ।
अनिर्ज्ञातक्रमास्त्वेते चत्वारोऽवरजाः श्रुताः ॥

ऋषिस्तु सहधर्मिण्या साध्व्या गोपालिकाख्यया ।
यथा वसिष्ठोऽरुन्धत्या निरुवाह गृहाश्रमम् ॥

ब्रह्मवर्चसराशिः स लेभे तनयमात्मवान् ।
परमेश्वर इत्यात्मपितामहसमाख्यया ॥

प्रतीतो भवदासाद्यैः स्वपितृव्यैर्विशेषतः ।
विनीतः सर्वशास्त्रेषु परं पारमगाहत ॥

व्याचचक्षे स्फुटं तत्त्वाविर्भावं तत्त्वबिन्दुकम् ।
तं विभ्रमविवेकं च स्फोटसिद्धिमिमां तथा ॥

ऋषिस्तनूजस्तस्याभूदृषेश्च परमेश्वरः ।
सूत्रार्थसङ्ग्रहस्तद्वत्काशिकाटिप्पणी तथा ॥

उभे कृती प्रादुरास्तामेतस्मात् परमेश्वरात् ।
सरस्वतीवान्तरेव वहन्तीतो न दृश्यते ॥

इयती ग्रन्थतो दृष्टा पर्य्यूराढ्यपरम्परा ।
मूर्त्या श्रीनीलकण्ठाढ्यभट्टश्रीर्दृश्यतेऽधुना ॥




अस्याः सव्याख्यायाः स्फोटसिद्धेर्मुद्रापणेऽस्माभिरवलम्बिता मातृकास्तिस्रः, यासु प्रथमा अस्मदीया मूलसंमिलितव्याख्यामयी समग्रा शुद्धा क. संज्ञिता, द्वितीया मद्रपुरप्राच्यपुस्तकभाण्डागारीया तादृश्येव ख. संज्ञिता, तृतीया तदगारीया केवलमूलमयी तादृश्येव मूलसंज्ञिता ।

तद्भाण्डागाराधिकृतैश्च यावन्मुद्रणकार्यकालं द्वे अपि ते मातृके यथानियममस्मदायत्तीकृत्य बहूपकृतमिति न केवलं वयम्, अस्मन्मुखेन मद्रपुरविश्वविद्यालयाध्यक्ष्यमपि विशेषतस्तमुपकारमनुस्मरति ।

किञ्च, अधिकारधोरण्या सहकृत्वानावपि स्वरसतोऽपि बहुधा प्रकृतग्रन्थमुद्रापणे दर्शितोपकारौ सहृदयौ सि. कुह्नन् राजमहोदारः टि. आर्. चिन्तामणिमहोदयश्चात्र प्रशंसापात्रमित्यावेदयामि ।

अन्यच्च, इतः संपादकतः कदाचिदनिवार्यतया समुपनतेष्वपि मुद्राशालाक्लेशेषु केष्वपि स्वयमनिर्विद्य निरवद्यमेव निजकार्यभारं निर्व्यूढवान् मद्रपुर ला जर्नल् मुद्रालयस्वामी श्रीमान् आर्. नारायणस्वाम्यार्यः सानुनयं च सप्रमोदं च अभिनन्द्यते ।

अहो ! आ प्रक्रमोङ्कारमा चोपसंहारोङ्कारमनुपदमन्तरुदञ्चन्नपि कोऽपि अनिर्ज्ञातप्रकारकथ इति अधुनापि वा कथमुपादातव्यः ? अथ वा—

अक्षराभ्याससन्दर्भे न वाचस्पतिमाददे ।
तादृशे गुरुकार्येऽसौ निर्वृत्ते वर्ततां पुरः ॥

शे. कृ. रामनाथशास्त्री

———

ओम्

# ॥ स्फोटसिद्धिः ॥

(आचार्यमण्डनमिश्रप्रणीता)

**योगदान्तैकदृश्यात्मा यो गदान्तकरो नृणाम् ।**

**तत्त्वावस्थाणवे तस्मै तत्त्वावस्थाणवे नमः ॥ १ ॥**

---

# ॥ गोपालिका ॥

## स्फोटसिद्धिव्याख्या

(ऋषिपुत्रपरमेश्वरकृता)

---

अभिवन्द्य महादेवं महादेवीं गणेश्वरम् ।
कृतिर्मण्डनमिश्राणां स्फोटसिद्धिर्विविच्यते ॥

प्रकरणमारभमाणोऽविघ्नपरिसमाप्त्यादिसिद्धये गुणसंकीर्तनलक्षणया स्तुत्या कायवाङ्मनःप्रह्वतालक्षणया प्रणत्या च विशिष्टदेवतां पूजयति—

योगदान्तैकदृश्यात्मा यो गदान्तकरो नृणाम् ।
तत्त्वावस्थाणवे तस्मै तत्त्वावस्थाणवे नमः ॥ १ ॥ इति ।

तस्मै स्थाणवे नमः । कस्मै ? योगदान्तैकदृश्यात्मा यो भवति; योगाद्दान्त उपरत एको दृश्यस्यात्मा यः सः । योगः संयोगः परामर्शः, एकः केवलः, दृशिः द्रष्टा पुरुषः, दृशिस्वरूपस्य पुरुषस्य कर्मविषयतामापन्नं दृश्यम्, तस्यात्मा स्वरूपम्; तदेवं दृश्यात्मनः ईश्वरसंयोगादुपरतत्वं वदता संसारदुःखहेतुराहित्यं दर्शितम् । यथोक्तं योगपातञ्जले—"द्रष्टृदृश्ययोः संयोगो हेयहेतुः" इति ।

द्रष्टा बुद्धेः प्रतिसंवेदिता पुरुषः, दृश्याः बुद्धिसत्त्वोपारूढाः सर्वधर्माः; तदेवं द्रष्टृदृश्ययोः पुरुषप्रधानयोरनादिरर्थकृतः संयोगो हेयहेतुः दुःखस्य कारणमित्यर्थः ।

ननु मुक्तानां प्रकृतिलयत्ववैदेह्यप्राप्तानां च दृश्यात्मसंयोगो नास्त्येव । अत उक्तमेकेति ; प्रकृतिलयत्ववैदेह्यप्राप्तानामुत्तरापि बन्धकोटिरस्त्येव, मुक्तानां पूर्वा ; ईश्वरस्य तु दृश्यात्मा केवलः ; न केवलं वर्तमानकाले संयोगरहितः, किं तु पूर्वोत्तरकालयोरपि संयोगरहितः; एकरूप एव त्रैकाल्येऽपीत्यर्थः ।

ननु यथा प्रकृतिरन्यान् पुरुषान् बध्नाति, एवमीश्वरमपि पुरुषत्वाविशेषाद्बध्नात्येव ; अत उक्तं तत्त्वाव इति । अथ वा योगदान्तः एकः दृशिः आत्मा चेति विग्रहः । तत्र तावद्योगाद्दान्त ईश्वरः, क्लेशादियोगादुपरत इत्यर्थः । एकः प्रधानमैश्वर्यवानित्यर्थः । दृशिः द्रष्टा सर्वस्य, सर्वज्ञ इत्यर्थः । आत्मा उत्कृष्टात्मा, पुरुषविशेष इत्यर्थः । तदुक्तम्—"क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः" इति । अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः; कुशलाकुशलानि कर्माणि, तद्विपाको जात्यायुर्भोगाः; आशेरत इत्याशयाः कर्मवासनाः, धर्माधर्माविति यावत् ; तैरपरामृष्टः । तथापि मुक्तात्मभ्यश्च प्रकृतिलयत्ववैदेह्यप्राप्तेभ्यश्च क्लेशादिभिरपरामृष्टेभ्योऽस्य भगवतो न भेद इत्याशङ्क्योक्तं पुरुषविशेष इति । मुक्तात्मनां खलु पूर्वा बन्धकोटिः, उत्तरापि विदेहप्रकृतिलयानां सनत्कुमारप्रभृतीनां समस्ति; तस्य भगवतोऽयमेव विशेषस्तेभ्यः, यः क्लेशादीनामिह त्रैकाल्यविवेक इत्यर्थः । स्वाभाविकमस्यैश्वर्यमिति द्योतयितुमुक्तमेकेति ; धर्मजत्वे हीश्वरत्वस्य, य एव तद्वान् स एवेश्वरः ; बहवश्च तद्वन्त इति तद्वशाद्बहव ईश्वराः प्रसज्येरन्निति । तथा सर्वज्ञत्वमपीश्वरस्यास्ति । तदप्युक्तम्—"तत्र निरतिशयं सर्वज्ञबीजम्" इति । अथ वा "योगश्चित्तवृत्तिनिरोधः" इति लक्षित एव योगः, योगेन योगाभ्यासेन दान्तस्य जितान्तरायौपसर्गिकस्य पक्वचित्तस्य योगिनः एकस्यैव दृश्यः द्रष्टव्य आत्मा यो भवति ; यस्यात्मनो योगदान्तैकदृश्यत्वमुपदिश्यते, स एष एवेत्यर्थः । अथ वा योगदान्तैकदृश्य आत्मा रूपं यस्य सः तथोक्तः । यथाहुः—

"स्वाध्यायाद्योगमातिष्ठेद्योगात्स्वाध्यायमामनेत् ।
स्वाध्याययोगसम्पत्त्या पर आत्मा प्रकाशते ॥" इति ।

योगपातञ्जलेऽप्युक्तम्—"ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च" इति ।

तथा—"योगान्तरायास्तस्याथ जायन्ते युञ्जतः पुनः ।
नश्यन्तेऽभ्यासतस्तानि प्रणिधानेन वै गुरोः ॥
सन्त्याज्यं सर्वथा सर्वमौपसर्गिकमात्मनः ।"

तथा—"आत्मविद्याप्रदीपेन स्वस्थेनाचञ्चलेन तु ।
प्रसादघृतपूर्णेन सत्त्वपात्रस्थितेन तु ॥
तमो निहत्य पुरुषः पश्यति स्वात्मनीश्वरम् ।
तस्य प्रसादाद्वै धर्मश्चैश्वर्यं ज्ञानमेव च ॥
वैराग्यमपवर्गश्च नात्र कार्या विचारणा ।" इति ।

"व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपा योगान्तरायाः" इति । "दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः" इत्यन्तरायौपसर्गिककथनं तत्रैव कृतम् ।

यो गदान्तकर इति । यश्च गदानामन्तं करोति, "प्रथमो दैव्यो भिषक्" इति श्रुतेः । संसाररोगस्य शमयिता वा तन्मूलभूताविद्यादिनिराकरणद्वारेण । यथाहुः—

"अविद्यां विद्यया तीर्त्वा स्थितस्यैवेह योगिनः ।
क्रोधाद्या वशमायान्ति धर्माधर्मौ च वै द्विजाः ॥
तत्क्षयाच्च शरीरेण न पुनः संप्रयुज्यते ।
स एव मुक्तः संसाराद्दुःखत्रयविवर्जितः ॥" इति ।

नृणामिति पुरुषाणामित्यर्थः । न जातिविशेषमवस्थाविशेषं वापेक्ष्य भगवतो गदान्तकरत्वमिति भावः । यथोक्तम्—

"गर्भस्थो जायमानो वा बालो वा तरुणोऽपि वा ।
वृद्धो वा मुच्यते जन्तुः प्रसादात्परमेष्ठिनः ॥
अण्डजो वोद्भिजो वापि स्वेदजो वा विमुच्यते ।
प्रसादाद्देवदेवस्य नात्र कार्या विचारणा ॥" इति ।

न केवलमीश्वरदर्शनस्य दुःखनिवृत्तिः प्रयोजनम्, किं तु निरतिशयानन्दप्राप्तिरपीति सूचयतोक्तं तत्त्वाव इति । तच्छब्देन ईश्वरः परामृश्यते; तस्य भावस्तत्त्वम्; न चान्यस्यान्यात्मता संभवतीति गौणोऽयं वादः; अवति करोति, अवतेः क्रियार्थ-

तात्र विवक्षिता; स्वसारूप्यकर इत्यर्थः । तथा च श्रुतिः—"निरञ्जनः परमं साम्यमेति" इति ईश्वरसादृश्यापत्तिमेव मुक्तस्य दर्शयति । तथा भगवद्गीतावचनम्—

"इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥" इति ।

ननु—"वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य ।
पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ॥"

इति न्यायात् प्रकृतिरेव गदान्तकरीत्यत आह—तत्त्वाव इति । तत्त्वान्यवतीति तत्त्वावः, तत्त्वानि च पञ्चविंशतिः—

"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥" इति ।

तत्र च द्विधा समय इति वचनम्—

"केचित् प्रधानं त्रिगुणं कारणं प्रवदन्ति तु ।
ईश्वरस्तदधिष्ठातेत्याहुरन्येऽनुमानतः ॥" इति ।

ये पुनरीश्वररूपमाहुस्तेषां[1] मतमाश्रित्य प्रस्तुतं योगेत्यादि । अनुमानं च—विमतं सकर्तृकम्, कार्यत्वात्, घटवत्; प्रकृत्यादयश्चेतनाधिष्ठिताः कार्यहेतवः, अचेतनत्वात् वास्यादिवदित्यादि । यथोक्तम्—

"प्रधानं पुरुषं चोभौ प्रविश्यात्मेच्छया हरिः ।
क्षोभयामास सम्प्राप्ते सर्गकाले व्ययाव्ययौ ॥" इति ।

तत्त्वाव इति च प्रलयकालेऽपि तावत्प्रधानपुरुषौ रक्षति, अवगच्छति च सर्गकालः सम्प्राप्त इति, इच्छति च बहु स्यामित्यादि, प्राप्नोति च प्रधानपुरुषौ प्रविशति च, प्रविश्य च क्षोभयति सर्गसमर्थौ करोति, ईष्टे चेति योज्यम्; एकोनविंशतिः किलावतेरर्थाः—"अवरक्षणगति(कान्ति)प्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यसामर्थ्ययाचनक्रियेच्छादीप्त्यावाप्त्यालिङ्गनहिंसादहन(दान)भागवृद्धिषु" इत्युक्तत्वात् । स्थाणव इति । तिष्ठतीति स्थाणुः ।

"तिष्ठतेः स्थाणुरित्येवं स्थाणुशब्दं निरब्रवीत् ।"

१. ईश्वरमाहुः ख.

स एव च स्थाणुः। यथोक्तम्—

"स्थाणुत्वं तस्य वै विप्राः शङ्करस्य महात्मनः॥" इति।

अनेनाविक्रियत्वं सूचयति। यथोक्तम्—

"यथा सान्निधिमात्रेण गन्धः क्षोभाय जायते।
मनसो नोपकर्तृत्वात् तथासौ परमेश्वरः॥" इति।

एवमौपाधिकेन रूपेण कथञ्चिन्निर्देष्टव्यत्वमीश्वरस्य, नैजेन रूपेण त्वनिर्देश्य एवेत्युक्तम्। तत्त्वावस्थाणव इति। तत्त्वावस्थायां स्वाभाविकरूपावस्थायां निरूप्यमाणायामणुरेव सूक्ष्म एव, दुर्विज्ञेय एवेत्यर्थः; "यतो वाचो निवर्तन्ते" इत्यादिश्रुतेः। एवमेव तार्किकपाशुपतपाञ्चरात्रिकपौराणिकादिमतेनापि श्लोको व्याख्येयः। तत्त्वाव इत्यत्र तु तत्तदङ्गीकृततत्त्वविवक्षया तत्त्वपदं व्याख्येयम्; अन्यत्तुल्यमेव। यथोक्तम्—

"वैशेषिकैर्जगत्सर्वं षट्पदार्थोपलक्षितम्॥" इति।

"षोडशैवाक्षपादेन जगत्संग्रहकारिणा।
पदार्थाः सर्ववाग्वाच्याः श्रेयस्सिद्धेर्निरूपिताः"॥ इति।

"कारणादींश्च दुःखान्तपर्यन्तान् पञ्च मन्वते।
पदार्थान् सर्वशब्दानामर्थान् पाशुपताः परान्॥" इत्यादि।

"पञ्चरात्रे तु संक्षेपाद्विष्णुसंकर्षणावुभौ।
प्रद्युम्नश्चानिरुद्धश्च जगत्संग्रहहेतवः॥
एक एव चतुर्व्यूह एष नारायणोऽथ वा।" इति।

एवमन्यत्रापि द्रष्टव्यम्। सांख्ययोगयोरपि पदार्थौ द्वावेव केषांचित्। यथोक्तम्—

"प्रकृतिं पुरुषं चान्ये द्वैतिनो द्वयमाश्रिताः।
तत्रैव महदादीनामीश्वरस्य च सम्भवात्॥" इति।

अत्रापि चेतनः पुरुषो भोक्ता, तत्संयोगकृदीश्वर इति समानमेव ब्रह्मवादिमतेऽपि व्याचक्षते; ब्रह्मवादेऽपि द्वैतवादिनस्तावत्सन्त्येव। यथोक्तम्—

"द्वैतमाहुरिदं त्वन्ये ब्रह्मद्वयनिबन्धनम्।
शब्दब्रह्मपरब्रह्मरूपेण ब्रह्मवादिनः॥

शब्दब्रह्मैव तेषां हि परिणामि प्रधानवत् ।
वैखरी मध्यमा सूक्ष्मा भागवस्था विभागतः ॥" इति ।

अत्रापि पूर्ववदेव व्याख्या तत्त्वशब्दे, न तु शब्दब्रह्म विवक्ष्यते । ब्रह्माद्वैतवादेऽप्यस्य व्याख्या; तत्रापि द्वैविध्यं परिणामवादो विवर्तवादश्चेति । तत्र परिणामवादे व्याख्यातप्रायम् । विवर्तवादे तु तत्त्वावस्थाणव इत्यत्र भेदः । ईश्वरो हि संसारावस्थायां स्थूलपृथिव्याद्यात्मना विवर्तते, परमार्थावस्थायामणुरेव सूक्ष्म एव । यथोक्तम्—

"मायामात्रमिदं चैवमित्याह हि परा श्रुतिः ।
दृश्यत्वाद्विमतं मिथ्या शुक्तिकारजतादिवत् ॥" इति ।

तच्च ब्रह्म अर्थरूपमिति शारीरकमीमांसाविदः, शब्दात्मकमिति वैयाकरणाचार्या इति । क्वचित्तु योगदान्तक इति पाठः ; तत्र दान्त एव दान्तक इति द्रष्टव्यम् । अस्य पदस्य प्रथमयोर्व्याख्ययोर्योगस्य दान्त इति विगृह्य योगादुपरत इति लक्षणया व्याख्या ; पश्चिमे तु व्याख्याने तृतीयासमास एव ॥

इति स्फोटसिद्धिव्याख्यायां गोपालिकायां

प्रथमः श्लोकः

---

**दुर्विदग्धैरवक्षिप्ते दर्शने पददर्शिनाम् ।**
**यथागमं यथाप्रज्ञं न्यायलेशो निदर्श्यते ॥ २ ॥**

---

अथ चिकीर्षितं प्रतिजानीते---

> दुर्विदग्धैरवक्षिप्ते दर्शने पददर्शिनाम् ।
> यथागमं यथाप्रज्ञं न्यायलेशो निदर्श्यते ॥ २ ॥ इति ।

ये पदं पश्यन्ति दर्शयन्ति च पाणिन्यादयस्तेषां दर्शने सिद्धान्ते वर्णातिरिक्तं पदमित्येवंरूपे युक्तिः प्रदर्श्यतेऽस्माभिः । अनेन च प्रकरणस्य प्रयोजनं दर्शितम् । तच्च वर्णातिरिक्तपदप्रतिपादनं नाम; शास्त्रस्य हि शब्दसाधुत्वं विषयः; वाचकत्वं च साधुत्वम्; तच्च वर्णातिरिक्तस्यैव संभवतीति वक्ष्यते । शास्त्रकार्यान्तरे स्थितत्वादस्य शास्त्रैकदेशसम्बन्धोऽपि । "सुप्तिङन्तं पदम्" "अर्थप्रयुक्ते शब्दप्रयोगे" "येनोच्चरितेन" इत्यादौ; अतः प्रकरणमस्माभिः क्रियत इत्यनेन सूचितं भवति । यथोक्तं भट्टपादैः—

> "शास्त्रैकदेशसम्बद्धं शास्त्रकार्यान्तरे स्थितम् ।
> आहुः प्रकरणं नाम शास्त्रभेदं विपश्चितः ॥" इति ।

अत्र च पदं जिज्ञासुरधिकारी, पदस्वरूपज्ञानं प्रयोजनम्, 'गौः' इत्यादिप्रत्ययो विषयः, साध्यसाधनभावः सम्बन्ध इति च सूचितम् । एतच्च ग्रन्थादाववश्यवक्तव्यम्—

> "सर्वस्यैव हि शास्त्रस्य कर्मणो वापि कस्यचित् ।
> यावत्प्रयोजनं नोक्तं तावत्तत्केन गृह्यते ॥" इति न्यायात् ।

ननु पूर्वाचार्यैरेवोत्क्षिप्तमिदं दर्शनम्, किमनेन तावकेन प्रकरणेन? अत उक्तं दुर्विदग्धैरवक्षिप्त इति । अवक्षेपो निन्दा; यावन्तोऽन्ये तीर्थिकास्तैः सर्वैरवक्षिप्ते, प्रतितन्त्रसिद्धान्तत्वादस्य । ननु सर्वतीर्थान्तरविरुद्धत्वादिदमेव दर्शनमसाधीय इत्यत उक्त दुर्विदग्धैरिति । सर्वे हि तीर्थिकाः कार्त्स्न्येनास्मत्सिद्धान्तमजानन्तः स्वसिद्धान्तानुरागवन्तोऽस्यावक्षेपं कुर्वते; अतोऽस्मिन् विषये न ते निपुणाः, किं तु निपुणमन्या एवेति भावः । एवं च वदता पूर्वा-

चार्योक्ता युक्तयो हेत्वाभासैः परोक्तैस्तिरोऽधीयन्त, तन्निराकरणेनास्माभिः प्रदर्श्यन्त इति दर्शितं वेदितव्यम् ।

नन्विदं पदं प्रसिद्धमप्रसिद्धं वा? न चेत्प्रसिद्धं नानेन प्रतिपादनीयं, शशविषाणवत्; अथ प्रसिद्धम्, न प्रतिपाद्यं, पिष्टपेषणन्यायात् । अत आह—दुर्विदग्धैरित्यादि । 'गौः' इत्येकं पदमित्येवं पददर्शिनां लौकिकानामृषीणां च दर्शने पदविषये प्रत्यक्षज्ञाने अवक्षिप्ते सतीत्यर्थः । अथ वा अवक्षिप्ते दर्शने तद्विषयत्वसाधिका युक्तिः प्रदर्श्यते । अवक्षेपश्च—

"वर्णत्रयपरित्यागे बुद्धिर्नान्यत्र जायते ।"

"को हि तर्कपथं प्राप्तं हेत्वभावादसाधनम् ।
विवादे साधयेदर्थं योगिगम्यप्रतिज्ञया ॥" इति द्रष्टव्यः ।

अतो वादिविप्रतिपत्तेः सन्दिग्धत्वात्प्रतिपिपित्सितं पदमस्य विषय इति दर्शितम् ।

अपरा व्याख्या—किमर्थं त्वयेदं प्रकरणमारभ्यते? ननु वैयाकरणग्रन्थेभ्यः शिष्या एव प्रतिपद्यन्तां तद्दर्शनं लौकिकप्रतीतेश्च वर्णातिरिक्तपदविषयताम्; अत आह—"दुर्विदग्धैरवक्षिप्ते दर्शने पददर्शिनाम्" इति । शिष्या हि भट्टपादाद्युक्तयुक्तिव्यामोहितान्तःकरणा वर्णानामेव वाचकत्वमभिमन्यमाना वैयाकरणसिद्धान्तमेवावजानते । कथयन्ति च दुर्विदग्धा भूत्वा—नैतद्वैयाकरणदर्शनं यद्वर्णातिरिक्तं पदमिति हरिमिश्रादिभिरुक्तम्; न हि सूत्रवार्तिकयोः स्फोटो नामाङ्गीकृतः; भाष्यमपि येनोच्चारितेनेत्यादिकमर्थप्रत्यायकत्वाद्वर्णानां तद्विषयमेवेति व्याचक्षते । 'गौः' इत्येकं पदमित्यादि लौकिकदर्शनमपि वर्णविषयमेवेत्याहुः । अतस्तद्व्यामोहविनिवृत्तय इदं प्रकरणमारभ्यत इति ।

ननु वेदविरुद्धमिदं दर्शनं न वेदवादिभिरङ्गीकार्यम् । यथोक्तम्—

"वर्णातिरिक्तः प्रतिषिध्यमानः
पदेषु मन्दं फलमादधाति ।
कार्याणि वाक्यावयवाश्रितानि
सत्यानि कर्तुं कृत एष यत्नः ॥" इति ।

अत आह—यथागममिति । वर्णातिरिक्तो ह्यङ्गीक्रियमाणो वेदस्य प्रामाण्यमापादयति; इतरथा वर्णानामवाचकत्वेन प्रामाण्यस्यैवासम्भवात् वाक्यावयवाश्रितानि

तु कार्याणि गत्यन्तरासंभवादपोद्धृत्य कल्पनया समर्थ्यन्ते । "साक्षात्कृतधर्माणः" इत्यादिस्मृत्यागमाः, "एतं मन्त्रमपश्यत्" इत्यादिश्रुत्यागमाश्च स्फोटपक्ष एव समञ्जसा भवन्ति—इति समर्थयन्त इति स्फोटपक्षस्यैव वेदानुसारित्वमिति भावः । अथ वा—न चाहमत्र किञ्चित्स्वतन्त्रो भूत्वाभिधास्यामीति दर्शयतोक्तं यथागममिति । पूर्वाचार्यग्रन्थानुसारेणेत्यर्थः । सम्प्रदायानुरूपेणेति वा ; यथास्मदाचार्यैरस्मभ्यमुपदिष्टं तथैव; न ततोऽन्यत्स्वयं किञ्चिदुत्प्रेक्ष्येति भावः ॥

न च तदपि कार्त्स्न्येन वक्तुं पारयामः; किं तु अस्मच्छक्त्यनुसारेणैवेत्युक्तं यथाप्रज्ञमिति । अथ वा—आगमाविरोधि तदुपपादकं च यत्किञ्चिदस्मत्प्रज्ञानुरोधेनापि दर्श्यत इति ।

न्यायलेश इति । दिङ्मात्रमत्र प्रदर्श्यते, शेषन्तूहापोहविचक्षणाः स्वयमेव जानन्त्विति भावः । निदर्श्यत इति । दर्शिते हि न्याये शुक्तिकाज्ञान इव रजतज्ञानं हेत्वाभासोत्थितो विपर्ययः स्वयमेव विलीयत इति भावः । ननु पूर्वग्रन्थकारैः कृतेऽपि न्यायदर्शने हेत्वाभासैर्विपर्यस्यन्ति शिष्याः; तथा भवत्कृतेऽपि दर्शने ; अत आह--नीति । नितरां प्रकर्षेणेत्यर्थः । यथा दर्शिते हेत्वाभासा न प्रादुष्युस्तथेति यावत् ॥ अथ वा--निदर्शनं दृष्टान्तकथनम् ; गौणश्चैष वादः; यथा दृष्टान्त उभयवादिसिद्धः, एवं न्यायोऽपि वादिप्रतिवादिसिद्ध इह दर्श्यत इति प्रकर्षोपपत्तिः ॥

इति स्फोटसिद्धिव्याख्यायां गोपालिकायां

द्वितीयः श्लोकः

**किं पुनरिदं पदं नाम? शब्दः। कः पुनरिह शब्दोऽभिप्रेतः? किं वर्णाः? नेत्याह। अपि तु—**

**अर्थावसायप्रसवनिमित्तं शब्द इष्यते।**

---

दुर्विदग्धैरित्याक्षेपमसहमानश्चोदयति—**किं पुनरिदं पदं नाम** इति। किं शब्द एव, उत तदतिरिक्तं किंचिदित्यर्थः। परिहरति—**शब्दः** इति। न शब्दातिरिक्तम्, किं तु शब्द एवेत्यर्थः। चोदयिता आह—**कः पुनरिह शब्दोऽभिप्रेतः** इति। 'गौः' इत्यत्र भवतां कः पुनः शब्दतयाभिप्रेतः[१] इति। स एवाह—**किं वर्णाः** इति। वर्णातिरिक्तस्य शब्दत्वाभावादित्यभिप्रायः। परिहरति—**नेत्याह** इति। न वर्णाः शब्दतयाभिप्रेता इति परिहर्ताहेत्यर्थः। श्लोकस्य पातनिकामाह—**अपि तु** इति। किं पुनः शब्दतयाभिप्रेतमित्यर्थः। पूर्वार्धमुपादत्ते—अर्थेति। एवं वर्णवादिनश्चोदयितृत्वे व्याख्या।

अथ वा—वर्णवाद्युक्तयुक्तिविपर्यासितमतिर्वैयाकरणश्चोदयति—**किं पुनरिदं पदं नामेति**। ननु वर्णात्मकमेवेदमिति भावः। परिहर्ताह—**शब्दः** इति। "येनोच्चरितेन" इत्याद्युक्तलक्षणो वर्णातिरिक्त इत्यभिप्रायः। चोदयिताह--**कः पुनरिह शब्दोऽभिप्रेतः? किं वर्णाः** इति। येनोच्चरितेनेत्यादिभाष्यमपि वर्णविषयमेवेति भावः। परिहर्ताह--**नेत्याह** इति। येनोच्चरितेनेत्यादिना 'वर्णः शब्दः' इति न भाष्यकार आहेत्यर्थः। **अपि तु** इति। किं पुनरनेन भाष्यकार आहेत्यर्थः।

वर्णवादिनश्चोद्ये एवमर्थः—**पददर्शिनामिति** प्रस्तुतम्, 'गौः' इत्येक पदम्—इत्यादि प्रतीयमानं वा पदं नाम यद्वस्तु, किं पुनरिदमिति। उत्तरं शब्द इति। "अथ शब्दानुशासनम्" इत्यत्राधिकृतः शब्द इत्यर्थः। चोदयति—कः पुनरिति। अनेन च "अथ गौरित्यत्र कः शब्दः" इति भाष्यमर्थत उपक्षिप्तमिति वेदितव्यम्। अत्र "येनोच्चरितेन" इत्याद्युक्तमेवोत्तरमित्याह—नेत्याहेति। अपि त्विति व्याख्यातुं पूर्वार्धमुपादत्ते—

---

१. एव च. ख.

**यथोक्तम्—"येनोच्चरितेन" इत्यादि । नन्वेवं धूमादयोऽपि धूमकेतनादिप्रत्ययोपदर्शितसामर्थ्यातिशयाः शब्दतामश्नुवीरन्, तथैकैकवर्णाश्च तद्विधर्म-**

अर्थावसायप्रसवनिमित्तं शब्द इष्यते इति ।

इष्यत इत्यत्र भाष्यकारेणेति दर्शयितुमुक्तम्—**यथोक्तम् "येनोच्चरितेन" इत्यादीति** । उत्तरार्धमवतारयितुं शङ्कामाह—**नन्वेवं........व्यपदिश्येरन् इति** । धूमकेतनादिकर्मकप्रत्ययैरुपदर्शितं स्वगोचरं सामर्थ्यं येषामिति विग्रहः । सामर्थ्यातिशया इति पाठे बहुव्रीहिणा सह कर्मधारयः । धूमकेतनादिप्रत्ययोपदर्शितसामर्थ्याः; अत एवातिशया इति । अतिशयशब्देनातिशयवन्तो लक्ष्यन्ते । अथ वा अतिशेरत इत्यतिशयाः, पचादित्वादच् प्रत्ययः; अतिशायिन इत्यर्थः । अथ वा धूमकेतनादिप्रत्ययैरुपदर्शितः सामर्थ्यात्मा अतिशयो येषाम्, धूमकेतनादिप्रत्ययोपदर्शितेन सामर्थ्येनातिशयो येषामिति वा विग्रहः । हेतुहेतुमतोर्भेदाद्वैयधिकरण्यमभेदोपचारात् सामानाधिकरण्यम्; वैयधिकरण्येऽपि दर्शितः सामर्थ्येनातिशय इति वा विग्रहः । भावान्तरेभ्योऽतिशयः येनातिशयेन स्फोटस्य शब्दता सोऽतिशयो धूमादिष्वप्यविशिष्ट इत्यनेन दर्शितम् । येनोच्चरितेनेत्याद्युक्तं यत् शब्दलक्षणम्—अर्थावासायप्रसवनिमित्तमित्युपक्षिप्तम्, तस्यात्र समन्वयो विग्रहादिना[1] दर्शित इत्यनुसन्धेयम् । एतेच्चोक्तम्[2]—

"अग्न्यादीन् गमयन्तोऽपि शब्दा धूमादयो न हि" । इति ।

एवमतिव्याप्तिर्दर्शिता । अव्याप्तिमपि दर्शयति—**तथेति** । एकैके वर्णा इति विग्रहः । तद्विधर्मतया उक्तलक्षणशब्दवैलक्षण्येनार्थप्रत्ययोपदर्शितसामर्थ्याभावादित्यर्थः । तथा शब्दतयेत्यर्थः । तदप्युक्तम्—

"न चाप्रत्यायकत्वात्स्यादेकवर्णेष्वशब्दता ।" इति ।

१. विग्रहाधीन　क, ख.　　२. अत एवोक्तम् . क.

**तया न तथा व्यपदिश्येरन् । अन्योऽपि वाचकः सङ्गतिसंवेदनसमयत-श्च पुरः श्रवणेन्द्रियावसेयोऽपि न 'शब्दः' इति निगद्येत, पश्चाच्च तथोच्येत ; तत्र 'गौः' इत्येष शब्दोऽशब्दश्चापद्येत । न चेदं चतुरश्रम् ; लोका-**

---

दोषान्तरमाह—**अन्योऽपि........अशब्दश्चापद्येत** इति । अन्योऽपि वाचक इति । एकैकवर्णेभ्योऽतिरिक्तः समुदायः, ततोऽप्यतिरिक्तः स्फोटात्मा वा यो वाचकत्वसंमतः शब्द इत्यर्थः । सङ्गतिसंवेदनसमयत इति । सम्बन्धौत्पत्तिकत्ववा-दिनां सङ्गतिसंवेदनात् कृत्रिमसम्बन्धवादिनां समयादिति । अथ वा सङ्गतेः संवेदनात् समयाच्च, ग्रहणादुपदेशाच्चेति ।

अथ वा सङ्गतिसंवेदनकालादित्यर्थः । सङ्गतिसंवेदनसमयस्येति वा पाठः; अर्थस्तु पूर्ववत् । चशब्द उत्तरापेक्षया । पुरः पुरस्तात् । श्रवणेन्द्रियावसेयोऽपीति । अनेन शब्दशब्दप्रवृत्त्यर्हतां सूचयति । यथोक्तम्—"श्रोत्रग्रहणे ह्यर्थे लोके शब्दशब्दः प्रसिद्धः" इति । न शब्द इति निगद्येतेति । अर्थप्रत्यायकत्वाभावात् । पश्चाच्चेति । सङ्गतिसंवेदनसमयानन्तरमित्यर्थः । तथोच्येतेति । शब्द इति व्यप-दिश्येतेत्यर्थः । तदप्युक्तम्—

"न च प्रागर्थविज्ञानाच्छ्रोत्रग्राह्ये न शब्दधीः ।
न चार्थज्ञानतः पश्चादश्रोत्रेऽपि च शब्दता ॥" इति ।

ततः किमित्युक्तम्–तत्रेति । तथा सतीत्यर्थः । गौरित्येष शब्दोऽशब्दश्चापद्येतेति । यो गौरित्येष शब्दः सोऽशब्दश्चापद्येत; 'श्रवणेन्द्रियावसेयोऽपि न शब्द इति निगद्येत' इत्येतद्दूषणम्, न 'पश्चाच्च तथोच्येत' इत्येतत्--इत्यनेन दर्शितम् ।

अथ वा–गौरित्येष इत्युद्देश्यं शब्दोऽशब्दश्चेति विधेयम् । इदानीं पुरःश्रवणेत्यपि पश्चाच्चेत्यपि द्वयोरपि दूषणत्वमेव । न हि नियतशब्दत्वशालिनो नित्यस्य च शब्दस्य कालभेदेन शब्दत्वाशब्दत्वभाक्त्वमुपपद्यत इति । अस्त्विति चेत् तत्राह—**न चेदं चतुरश्रम्** इति । इदमिति धूमादयोऽपीत्येतत्तथैकैकेत्येतच्च

---

१. ततो व्यतिरिक्तः. ख. २. वादिनामसङ्गति—क, ख.

**धीनावधारणो हि शब्दार्थसम्बन्धः; लोके च श्रोत्रेन्द्रियविज्ञेयमात्रानुपातिनी शब्दशब्दप्रवृत्तिः। अतः श्रवणग्रहणतैव शब्दलक्षणं न्याय्यम्। वर्णा एव चेदं शब्दलक्षणमनुपतन्तीत्यभिधेयधीहेतुभावमनुपयन्तोऽपि लोकप्रसिद्धेस्त एव शब्दाः; तदतिरिच्यमानशरीरं त्वर्थवस्तु समुपेतसत्त्वाभिधातृभावमपि न-शब्दः इति व्यपदेशमनुपतितुमर्हति, लोकप्रसिद्धिविरहात्।**

---

अन्योऽपीत्येतच्च त्रयमित्यर्थः। कारणमाह—**लोकाधीनावधारणो...... लोकप्रसिद्धिविरहात्** इति। लोकाधीनेति। "सिद्धे शब्दार्थसम्बन्धे" "लोकतः" इति "लोके येष्वर्थेषु" इति चाङ्गीकरणात्। ततः किमित्याह—लोके चेति। लोको भुवनम्; तत्रापि वृद्धव्यवहारस्थानं जनो वा। स च व्यवहर्तृभूतः, व्यवहाराधीनत्वात् सम्बन्धावधारणस्य। अत्र लोक्येते शब्दार्थाविति वृद्धव्यवहार एव वा लोकः, व्यवहर्तृसमुदायो वा। यथोक्तम्—

"पूर्वप्रबन्धशब्दार्थसम्बन्धज्ञाः प्रयुञ्जते।
यं शब्दं यत्र तस्यार्थः स पार्श्वस्थैर्निरूप्यते॥
अदृष्टव्यवहारस्य शतकृत्वोऽपि शृण्वतः।
न कस्यचित् स्वतन्त्रस्य शब्दात् स्यादर्थनिर्णयः॥
लोक्येते चात्र शब्दार्थौ लोकस्तेन स उच्यते।
व्यवहारोऽथ वा वृद्धव्यवहर्तृपरम्परा॥" इति।

लोकाधीनमवधारणं यस्येति बहुव्रीहिः। शब्दार्थसम्बन्धः शब्दस्यार्थेन संम्बन्धः शब्दार्थयोः सम्बन्ध इति वा। श्रोत्रेन्द्रियविज्ञेयमात्रानुपातिनीति। श्रोत्रसंज्ञितेनेन्द्रियेण यद्विज्ञेयं वस्तु तन्मात्रानुपातिनी, न तद्व्यतिरिक्तानुपातिनीति। शब्दशब्दप्रवृत्तिरिति। शब्द इति शब्दस्य प्रवृत्तिरिति। अत इति। यतः श्रोत्रेन्द्रियविज्ञेयमात्रानुपातिनी, अस्मात्कारणादित्यर्थः। श्रवणग्रहणतैवेति। ग्रहणशब्दः कर्मसाधनः। एवकारेणार्थबोधकत्वं शब्दत्वं च व्यावर्तयति, "श्रोत्रग्रहणे ह्यर्थे शब्दशब्दः प्रसिद्धः" इत्युक्तत्वात्। शब्दलक्षणं न्याय्यमिति। शब्दस्य लक्षणं

---

१. पूर्वप्रसिद्ध—ख. २. संज्ञकेन. ख.

सजातीयविजातीयव्यावर्तकं रूपम्, न्याय्यं न्यायादनपेतम्[1]। लोकानुसारो हि परमो न्याय इति भावः। वर्णा एव चेदं शब्दलक्षणमनुपतन्तीति। न स्फोटात्मा, न च धूमादय इति। तदप्युक्तम्। "ते च श्रोत्रग्रहणाः" इति। व्याख्यातं च—

"परस्परानपेक्षाश्च श्रोत्रबुद्ध्या स्वरूपतः।
वर्णा एवावगम्यन्ते न पूर्वापरवस्तुनी॥" इति।

पूर्ववस्तुनिराकरणेनात्र वर्णावयवा निराकार्यतया प्रतिज्ञाताः; अपरवस्तु-निराकरणेन च गत्वमत्वमवयवी गोशब्दत्वं समुदायस्फोटात्मा च निराकार्यतया प्रतिज्ञाता वेदितव्याः। सर्वं चेदं पूर्वापरतया वर्गीकृत्य पूर्वापरवस्तुनी इति द्विवचनं प्रयुक्तम्। शब्दत्वव्यावर्तनं प्राभाकरमतानुसारेण। ततः किमित्याह— इत्यभिधेयेति। इति हेतोरभिधेयविषयां धियं प्रति हेतुभावमनुपयन्तोऽपि अनुप-गच्छन्तोऽपि लोकप्रसिद्धेः कारणात् त एव वर्णा एव शब्दाः शब्दशब्दवाच्याः। अनुपयन्तोऽपीत्यङ्गीकृत्यवादः।

अथ[2] वा उभयी हि वर्णावस्था, क्वचिदभिधेयधीहेतुभावं नोपयन्ति यथैकैकवर्णाः; क्वचिच्चोपयन्ति यथा गौरित्यादिसाहित्ये। तत्र यदि भवदुक्तयुक्त्या साहित्येऽपि नोपयन्ति, तथापीति व्याख्येयम्। तदतिरिच्यमानशरीरं त्विति। वर्णेभ्योऽतिरिच्यमानरूपमिति। अर्थवस्त्विति। द्वयी हि वस्तुस्थितिः—शब्दोऽ-र्थश्चेति। तत्रेदमर्थवस्त्वेव; न शब्दवस्तु, लोकप्रसिद्धिविरहादित्यभिप्रायः। समुपेत-सत्त्वाभिधातृभावमपीति। समुपेतावङ्गीकृतौ सत्त्वाभिधातृभावौ सद्भाववाचक-भावौ यस्य तत्तथोक्तम्। शेषं सुगमम्। तदप्युक्तम्—

"तस्माच्छ्रोत्रपरिच्छिन्नो यद्यर्थं गमयेन्न वा।
सर्वथा तस्य शब्दत्वं लोकसिद्धं न हीयते॥
यदि त्वर्थगता शक्तिर्न स्यादस्य ततः पुनः।
वस्त्वन्तरं प्रकल्प्येत विना शब्दप्रसिद्धितः॥" इति।

---

१. न्यायोपेतम्. ख.   २. Omitted अथवा. ख.

**तदिदमनिरूपितपरावरस्य परिचोदितम् । तथा हि—**

**तदेतत्प्रक्रमापेक्षं भाष्यकृत्प्रत्यपीपदत् ॥ ३ ॥**

**"अथ गौरित्यत्र कः शब्दः" इति हि प्रक्रमः । तत्र च नानाजातीयार्थमात्रोपहितोपरागां प्रख्याम् 'इति' परेण गोशब्देन निर्दिशति; दृष्टो ह्ययमितिशब्दो**

---

परिहरति—**तदिदमनिरूपितपरावरस्य** इति । न निरूपितः परो ग्रन्थ उत्तरो ग्रन्थः, अवरश्चाधस्तनो ग्रन्थो येन चोद्यवादिना स तथोक्तः । येनोच्चरितेनेत्येतावन्मात्रं गृहीतम्, न तस्य पौर्वापर्यालोचनेन तात्पर्यं निरूपितम् । परिचोदितं चोद्यम् । **तथा हि**—इत्युपस्कारः । उत्तरार्धमुपादत्ते—

तदेतत्प्रक्रमापेक्षं भाष्यकृत्प्रत्यपीपदत् ।

तदेतदित्येको निर्देशः । यदेतदर्थावसायप्रसवनिमित्तत्वं शब्दलक्षणम् तदेतत्प्रक्रममपेक्ष्य भाष्यकारः प्रतिपादितवान् । प्रक्रमापेक्षमित्यत्र प्रक्रमं दर्शयति—**"अथ गौरित्यत्र कः शब्दः" इति हि प्रक्रमः** इति । प्रक्रमादिति पाठे ल्यब्लोपे पञ्चमी; प्रक्रममपेक्ष्येत्यर्थः । तथा च प्रक्रमापेक्षमित्यस्य कृत्स्नस्य व्याख्यानमेतत् । अस्तु स प्रक्रमः, तमपेक्ष्य वा प्रत्यपीपदत्; ततः किमित्यत आह—**तत्र च नानाजातीयार्थमात्रोपहितोपरागां प्रख्याम् 'इति' परेण गोशब्देन निर्दिशति** इति । तत्रेति । अथ गौरित्यत्र भाष्य इत्यर्थः । नानाजातीयेनार्थमात्रेणोपहित उपरागो यस्या इति विग्रहः । अर्थशब्दो वस्तुवचनः, जातिद्रव्यगुणक्रियावर्णस्फोटसाधारणत्वात् । उपरागस्योपहितत्वं कृतत्वमेव, उपरागस्योपधानत्वात् पाकं पचतीतिवत् ।

अथ वा—उपराग आकारमेलनम्; स चार्थमात्रोपहितः, न स्वाभाविक इति । प्रख्यां प्रतीतिम् । इतिपरेणेति । इतिः परो यस्मादिति बहुव्रीहिः । गोशब्देन गोप्रातिपदिकनिष्पन्नेन शब्देन 'गौः' इति—इति । निर्दिशति अभिधत्ते । इतिशब्दस्य प्रख्यानिर्देशकत्वं निदर्शयन्नाह—**दृष्टो ह्ययमितिशब्दो विज्ञानमात्रप्रयोगः** इति । विज्ञानमात्रे प्रयोगो यस्येति बहुव्रीहिः । विज्ञाननिर्देशमात्रप्रधान इति वा पाठः । विज्ञानस्य निर्देशो विज्ञाननिर्देशः विज्ञाननिर्देशमात्रं प्रधानमीप्सितं

**विज्ञानमात्रप्रयोगः यथा 'गौः' इति मेऽभवदिति । तामेव च 'इति' शब्दनिर्दिष्टां प्रख्याम् 'अत्र' इति सर्वनाम्नाधिकरणतया परामृशत्याधेयमुपलक्षयितुम् । तत्प्रख्याप्रतिभासि च जातिद्रव्यगुणक्रियावर्णस्फोटात्मकमनेकमाधेयम्; ततः शब्दं निर्धारयितुमनाः पृच्छति—"कः शब्दः" इति । यथा क इह शालायां**

---

यस्येति बहुव्रीहिः । उदाहरति—**यथा 'गौः' इति मेऽभवदिति** इति । गवयं पश्यतो मे गौरिति विज्ञानमभवदिति यथेत्यर्थः ।

अथ वा लोको वदति—मया हि गवयसदृशी गौरिति श्रुतं नागरिकवचनात्; तद्बलान्मे पूर्वमदृष्टामपि गा पश्यतोऽन्यानपेक्षमेव गौरित्येवाभवदिति यथेति । ततः किमित्याह—**तामेव च 'इति' शब्दनिर्दिष्टां प्रख्याम् 'अत्र' इति सर्वनाम्नाधिकरणतया परामृशत्याधेयमुपलक्षयितुम्** इति । निर्दिशतीत्यत्र परामृशतीत्यत्र चाधिकारात् भाष्यकृदिति सिध्यति । किमर्थं पुनः इतिशब्दनिर्दिष्टामेव सर्वनाम्नापि परामृशति, अत उक्तमधिकरणतयेति । इतिशब्दो हि सर्वविभक्तिसाधारणः; तेन तन्निर्दिष्टा प्रख्यां सर्वनाम्ना सप्तम्यन्तेनाधिकरणतयावच्छिद्य परामृशतीति । अधिकरणतया परामर्शश्च न तन्मात्रपरः, किं तु तद्गतमाधेयमेवोपलक्षयितुमिति । अधिकरणाधेयशब्दाभ्यां लक्षणानिमित्तं सम्बन्धोऽपि सूचितः । एवं 'गौरित्यत्र' इत्येतद्व्याख्यातम्; 'कः शब्दः' इत्येतद्व्याख्यातुमारभते—**तत्प्रख्याप्रतिभासि ..........देवदत्त इति** इति । तस्याम् इतिशब्दनिर्दिष्टायां प्रख्यायाम् प्रतिभासि प्रतिभासमानमित्यर्थः । अनेन चाधाराधेयभाव ईदृशो गौणोऽत्र विवक्षित इति दर्शितम् । जातिद्रव्यगुणक्रियावर्णस्फोटात्मकमिति ।

"गुणानामाश्रयो द्रव्यं कारणं समवायि वा ।"

"कर्मणो व्यतिरिक्तत्वे जातिमात्राश्रयो गुणः ।"

"कर्म चासमवायि स्यात् यत्संयोगविभागयोः ।"

"सामान्यं नित्यमेकं सदनेकसमवायि च ।"

**देवदत्त इति । प्रत्यय एव वा प्रत्येतव्योपलक्षणप्रवणतया निर्दिश्यते । तदुपलक्षितं यत्तत् 'अत्र' इति निर्धारणसप्तम्या शब्दनिर्धारणाय निर्दिशति ।**

---

गकारादयो वर्णाः पदं वाक्यं च स्फोटः; एतच्च प्रकृतविषये भाष्यत एव द्रष्टव्यम् । अनेकमाधेयमिति । गौरित्येकवचनान्तानिर्धेयस्यैकत्वादाधेयमित्येकवचनम् । तस्य नानाजातीयात्मकत्वात् अनेकमित्युक्तम् । तत इति । आधेयस्यानेकत्वादित्यर्थः । शब्दं निर्धारयितुमनाः अनेकात्मकादाधेयान्निष्कृष्य शब्दं ग्राहयितुकामः । अथ वा ततोऽनेकस्मादाधेयाच्छब्द निर्धारयितुमना भाष्यकृत्पृच्छति—कः शब्द इति । अस्यां प्रख्यायां प्रतिभासमानानामाधेयानां जात्यादीनां मध्ये कः शब्द इत्यर्थ. । अत्रैव दृष्टान्तमाह——यथेति । यथैव हि क इह शालायामिति शालाशब्दः शालास्थपुरुषोपलक्षणार्थः शालास्थानां पुरुषाणां मध्ये को देवदत्त इति प्रश्नाभिप्रायः, एवं गौरित्यत्रापि सर्वनाम्ना प्रख्याया अधिकरणत्वनिर्देशोऽधिकर्तव्योपलक्षणार्थः; तत्प्रख्याप्रतिभासिषु च जातिद्रव्यगुणक्रियावर्णस्फोटात्मकेष्वनेकेष्वाधेयेषु कः शब्द इति प्रश्नार्थः । एवं तावत् इतिशब्दसर्वनाम्नोरेकविषयत्वमङ्गीकृत्याधिकरणत्वस्य विभक्त्यर्थस्याधेयोपलक्षकतया[1]भिधानमिति कृत्वा आधेयस्य च निर्धारणावधित्वमार्थिकमाश्रित्य व्याख्यातम् ।

सम्प्रति प्रकारान्तरेण व्याचष्टे——**प्रत्यय............निर्दिशति** इति । प्रत्यय एवेति । प्रथमं तावद्गौरिति गोशब्दनिर्दिष्टैः प्रत्येतव्यैः इतिशब्दनिर्दिष्टः प्रत्यय उपलक्षितः; पुनः स एव प्रत्ययः प्रत्येतव्योपलक्षणार्थः इति एवकारेण सूचयति । अथवा—इतिप्रातिपदिकोक्तः प्रत्यय एव प्रधानभूतः, न पुनः 'अत्र' इति निर्दिष्टमधिकरणत्वमङ्गमिति । अत्रापि प्रत्ययप्रत्येतव्यशब्दाभ्यां सम्बन्धः सूचितः । प्रत्येतव्योपलक्षणप्रवणतयेति । न पूर्ववत्स्वप्रवणतयेति । निर्दिश्यते इतिशब्देन । तदुपलक्षितं यदिति । प्रत्ययोपलक्षितं जात्याद्यनेकात्मकं यद्वस्त्वित्यर्थः । तदिति । निर्दिशतीत्यन्वयः । भाष्यकृदिति सिध्यति । केन निर्दिशतीत्यत उक्तम् अत्रेति इति । एषा च सप्तमी नाधिकरणे, किं तु निर्धारण एवेति सूचितम् निर्धारण-

---

१. विधान. क.

**एवंगते च प्रकृतप्रत्ययप्रतिभासिष्वेवार्थधीहेतोः शब्दत्वमवधार्यते इति कुतोऽन्यत्र प्रसङ्गः? न हि—'क इह शालायां कठः?' इति, यः कुण्डली—इत्यशालाधिकरणे कुण्डलिनि सम्प्रत्ययः। उपलक्षणत्वाच्चार्थप्रत्य-**

---

सप्तम्येति। शब्दनिर्धारणायेति निर्धारणसप्तम्यङ्गीकरणस्य सामञ्जस्यं दर्शयति। **पूर्वम्** 'इत्यत्र' इतिशब्दसामञ्जस्यम्, इदानीम् 'अत्र कः' इति सामञ्जस्यमिति तुल्यबलत्वाद्व्याख्ययोर्विकल्पः। एवं तावत् "अथ गौरित्यत्र कः शब्दः" इति प्रक्रमः; तस्य चैषोऽर्थः; ईदृशश्च प्रश्नमपेक्ष्य येनोच्चारितेनेति परिहार इति व्याख्यातम्।

इदानीमनेन पूर्वोक्तदोषपरिहारो यथा भवति तथा व्याचष्टे—**एवंगते च ........सम्प्रत्ययः** इति। एवंगत इति। चोद्यभाष्यस्यैवमर्थेऽवगते सतीत्यर्थः। प्रकृतप्रत्ययप्रतिभासिष्वेवेति। प्रकृते प्रक्रान्ते गौरिति प्रत्यये प्रतिभासिष्वेव जात्यादिषु मध्य इति, नान्येषु वस्तुष्विति। अर्थधीहेतोः शब्दत्वमवधार्यत इति। प्रकृतप्रत्ययप्रतिभासिषु योऽर्थधीहेतुस्तस्यैव शब्दत्वमवधार्यते "येनोच्चरितेन" इति भाष्येणेति। एषां मध्ये कः शब्द इति पृष्टे एषां मध्ये एवंरूपः—इत्युत्तरं सङ्गच्छते। इति कुतोऽन्यत्र प्रसङ्ग इति। इति हेतोः कुतोऽन्यत्र धूमादौ शब्दत्व-प्रसङ्गः। प्रसङ्गशब्दानन्तरमिति शब्दश्चेत् तदा अन्यत्र प्रसङ्गः—इति ज्ञानं वचनं वा कुत इति। एतदेव दृष्टान्तेन द्रढयन्नाह—न हीति। क इह शालायां कठः—इति चोद्यस्य परिहारात् य. कुण्डली—इत्येवंरूपात् अशालाधिकरणे कुण्डलिनि संप्रत्ययो न हि भवतीति।

एवं तावत् नन्वेवं धूमादयोऽपि इत्युक्तातिव्याप्तिः परिहृता। अन्योऽपि वाचकः—इत्याद्युक्तं परिहरन्नाह—**उपलक्षणत्वाच्चार्थप्रत्ययस्य............ कठताम्** इति। यत्प्रमेयमनुप्रविश्य प्रतिपादयति, तल्लक्षणम् यथा सम्यगनुभव-साधनत्वं प्रमाणताम्; यदननुप्रविश्य प्रतिपादयति, तदुपलक्षणम् यथा काक-निलयनं देवदत्तगृहस्य। अत्र च प्रक्रमापेक्षत्वादुपलक्षणस्यैवापेक्षा, न लक्षण-स्येत्यभिप्रायेणोक्तम्—उपलक्षणत्वाच्चार्थप्रत्ययस्येति। संविद्वैकल्यादिति। सम्बन्ध-

यस्य संविद्वैकल्यादनुपजनयन्नप्यर्थप्रत्ययं न शब्दतां जहाति यथा विमुक्तकुण्डलः कठताम् । अन्वाख्येयशब्दलक्षणं चार्थप्रत्ययः, "अथ शब्दानुशासनम्" इति प्रक्रमात् , तस्य च निर्जिज्ञासनात् ; एकैकवर्णेषु चाप्रत्यायकेषु नान्वाख्येयता ; शब्दमात्रलक्षणं त्वनुपकारकमेवेति न ते शब्दताम-

संविद्वैकल्यादिति सिध्यति । अनुपजनयन्नप्यर्थप्रत्ययमिति । उक्तरूपविकलोऽपीत्यर्थः । न शब्दतां जहातीति । लोकसिद्धां शब्दतां न परित्यजति । अत्रापि दृष्टान्तमाह—यथेति । न जहातीत्येव । एकैकवर्णाश्चेत्येतत्परिहरन्नाह—**अन्वाख्येयशब्दलक्षणं............शब्दतामतिपत्स्यन्ति** इति । अन्वाख्येयशब्दलक्षणमिति । लक्षणशब्देनोपलक्षणमेव विवक्षितम् । अनेन चार्धश्लोकस्य व्याख्यानान्तरमुपक्रान्तमिति वेदितव्यम् । कुतो ज्ञायत इति चेत् तत्रोक्तमथेति ; अन्वाख्यानं ह्यनुशासनमिति भावः । यदन्वाख्येयत्वेन शास्त्रेऽधिकृतं तस्यैव लक्षणं शास्त्रोपयोगि, नेतरस्येति भावः ।

यद्यप्यन्वाख्येयशब्दाधिकारस्तथापि "अथ गौरित्यत्र कः शब्दः" इत्यत्र यदि शब्दमात्रं जिज्ञासितं स्यात् तदा "येनोच्चरितेन" इति शब्दमात्रलक्षणं क्रियत इति शङ्क्येतापि, न चैवमित्युक्तम्—तस्य च निर्जिज्ञासनादिति । अन्वाख्येयशब्दस्येत्यर्थः । निर्जिज्ञासनादिति । निष्कृष्य ज्ञातुमिष्टत्वादित्यर्थः । "अथ गौरित्यत्र कः शब्दः" इति भाष्ये हि "केषां शब्दानाम्" इति पृष्ट्वा "लौकिकानां वैदिकानाम्" इत्याद्युक्त्वा लौकिका वैदिकाश्च विभज्य दर्शिताः । "तत्र गौरश्वः पुरुषो हस्तीत्येवमादयो लौकिकाः" इत्युक्तम् । तत्र लौकिकेषु प्रथममुपन्यस्तेषु "गौरित्यत्र कः शब्दः"—इति जिज्ञासा अथेत्यादिभाष्येणोक्ता, अन्यस्य काकदन्तवदजिज्ञास्यत्वादिति भावः ।

ननु वर्णानामेवान्वाख्यानं प्रतिज्ञातम्, त एव च निर्जिज्ञासिताः, अत आह—एकैकवर्णेषु चेति । एकैकवर्णेषु च नान्वाख्येयता कुत इत्युक्तम् अप्रत्यायकेष्विति । अर्थप्रयुक्तो हि शब्दः[1]; न चाप्रत्यायकैरर्थः सिध्यतीति । एकैकग्रहणेन

१. शब्दप्रयोगः. ख.

च वर्णसमुदाये स्फोटे वान्वाख्येयता संभवतीति सूचयति । ननु वैशेषिकादिवच्छब्दमात्रलक्षणं कर्तुमुचितम्, न तद्विशेषलक्षणमात्रम्; सामान्यलक्षणपूर्वकं च विशेषलक्षण वक्तुमुचितम् यथा "गुणानामाश्रयो द्रव्यम्" "तत्र गन्धवती भूमिः"—इत्यादि । अत आह—शब्दमात्रेति । अनुपकारकमेवेति । न ह्ययं भाष्यकारः प्रमाणादीनि पदार्थान् वा लक्षयितुमभिप्रवृत्तः, किं तु साधुशब्दान्वाख्यानाय । न च सामान्यलक्षणापेक्षा तस्य लोकसिद्धत्वात् । श्रोत्रप्रमेयो गुणः शब्द इति । यथोक्तम्—

"नेत्राद्येकाक्षगम्यत्वमर्थत्वे सति लक्षणम् ।
रूपस्य च रसस्यापि गन्धस्य स्पर्शशब्दयोः ॥" इति ।

अतो यदन्वाख्यानायोपयुज्यते तदेव लक्षयितुमुचितमिति तदेवक्तमिति भावः । इति न ते शब्दतामतिपत्स्यन्तीति । यतो न शब्दमात्रलक्षणमनेन क्रियते किं तु अन्वाख्येयशब्दलक्षणं न चैकैकवर्णा अन्वाख्येया इति स्थितमित्यतो हेतोर्नैव त एकैकवर्णा लोकप्रसिद्धा शब्दत्वसमवायकृतां शब्दशब्दवाच्यतामतिक्रामन्तीति । तदतिरिच्यमानशरीरं त्वित्यादिनोक्तमनुभाषते - **यदप्युक्तम् सतोऽपि वर्णातिरेकिणोऽर्थज्ञानहेतोर्न शब्दशब्दवाच्यता, शब्दप्रसिद्ध्यभावादिति** । तदतिरिच्यमानशरीरं त्वर्थवस्तु समुपेतसत्त्वाभिधातृभावमपीत्यस्यानुभाषणम्---सतोऽपि वर्णातिरेकिणोऽर्थज्ञानहेतोरिति । न शब्द इति व्यपदेशमनुपतितुमर्हतीत्यस्यानुभाषणम्---न शब्दशब्दवाच्यतेति । लोकप्रसिद्धिविरहादित्यस्यानुभाषणम्—शब्दप्रसिद्ध्यभावादिति । शब्द इति प्रसिद्ध्यभावादित्यर्थः ।

अथ वा शब्दस्य, शब्द इति शब्दस्य तस्मिन् प्रसिद्ध्यभावादिति । अथ वा शब्द ति भावप्रधानो निर्देशः । तस्मिन् शब्दत्वस्य प्रमाणान्तरेण प्रसिद्ध्यभावादिति । शब्दत्वेति वा पाठः । इतिशब्दः प्रकारार्थः । उक्तमित्यनेन

१. Omitted. इति. ख. २. -यन्तीति. ख.

**तिपत्स्यन्ति। यदप्युक्तम् सतोऽपि वर्णातिरेकिणोऽर्थज्ञानहेतोर्न शब्दशब्द-वाच्यता, शब्दप्रसिद्ध्यभावादिति। अहो लोकशास्त्रप्रसिद्ध्योः परः परिचयः यदिदमपि न दृष्टम् "शब्दादर्थं प्रतिपद्यामहे" "भावार्थाः कर्मशब्दास्तेभ्यः**

संबन्धनीयः। परिहरति—**अहो! लोकशास्त्रप्रसिद्ध्योः परः परिचयः** इति। अहो इत्याश्चर्ये। लोकप्रसिद्धिः शास्त्रप्रसिद्धिश्च लोकशास्त्रप्रसिद्धी तयोरिति षष्ठी सप्तमी वा। परः परिचय इति महानभ्यास इत्यर्थः। अनेन च वैपरीत्यं लक्षयति कातरे धीरशब्दवत्[1] उपहासार्थश्चैवं प्रयोगः। अनेन चानिरूपितपरावरस्येत्येत-दस्मिन् विषये न निरूपिताः परे शास्त्रकाराः प्राज्ञः अवरेऽद्यतना लौकिकाश्च येनेति व्याख्यातमिति वेदितव्यम्। प्रक्रमापेक्षमित्येतदपि। लोकशास्त्रप्रसिद्धी हि पदार्थतत्त्वप्रतिपादनस्योपक्रम इति भावः।

कुत इत्याह—**यदिदमपि................आचष्ट इति च** इति। यदित्यव्ययम्, यस्मादित्यर्थः[2]। अहो लोकेत्यनेन संबन्धः। तस्य चायमर्थः। तदप्ययुक्तं लोकशास्त्रप्रसिद्धिविरोधादिति। लोकशास्त्रप्रसिद्धिविरोधे कारणमुच्यते--यदिदमपीति। इदमिति निर्दिष्टं त्रेधा वक्ष्यते। दृष्टमित्यत्र एवंवादिनेति सिध्यति। परिचय इत्यत्रैवंवादिन इतिवत् अपिशब्देनातिस्थूलतां दर्शयति। लोकप्रसिद्धिमाह—शब्दादिति। हेतौ हि पञ्चमी। हेतुत्वं चार्थप्रतिपत्तौ स्फोटादन्यस्य न संभवतीति वक्ष्यते। अतः स्फोटविषयोऽयं शब्दशब्दप्रयोग इति भावः। प्रतिपद्यामह इत्यस्यानन्तरमितिशब्दो द्रष्टव्यः।

मीमांसाशास्त्रप्रसिद्धिमाह—भावार्था इति। एतन्नानाकर्मलक्षण आद्यं सूत्रम्। "श्येनेनाभिचरन् यजेत" "चित्रया यजेत पशुकामः" इत्याद्युदाहरणम्। अत्र सन्देहः—किं भावशब्देभ्योऽपूर्वप्रतिपत्तिः, उत द्रव्यगुणशब्देभ्य इति। किं तावत्प्राप्तम्? भावशब्देभ्यो वा द्रव्यगुणशब्देभ्यो वेति विकल्पः, विशेषाभावात् इति प्राप्त उक्तम् "भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेत एष ह्यर्थो विधीयते" इति। भवन्ति केचित् कर्मशब्दा न भावार्थाः, यथा श्येनैकत्रिकादयः। केचि-द्भावार्था न कर्मशब्दाः यथा भाव इत्यादयः। तत्र ये भावार्थाः कर्मशब्दाश्च

१. धीरे कातरशब्दवत्. ख. २. यस्मादर्थः. ख.

**क्रिया प्रतीयेत" इति "भावमाख्यातेनाचष्टे" इति च । श्रोत्रग्राह्यतापि च**

---

यजेत जुहोतीत्येवमादयः शब्दास्तेभ्यो व्यावृत्तास्तेभ्य एव क्रिया प्रतीयेत यजेतेत्येवमादिभ्यः । कुतः ? भावार्थत्वादेव । य आहुः—किमपि भावयेदिति ते स्वर्गकामपदसंबन्धात् स्वर्गं भावयेदिति ब्रूयुः । तस्मात्तेभ्योऽपूर्वक्रिया प्रतीयेत । कुतः ? एष ह्यर्थो विधीयते यागेन स्वर्गं भावयेदिति । यस्य च शब्दस्यार्थेन फलं साध्यते तेनापूर्वं कृत्वा नान्यथेति ततः अपूर्वं गम्यत इति । श्लोकश्च —

"भावार्थाः कर्मशब्दा ये तेभ्योऽपूर्वक्रियागतिः ।
तैः कुर्याद्यजिना स्वर्गमेष ह्यर्थो विधीयते ॥" इति ।

अत्रापि भावार्था इति भावोऽर्थो येषामिति विग्रहः । वाच्यवाचकभावश्च शब्दार्थयोः सम्बन्धः; वाचकत्वं च स्फोटात्मन एव संभवतीति तद्विषयता । तथा कर्मशब्दा इति । कर्मणश्शब्दाः कर्मशब्दा वाच्यवाचकभावश्च सम्बन्ध इत्यादि पूर्ववद्द्रष्टव्यम् । तथा तेभ्यः क्रिया प्रतीयेतेति हेतुत्वनिर्देशात् स्फोटगोचरमेव । तथैष ह्यर्थो विधीयत इत्यत्रापि स्फोटगोचरता । निरुक्तशास्त्रप्रसिद्धिमाह—भावमिति । तत्र हि "चत्वारि पदजातानि, नामाख्याते चोपसर्गनिपाताश्च । तानीमानि भवन्ति । तत्रैतन्नामाख्यातयोर्लक्षणं प्रदिशन्ति । भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि । तद्यत्रोभे भावप्रधाने भवतः । पूर्वापरीभूतं भावमाख्यातेनाचष्टे व्रजति पचतीत्युपक्रमप्रभृत्यपवर्गपर्यन्तं मूर्तं सत्त्वभूतं सत्त्वनामभिर्व्रज्या पक्तिरित्यद इति । सत्त्वानामुपदेशो गौरश्वः पुरुषो हस्तीति भवतीति भावस्य, आस्ते शेते व्रजति तिष्ठतीति" ग्रन्थः । अत्र भावमाख्यातेनेति तृतीया करणवाचिनी । करणत्वं च स्फोटस्यैव संभवतीति तद्विषयता पूर्ववद्द्रष्टव्या । सम्प्रति लोके च श्रोत्रेन्द्रियविज्ञेयमात्रानुपातिनीत्येनद्दूषयति—**श्रोत्रग्राह्यतापि**.................. **शब्दलक्षणम्** इति । अनेन चानिरूपितपरावरस्येत्येतदस्मिन् विषयेऽपि व्याख्यातम् । न निरूपितानि परसामान्यं सत्तात्मकमवरसामान्यानि च गुणत्वशब्दत्ववर्णत्वानि येन स तथोक्तः । श्रोत्रग्राह्यता न शब्दलक्षणमिति सम्बन्धः ।

**सत्त्वगुणत्वशब्दत्ववर्णत्वातिव्यापिनी न शब्दलक्षणम् । तथा हि--शब्दसमवायिनः सत्त्वादयः श्रोत्रावसेयाः । न च श्रोत्रेणैवेत्यवधारणम्, वर्णानां**

---

कुत इत्यत्रोक्तम्—सत्त्वगुणत्वशब्दत्ववर्णत्वातिव्यापिनीति[1] । शब्दव्यतिरिक्तेषु सत्त्वशब्द त्वगुणत्ववर्णत्वेषु शब्दमतिक्रम्य यतः श्रोत्रग्राह्यता वर्तते, अतो हेतोर्नैषा शब्दलक्षणमित्यर्थः । कथमर्थरूपाणां तेषां श्रोत्रग्राह्यता? न हि रूपगतं सत्त्वं गुणत्वं च श्रोत्रेण गृह्यते । अत आह—**तथा हि—शब्दसमवायिनः सत्त्वादयः श्रोत्रावसेयाः** इति । यद्यपि वस्त्वन्तरगतं सत्त्वं गुणत्वं च न श्रोत्रग्राह्यम् तथापि शब्दसमवायिनस्तावत्सत्त्वादयश्चत्वारोऽप्यर्थाः समवेतसमवायाच्छ्रोत्रेण गृह्यन्त एव । यथोक्तम्--"श्रोत्रसमवायाच्छब्दग्रहणं तदाश्रितसामान्यज्ञानं समवेतसमवायात्" इति । न च ते शब्दात्मानः, शब्दस्य गुणत्वात् तेषां च जातित्वाद्गुणजात्योश्च भेदादित्यर्थः ।

ननु न श्रोत्रेणापि ग्राह्यता श्रोत्रग्राह्यता, किं तु श्रोत्रेणैव ग्राह्यता; वर्णा एव च तथा; सत्त्वगुणत्वयोरिन्द्रियान्तरेणापि ग्रहणात्, अतो नातिव्याप्तिः; अत आह—**न च श्रोत्रेणैवेत्यवधारणम्, वर्णानां मनसाप्यवधारणात्** इति । न च श्रोत्रग्राह्यतेत्यत्र श्रोत्रेणैव ग्राह्यतेत्यवधारणं विवक्षितम्; अतो नातिव्याप्तिः, सत्त्वगुणत्वयोश्चक्षुषापि ग्रहणादिति वाच्यम्, मनसापि वर्णानामवधारणात् । मनोयुक्तानि हि इन्द्रियाणि लिङ्गादीनि च स्वकार्याय पर्याप्तानि भवन्ति । "युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्" इति तस्य सर्वज्ञानसाधारण्यादित्यर्थः । यदा च ज्ञानं द्रव्यान्तरसंयोगासमवायिकारणकम् अनित्यत्वे सति नित्यद्रव्यगतविशेषगुणत्वात् पार्थिवपरमाणुरूपवदिति मनस्सिद्धिः, तदा स्फुटमेव सर्वज्ञानसाधारण्यम् । यैरपि सुखाद्यापरोक्ष्यस्येन्द्रियव्याप्तत्वादिन्द्रियत्वेन मनः साध्यते, तेऽपि सर्वज्ञानसाधारण्यमङ्गीकुर्वत एव । यथोक्तम्—"मनसो वेन्द्रियैर्योगः" इति ।

---

१. सत्त्वशब्दत्वगुणत्वाति- क. ख. ।

**मनसाप्यवधारणात्। वर्णत्वे च प्रसङ्गानतिवृत्तेः ।न च सत्त्ववर्णवत्त्वाद्यपह्नवः साधुः, सर्वसामान्यापह्नवप्रसङ्गात्; न हि सामान्यविशेषान्तरकल्पनेऽपि निबन्धनमस्त्यन्यदतोऽनुवृत्तावभासिनः प्रख्यानात् ; न हि शाबलेयमुपलब्धवतो बाहुलेयेऽन्यः पूर्वाकारावमर्शोऽन्वितावभासात्प्रकाशात् । न च ध्वानिमात्राद्व्यावृत्तः कचटतपेष्वन्वयी न विद्यते प्रख्यावभासः । वर्णाश्चार्थप्रत्यय-**

---

ननु मनस्सहकृतेन श्रोत्रेणैव ग्राह्यता लक्षणमिति चेत्तत्राह –**वर्णत्वे च प्रसङ्गानतिवृत्तेः** इति । यद्यपि श्रोत्रेणैव मनसा सहितेन ग्राह्यतेति लक्षणे सत्त्वगुणत्वयोः प्रसङ्गस्यातिवृत्तिर्भवेत्, तथापि वर्णत्वे यः प्रसङ्गः तस्यानतिवृत्तेरनतिक्रमणादिति । चकारेण शब्दत्वे चेति सिध्यति, वर्णत्वशब्दत्वयोः समवेतसमवायेन मनसा सहितेन श्रोत्रेणैव ग्रहणादिति भावः ।

ननु न सत्त्वशब्दत्वगुणत्ववर्णत्वान्यस्माभिरङ्गीक्रियन्ते गुरुदर्शने तेषामभावात् । अत आह—**न च सत्त्ववर्णत्वाद्यपह्नवः**...... .**प्रख्यावभासः** इति । हेतुमाह—सर्वसामान्येति । यो हि गोत्वादिसामान्याङ्गीकारे हेतुः सोऽविशिष्टः सत्त्वादावपि । यद्यत्र न तस्य प्रामाण्यम्, इतरत्राप्यप्रामाण्यापातः, अविशेषादित्यर्थः ।

तुल्यत्वमेव दर्शयति—न हीति । सामान्यविशेषान्तरेति । सामान्यान्येव विशेषाः सामान्यविशेषाः । सत्ता हि महासामान्य द्रव्यत्वादीनि सामान्यविशेषाः; शब्दत्ववर्णत्वगुणत्वापेक्षयान्तरशब्दः । अथ वा सामान्यानि विशेषाश्च सामान्यविशेषाः । विशेषशब्देन व्यक्तीः परामृशति । सत्त्वशब्दत्वगुणत्ववर्णत्वजातीस्तद्व्यक्तीश्चापेक्ष्य सामान्यान्तराणां विशेषान्तराणां च परिकल्पन इति कुतोऽन्यदित्यपेक्षायामुक्तम्—अत इत्यादि । अनुवृत्तव्यावृत्तेति । सामान्यविशेषेत्यस्य कर्मधारयत्वे व्यावृत्तग्रहणमनुवृत्तत्वदार्ढ्याय । द्वन्द्वत्वे यथाक्रमं सम्बन्धः ।

ननु यत्रैकस्मिन् पदार्थेऽनुभूयमाने पूर्वदर्शनसम्बन्ध्यवमर्शो भवति, तत्र सामान्यमिष्यत एव यथा शाबलेयादिषु । इह तु नानात्मस्वेव गकारादिष्वेकेन्द्रियग्रहणोपाधिकमेकशब्दशब्दप्रयोगमात्रं वाचकत्वोपाधिकमेकवर्णशब्दप्रयोग-

मात्रं वा, न तु पूर्वाकारावमर्शोऽस्तीत्यत आह—न हि शाबलेयमिति। अन्वितावभासादिति। अनुवृत्तावभासादित्यर्थः। इदमाकूतम्—पूर्वाकारावमर्शो गकारादिषु नास्तीत्यस्य कोऽभिप्रायः? अस्ति हि तत्रापि व्यावृत्तमनुगतं च रूपम्; तद्यदि गकारादीनामितरेतरव्यावृत्त आत्मा नान्यत्र प्रतिसन्धीयत इत्युच्यते, तदिष्यत एव। न हि गवादिष्वपि व्यावृत्तात्मप्रतिसन्धानमस्ति; यथा तु तत्र 'स एवायम्' इत्यनुगतं रूपमवभासते, एवमिहापि भावान्तरेभ्यो व्यावृत्तमनुगतं च गकारादिषु रूपमुपलभमाना न सामान्यान्तरवच्छब्दत्ववर्णत्वसामान्यापह्नवं कर्तुमुत्सहामह इति। एवं सत्त्वगुणत्वयोरपि दर्शयितव्यम्। निबन्धनकारस्तु केवलं वर्णत्वमधिकृत्याह—न च ध्वनिमात्रात् इति। कचटतपेष्वित्युपलक्षणम्, पञ्चाशत्यपि वर्णेष्वित्यर्थः। ध्वनिषु वर्णेषु च शब्दत्वम्, ध्वनिमात्रव्यावृत्तं केवलवर्णव्यक्तिवृत्ति वर्णत्वमिति विवेकः। यथाहुः—

"तद्धि शब्दत्ववर्णत्वपञ्चाशद्व्यक्तिबन्धनम्।
तथा ध्वनित्वतद्भेदमहाभूतगुणाश्रयम्॥" इति।

अथ वा कचटतपेष्विति वर्गप्रथमगतजातिसमर्थनार्थमुक्तम्। यथाहुः—"तथावान्तरजातिरपि वर्गतृतीयेषु गकारादिष्वनुवृत्ता ककारादिभ्यो व्यावृत्ता काचिदस्ति, तथा वर्गप्रथमेषु द्वितीयेषु चतुर्थेषु पञ्चमेषु च यथास्वमनुवृत्ताः सन्ति जातयः" इति। एवं च ध्वनिमात्राद्व्यावृत्त इत्यस्यानन्तरं वर्णेष्वन्वयी ध्वनिभ्योऽन्येभ्यश्च[1] व्यावृत्त इत्यर्थतो द्रष्टव्यम्। उपलक्षणं चैतत् वर्गद्वितीयादिजातेः। अतः श्रोत्रग्राह्यता तास्वप्यतिव्यापिनीति भावः। प्रख्यावभास इति। अवभास आकारः। एवमन्वितावव-

१. अन्यवर्णेभ्यश्च. ख.

**तुभावमनुपयन्तोऽपि यदि शब्दाः, कामम् ; अन्वाख्येयस्त्वर्थप्रत्ययेन निरूप्यत इत्यदोषः ।**

---

भासादिति । बहुव्रीहिश्चायम् । अनुवृत्तव्यावृत्तावभासिन इति मत्वर्थीयः । अथ वा प्रकाश एवावभासः अवभासिन इति णिनिप्रत्ययान्तः ।

नन्वेवमेकैकवर्णेष्वपि शब्दत्वसमवायात् येनोच्चरितेनेति स्फोटस्यैव शब्दत्ववर्णनं विरुध्यते । अत आह—**वर्णाश्च**............**इत्यदोषः** इति । अनुमनुते—**काममिति** । वर्णाश्चार्थप्रत्ययहेतुभावमनुपयन्तोऽपि कामं शब्दा भवन्तु, का क्षतिरित्यर्थः ।

नन्वेवं लक्षणस्याव्याप्तिरेव दोषः, अत उक्तमन्वाख्येयस्त्विति । अन्वाख्येयस्तु शब्दविशेषोऽर्थप्रत्ययेनोपलक्षणेन निरूप्यते प्रतिपाद्यते, न तु शब्दमात्रं लक्षणेन लक्ष्यत इति । अनेन च---अन्वाख्येयशब्दलक्षणं चार्थप्रत्ययः ; अथ शब्दानुशासनमिति प्रक्रमादिति यार्धश्लोकव्याख्या, सैवास्मिन् विषये पुनरपि कृता सम्प्रत्युत्थिताशङ्कापरिहारार्थमुत्तरग्रन्थोत्थानाय चेत्यनुसन्धेयम् । इत्यदोष इति । अतो नाव्याप्तिदोषस्तावत् । यच्च नन्वेवं धूमादयोऽपीत्यारभ्य दोषजातमुक्तं तदपि न किञ्चिदस्तीत्यर्थः ।

पूर्वार्धेनेह भाष्यस्य तावत्प्रस्तावना कृता ।
उत्तरार्धेन तत्रोक्तदोषपञ्चकवारणम् ॥

इति परमर्षिसिद्धान्तानुसारिण्यां गोपालिकाख्यायां
स्फोटसिद्धिव्याख्यायां तृतीयः श्लोकः ।

ननु च वर्णा एवाभिधेयाधिगमनिमित्तं स्वाभिधेयावबोधावधिलब्धपरिच्छेदाः पदपरिकल्पनाभाजः । नैतत् सारम् ; प्रत्येकमप्रत्यायक-

---

अन्वाख्येयत्वमर्थप्रतिपत्तिनिमित्तत्वं च वर्णानामेव युक्तमभिमतं चान्वाख्यातॄणामित्यभिमानाच्चोदयति—**ननु च[1] वर्णाः..........परिकल्पनाभाजः** इति । वर्णा एवाभिधेयविषयमधिगमं प्रति निमित्तं कारणम्; न तु स्फोटात्मा । ननु पदं पदार्थस्य वाचकम्, न वर्णाः । सत्यम् ; पदत्वमप्येषामेवेत्युक्तं पदपारिकल्पनाभाज इति पदत्वेन परिकल्पनां विषयतया भजन्त इति ।

नन्वेक हि पदं नाम, यनो गौरित्येकं पदमिति प्रतियन्ति । अतः कथं बहूनां पदता ? अत उक्तं—स्वाभिधेयावबोधावधिलब्धपरिच्छेदा इति । स्वाभिधेयावबोधादेवावधेर्लब्धः पदत्वेन परिच्छेदो यैरिति विग्रहः । कारणप्रवृत्तेर्हि कार्यनिष्पत्तिरवधिः । एकाभिधेयधीहेतुभावं निमित्तीकृत्यैकत्वोपचार इति । अतो वर्णातिरिक्तस्यार्थावसायप्रसवनिमित्तत्वमभिदधद्भाष्यमयुक्तमिति भावः । अथ वा येनोच्चारितेनेति भाष्ये वर्णा एवार्थावसायप्रसवनिमित्तत्वेनाभिमता इति भावः । एष च पूर्वपक्षसंक्षेपः कृत इत्यनुसंन्धेयम्[2] । सिद्धान्तमपि संगृह्णाति —**नैतत्सारम्..... .....उपकल्पयति[3]** इति । अयमर्थः—यदेतदुक्तं वर्णा एवाभिधेयाधिगमनिमित्तमिति ; नैतत्सारम्, अतिफल्गुत्वात् । तथा हि— द्वेधा हि कारणानि कार्यमारभन्ते, प्रत्येकं वा यथा नागदन्तकाः शिक्यावलम्बनम्, संहत्य वा ग्रावाण इव उखाधारणम् । तत्र न तावद्वर्णाः प्रत्येकमभिधेयधियं जनयन्ति, अदर्शनात् । नाप्येते संभूयार्थप्रत्ययं कुर्वते, यौगपद्याभावात् । एकदेशकालवर्तित्व हि यौगपद्यम् यथा ग्राव्णाम् । न चैषां कालैक्यम्, क्रमवर्तित्वनियमात् । नियतक्रमवर्तित्वं च कारणसाहित्याभावात् । निरन्वयनिरुद्धत्वाच्च न देशतोऽपि साहित्यम ।

---

१. Omitted च. ख.        २. अनुसन्धेयः. क.

३. अवकल्पयति. ख.

**त्वात्, साहित्याभावात्, नियतक्रमवर्तिनामयौगपद्येन सम्भूयकारित्वानुपपत्तेः, नानावक्तृप्रयुक्तेभ्यश्च प्रत्ययादर्शनात् क्रमविपर्यये यौगपद्ये च। तस्मात् वर्णव्यतिरेकि वर्णेभ्योऽसम्भवन्नर्थप्रत्ययः स्वनिमित्तमुपकल्पयति।**

**ननु च यं प्रकारमध्यासीनेभ्यो नार्थप्रत्ययदर्शनं वर्णेभ्यः, कामं तत्प्रकारजुषो मा भूवन् वाचकाः; समधिगतातिशयान्तराणामुपरि परिदृश्यमानानन्तराभिधेयप्रत्ययकार्याणां को वाचकत्वस्य विरोधः? तथा हि—**

---

अपि च न तावद्वर्णानां स्वरूपतः साहित्य संभवति। नापि ज्ञाने साहित्यम्, तत्रापि नियतक्रमवर्तितया ज्ञानानां तद्वर्तिनामपि वर्णानां यौगपद्याभावेन संभूयकारित्वायोगात्। यदि तु क्रमवर्तिभ्यो ज्ञानेभ्य ऊर्ध्वं चित्रबुद्धौ वा केवलस्मरणे वा यौगपद्यमिष्यते, ततो नानाप्रयोक्तृप्रयुक्तेभ्योऽपि वर्णेभ्यः प्रथमं प्रत्येकगृहीतेभ्य उत्तरकालमेकज्ञानवर्तिभ्योऽर्थप्रत्ययो दृश्येत; न च दृश्यते। तथैकस्मिन्नपि वक्तरि पूर्वज्ञानानामभिमतक्रमविपर्यये सति यच्चरमे चेतसि वर्णानां यौगपद्य तत्राप्यर्थप्रत्ययादर्शनात्। क्रमविशेषाभावात् तत्रार्थप्रत्ययादर्शनमिति चेत्, न; नियतक्रमवर्तिनामयौगपद्येन संभूयकारित्वानुपपत्तेः। न ह्येकज्ञानवर्तिनां यौगपद्ये क्रमो नाम कश्चित्। क्रमविपर्ययो हि यौगपद्यमिति भावः। तस्मादिति। यत एतदसारं तत इत्यर्थः। अनेन च पारिशेष्यं दर्शितम्। वर्णव्यतिरेकीति। वर्णव्यतिरिक्तमित्यर्थः। स्वनिमित्तमित्यनेन च सम्बन्धः। वर्णेभ्योऽसम्भवन्निति। असम्भवश्च प्रत्येकमित्यादिना दर्शित एव। वर्णव्यतिरेकीति पुल्लिङ्गपाठेऽर्थ प्रत्ययविशेषणम्। तत्रासम्भवः पूर्वभागेनोक्तः। नानाप्रयोक्तृप्रयुक्तेभ्य इत्यादि नोत्तरभागेन वर्णव्यतिरेकित्वमुक्तम्। वर्णेषु सत्स्वपि व्यतिरेकित्वं वर्णव्यतिरेकित्वम्। एवं सिद्धान्तसक्षेपः। उत्तरन्त्वस्यैव प्रपञ्चप्रदर्शितमुच्यमान सुखं ग्राहिष्यते श्रोतुश्च बुद्धिः समाधीयत इति। "इष्टं हि विदुषां लोके समासव्यासधारणम्।" इति च वदन्ति।

पूर्वपक्षी स्वाभिप्रायं विवृणोति—**ननु च यं प्रकारमध्यासीनेभ्यो........**

**कार्यं कस्यचित् सद्भावेऽप्यनवाप्तसत्ताकं पुनराप्नुवत्सत्ताकं तस्य भाव एव परिगृहीतातिशयान्तरस्य कारणतां सूचयति ; न त्वकारणतामेव, विशेषान्तरशालिनि तस्मिन्नेव पुनर्भावात्, तदभावे चाभावात्; न खल्वङ्कुरे**

---

**....निमित्तमवकल्पते** इति । इदमाकूतम्—मीमांसाभाष्यकारेणोक्तम् "अक्षरेषु निमित्तभावः, सद्भावे भावात्तदभावे चाभावादिति" । तदेव च पूर्वमुपन्यस्तम्—ननु च वर्णा एवेति । तत्र नैतत्सारमित्यादिना अन्वयव्यतिरेकावपि प्रमाणान्तर-बाधितत्वाद्वर्णेषु निमित्तभावं साधयितुमशक्ताविस्युक्तम् । तत्रेदमुच्यते—यं प्रकारमध्यासीनेभ्य इति । प्रत्येकसाहित्यादिकमध्यासीनेभ्योऽवलम्बमानेभ्यः । वर्णेभ्य इति पञ्चमी । कामं तत्प्रकारेति । यं प्रकारमित्यत्रत्येन यच्छब्देन तच्छब्दस्य सम्बन्धः । मा भूवन् वाचका इति । तथापि न नः पक्षक्षतिरिति भावः ।

ननु वर्णानां वाचकत्वाभावे दृष्टस्यार्थप्रत्ययस्योपपत्तये वर्णातिरिक्तकल्पना स्यादेव । नेत्याह—समधिगतेति । समधिगतं प्राप्तमतिशयान्तरं यैरिति विग्रहः । उपरि परिदृश्यमानानन्तराभिधेयप्रत्ययकार्याणामिति । अतिशयान्तरसमधिगमस्योपरि परि-दृश्यमानमनन्तरम् अतिशयस्याव्यवहितम् अभिधेयस्यार्थस्य प्रत्यय एव कार्यं येषु येषां वेति विग्रहः । को वाचत्वस्येति । न कोऽपि । एतदेव विवृणोति—तथा हीति । यं प्रकारमित्यादि च "यावन्तः" इत्यादेरुपादास्यमानस्य श्लोकस्यार्थकथनम् । तदेव व्याप्तिपूर्वकमुपपाद्यते—कार्यमित्यादिना । कस्यचित्सद्भावेऽप्यनवाप्तसत्ताकमिति विशेषणम् अकारणताकल्पननिदानम् । पुनराप्नुवत्सत्ताकं तस्य भाव एवेति । सत्तामिति पाठः । तस्य-शब्देन कस्यचिदित्युक्तस्य परामर्शः ; तस्य सत्येव भावे पुन-रुत्तरकालं सत्तामाप्नुवदिति विशेषणं सूचयतीत्यत्र निबन्धनम् । आप्नुवत्सत्ताकमिति पाठे पुनराप्नुवन्ती सत्ता यस्येति बहुव्रीहिः । न त्वकारणतामेवेति । सूचयतीति सम्बन्धः । कारणमाह—विशेषान्तरेति । अनेन अक्षरेषु निमित्तभाव इत्यादिभाष्य-

---

१. Omitted परि. ख.

बीजसमवधानेऽप्यलब्धे[1] कुसूले समवहितक्षित्यादिसहकारिग्रामबीजसमवधानसन्दृश्यमानमूर्तावबीजकार्यतां प्रतियन्ति ; अपि तु तदेव बीजं समवहितक्षित्यादिसहकारिग्राममस्य जनकम्, नेतरथेति गम्यते। तथेमेऽपि मा भूवन् अन्यथा वाचकाः। परिगृहीतानुपूर्व्यविशेषादिभेदास्त्वर्थप्रत्ययहेतवः ; न हि दृष्टे दृष्टप्रकारानुपातिनि सति हेतावदृष्टपरिकल्पना-

स्योपस्कृत्य व्याख्या दर्शिता। तच्छब्दपुनश्शब्दौ व्याख्यातचरौ। तदभावे चेति। विशेषान्तरशालिनस्तस्याभावे चेत्यर्थः। भावादभावादिति च कार्यस्येत्यनुक्तमुन्नानम्। एतदेव दृष्टान्तेनोपपादयति—न खल्विति। न खल्वङ्कुरे लौकिका अबीजकार्यतां प्रतियन्तीति सम्बन्धः। कस्यचित्सद्भावेऽप्यनवाप्तसत्ताकमित्यस्य सपक्षे सत्त्वदर्शनायोक्तम्—बीजसमवधानेऽप्यलब्धे कुसूल इति। कुसूलेऽधिकरणे बीजसमवधाने सत्यप्यलब्ध इत्यङ्कुरविशेषणम्। पुनराप्नुवत्सत्ताकं तस्य भाव एवेत्यस्य सपक्षे सत्त्वदर्शनायोक्तम्—समवहितेत्यादि। समवहित. क्षित्यादिसहकारिणां ग्रामो यस्य तस्यैव बीजस्य समवधानेन संदृश्यमाना मूर्तिर्यस्याङ्कुरस्य स तथोक्तः।

एवं न त्वकारणतामेवेत्यत्रोक्तं परिगृहीतातिशयान्तरस्येत्यत्राप्याह—अपि त्विति। तदेवेति। यत्र पूर्वं सत्ता न लब्धा। समवहितक्षित्यादिसहकारिग्राममिति। पूर्ववत् ग्रामशब्दः समूहवचनः। क्वचित्पाठः समवहितक्षित्यादिसहकारिप्रत्ययमिति। समवहिताः क्षित्यादिसहकारिप्रत्यया यस्येति। प्रत्ययशब्दः कारणपर्यायः। अस्य-शब्देन अङ्कुरं परामृशति। इतरथेति। सहकारिकारणसमवधानाभाव इत्यर्थः। उपनयमाह—तथैवेमेऽपीति। वर्णा इत्यर्थः। अन्यथेति। आनुपूर्वीविशेषादिभेदाभाव इत्यर्थः। पुनराप्नुवत्सत्ताकं तस्य भाव एव—इत्यस्य पक्षधर्मत्वं दर्शयितुमुक्तम्। परिगृहीतानुपूर्वीविशेषादिभेदास्त्विति। परिगृहीता आनुपूर्वीविशेषादयो भेदा यैर्वर्णैस्ते तथोक्ताः। आदिशब्देनैकवक्त्रादेरुपादानम्।

१. अलब्धोपलब्धौ इति मूलपुस्तकपाठः।

वकाशोऽस्ति । तदिदमुक्तम्—

"यावन्तो यादृशा ये च यदर्थप्रतिपादने ।
वर्णाः प्रज्ञातसामर्थ्यास्ते तथैवावबोधकाः ॥"

तथा—

"नान्यथानुपपत्तिश्च भवत्यर्थमितिं प्रति ।
तदेवास्या निमित्तं स्याज्जायते यदनन्तरम् ॥
सा च वर्णद्वयज्ञानेऽतीतेऽन्त्यज्ञानतः पुरा ।
भवतीतीदृगेवास्या निमित्तमवकल्पते ॥"

---

नन्वेवमनेककल्पनातः एकस्यैव वर्णातिरिक्तस्य कल्पना लघीयसी, अत आह—न हीति । दृष्टे हेतावित्यन्वयः । सत्यं वर्णा दृश्यन्ते, तथापि तेषां प्रमाणबाधितत्वाद्वाचकत्वमशक्याभ्युपगमम् ; समधिगतातिशयान्तरत्वकल्पनेऽनेक-कल्पनैव दोषः । अत उक्तम्—दृष्टप्रकारानुपातिनीति । यावन्तः प्रकारा वर्णानां विशेषणतया कल्प्यन्ते, तेऽपि सर्वे वर्णवद्दृष्टा एव । अन्वयव्यतिरेकाभ्यां च तदनुपातिनां हेतुत्वमधिगतमेवेति कथमदृष्टचरहेतुकल्पनावकाशं लभत इति । एतच्च नास्मदुत्प्रेक्षामात्रम् , भट्टपादैरेवोक्तत्वादित्यभिप्रायेणोक्तम्—तदिदमुक्तमिति । ननु स्वाभिधेयावबोधावधिलब्धपरिच्छेदा इति विशेषणस्य कुत्र प्रक्रमः ? "तद्ग्राह्यैकार्थताभ्यां च शब्देषु वदतैकताम्" इत्यादौ भविष्यति । ननु च यं प्रकारमित्यादिस्तु सकल एव अभिधेयाधिगमनिमित्तमिति आद्यस्यैव विशेषणस्य प्रपञ्च इति ।

अथ वा स्वाभिधेयावबोधावधिलब्धपरिच्छेदा इत्यस्यान्या व्याख्या—ननु कुतो वर्णानां निमित्तत्वम् ? न हि प्रत्येकं संहत्य वा तेषामभिधायकत्वं संभवति । अत उक्तम्—लब्धपरिच्छेदा इति । लब्धो विशेषणैः क्रमादिभिः परिच्छेदो यैः । लब्धिक्रियाविशेषणं स्वाभिधेयावबोधावधीति । यावता परिच्छेदलाभेनाभिधेयावबोधोऽवस्थितो भवति, स सर्वोऽङ्गीक्रियत इति । इदानीं द्वितीयस्य विशेषणस्यापि प्रपञ्चः—यं प्रकारमित्यादिः । यावन्तो मिलिताः नैकैक-

श्येन, यादृशा निरन्तरमेकेन वक्त्रा नियतक्रमेणोच्चारिताः, ये गकारादयो वर्णा यस्य गवादेरर्थस्य प्रतिपादकत्वेन वृद्धव्यवहारेऽवगतास्ते तत्प्रकारभाज एव प्रतिपादका इत्यास्थेयम् ; न त्वप्रमाणकशब्दान्तरकल्पना युक्तेवेति । प्रत्यक्षत्वं वर्णानामेव न स्फोटस्य ; अतस्तेषामेव वाचकत्वमित्यत्र वार्तिकं पठितम् । अन्यथानुपपत्त्यापि न स्फोटस्य वाचकत्वं कल्प्यम्, वर्णैरेवोपपद्यमानत्वात् इत्यत्र वार्तिकद्वयमुपादत्त—तथेति । नन्वर्थधी रेवैतैः क्षणिकैरशक्या कर्तुम्, अतः स्थायिनमर्थमर्थापत्त्या कल्पयिष्यामः ; अत आह—नान्यथेति । कः पुनरसति स्थायिनि शब्दे अर्थप्रतीतेर्निमित्तम्? अत आह—तदेवेति । एतदेव दर्शयति —सा चेति । ईदृगेवेति । वर्णद्वयज्ञानानन्तरकालीनमन्त्यवर्णविज्ञानमेवेति । अत्रापि पूर्वो ग्रन्थो व्याख्येयः । स्वाभिधेयबोधावधिलब्धपरिच्छेदा इति । स्वाभिधेयबोधस्य कृतेऽवधौ वर्णेऽन्तिमे पूर्वपूर्ववर्णजनितसंस्कारेभ्यो लब्धविशेषणा इति । तथा अस्यैवान्यथा व्याख्या—स्वाभिधेयबोधावधीति क्रियाविशेषणमेव । परिच्छेदो बुद्धिः लब्धः समस्तवर्णविषयः चित्रबुद्धिरूपः केवलस्मृतिरूपो वा परिच्छेदो यैरिति । अथ वा प्रत्यक्षदृष्टा वर्णा एव पदपरिकल्पनाभाजः; प्रत्यक्षदृष्टेषु धर्मिषु पदत्वं नाम धर्ममात्रं कल्प्यताम् । कं पुनरुपाधिमाश्रित्य बहुषु वर्णेषु 'पदम्' इत्येकवचनप्रयोगः? तदुक्तं विशेषणद्वयेन । तत्र अभिधेयाधिगमनिमित्तमित्यनेनैकार्थत्वमुक्तम्; स्वाभिधेयबोधावधिलब्धपरिच्छेद-इति पुनरेकज्ञानग्राह्यत्वम् । एवं यावन्तः प्रकाराः पूर्वपक्षिणोपन्यसिष्यन्ते, तेऽत्रैव दर्शयितुं शक्यन्ते । तेषां तु निराकरणं क्रमेणैव यथायोगं भविष्यति । नैतत्सारमित्यादिः-सिद्धान्तग्रन्थश्च एतन्निराकरणाय स्वयमेव व्याख्यातव्यः । तत्रादितस्तावत् यावता परिच्छेदेनाभिधेयावबोधोऽवस्थितो भवति, स सर्वोऽङ्गीक्रियत इति व्याख्यामङ्गीकृत्यैतस्यविशेषणस्यावतारं दर्शयितुमभिधेयाधिगमनिमित्तमित्यत्र नैतत्सारमित्यादिना-शङ्कां दर्शयित्वा, ननु च यं प्रकारमित्यादिना व्याख्यातवानित्यनुसन्धेयम् । सर्वथा तावत् 'ननु च वर्णा एव' इत्यादिना वर्णानां वाचकत्वमुपक्षिप्तम् ; 'नैतत्सारम्' इत्यादिना च तन्निराकरणेन स्फोटवाचकत्वप्रस्तावना; पुनश्च 'ननु यं

अत्रोच्यते—

**अविशिष्टादजातस्य विशिष्टाद्भाव इष्यते ।**
**सत्यं स तु विशेषोऽत्र न कश्चन निरूप्यते ॥ ४ ॥**

इदं तावदयं वर्णवादी प्रष्टव्यः—'गौः, अश्वः' इति वा केवलोच्चारणे वा को विसर्जनीयस्य भेदः, यत्कृतोऽर्थधीभेदः प्रत्ययभावाभावौ च? नन्वेष विशेषः—क्वचिदसहायः क्वचिद्वर्णविशेषसहायः—इति। क्व पुनरियं सहायता, यदा न विसर्जनीयसमये वर्णान्तरोपलब्धिरस्ति? कार्ये खलु व्यापारतः सहायता; न चासतस्तदानीं व्यापृतिरस्ति; स्वकालेऽपि च व्यापारस्तदानीमेव प्रध्वंसान्नेदानीन्तनकार्योपजननिमित्तम्। एष तर्हि विशेषः—वृत्ता वर्णविशेषोपलब्धिः क्वचित्, अन्यत्र न तथा। नैतत् सारम्; न हि वृत्ता वर्णविशेषोपलब्धिर्विसर्जनीयं भेत्तुमर्हति, असत्त्वात्; न ह्यजातानन्वयप्रध्वस्तयोरतिशयः कश्चित्।

---

प्रकारम्—इत्यादिना पूर्वोक्तदूषणोद्धारेण वार्तिककारेणादितः कृता वर्णवाचकत्वसमर्थनोपक्षिप्तेत्यनुसन्धेयम्।

अत्र प्रतिविधत्ते—**अत्रोच्यते**..........**कश्चित्** इति। अविशिष्टादिति चतुर्थश्लोकः 'कार्यं कस्यचिदित्यादेः—नेतरथेति गम्यते' इत्यन्तस्यानुकरणं पूर्वार्द्धेन क्रियते। सत्यमिति तत्रानुमतिं करोति। 'तथैवेमेऽपि' इत्यादेर्वर्णेष्वनवसरतां दर्शयति—स त्विति। येन तादृशानामपि कार्यकरत्वं संभाव्यते, स इत्यर्थः। अत्र वर्णेषु। उत्तरार्धं व्याचष्टे—इदं तावदिति। इदमा वक्ष्यमाणपरामर्शः। गौरश्व इति वेति। गौरिति चाश्व इति च वर्णान्तरसाहित्येनोच्चारणे वेत्यर्थः। वाशब्द उत्तरापेक्षया। केवलोच्चारणे वेति पूर्वापेक्षया। को विसर्जनीयस्य भेद इति। भेदो विशेषः। किंवृत्तं प्रश्ने क्षेपे वा। न च न कोऽपीति वक्तव्यमित्यभिप्रायेणाह—यत्कृत इति। यत्कृतोऽर्थधीभेदः येन भेदेन कृत इति। अर्थधीभेद इति। गकारौकारसाहित्येनोच्चारणे गोत्वसमवायवति प्रत्ययः, अकारशकारवकाराकारपरोच्चारणे अश्वत्व-

समवायवतीति योऽर्थधीभेदः स यत्कृत इति । यश्च साहित्येनोच्चारणेऽर्थप्रत्ययसद्भावः, केवलोच्चारणे चार्थप्रत्ययस्यासद्भावः, तावुभावपि यत्कृताविति विपरिणतानुषङ्गः । वर्णवाद्याह—नन्वेष इति । एतच्छब्दनिर्दिष्टमेव दर्शयति—क्वचिदिति । केवलोच्चारणे । क्वचिद्वर्णेति । गौरश्व इत्यादौ । आह च—

"विना संस्कारकल्पेन तदनन्तरवृत्तितः ।
कृतानुग्रहसामर्थ्यो वर्णोऽन्त्यः प्रतिपादकः ॥" इति ।

उत्तरमाह—क्व पुनरियमिति । उपकार्यसमये वोपकारकसमये वेत्यर्थः । न क्वापीति भावः । एतदेव दर्शयति—यदेति । यदैवं तदा क्व पुनरियं सहायतेति सम्बन्धः । उपकार्यसमये तावन्नेत्याह—न विसर्जनीयेति । न खलु विसर्जनीयोच्चारणकाले पूर्वपूर्ववर्णोपलब्धिरस्ति, क्षणिकत्वेन विनष्टत्वात् ; नित्यत्वेऽप्युच्चारणविनाशेन विनष्टप्रायत्वादिति भावः । ननु तदनन्तरप्रवृत्तत्वमात्रेणोपकारिष्यति ; अत आह—कार्ये हीति । न ह्यनन्तरप्रवृत्तितामात्रेण सहायता किं तु कार्ये व्यापारात् । व्यापारत इति ग्रन्थः । व्यापारवत इति पाठे व्यापारयोगिनो व्याप्रियमाणस्येत्यर्थः । ततः किमित्याह—न चेति । तदानीं विसर्जनीयसमयेऽतीतवर्णस्यासतः क्षणिकत्वपक्षे ; नित्यत्वेऽप्यसत्कल्पस्य न व्यापारः समस्तीत्यर्थः । नाप्युपकारकसमय इत्याह—स्वकालेऽपि चेति । तदानीमेव स्वकाल एव । प्रध्वंसादिति पूर्ववत् । इदानीन्तनेति । विसर्जनीयकार्यस्य य उपजनस्तस्य निमित्तमिति विग्रहः । अथ वा, इदानीन्तनस्य कार्योपजनस्य निमित्तमिति । अनेन च पूर्वार्धे अजातस्येत्यत्र कार्यस्येति विशेष्यं भावशब्दश्च जननवचन इति सूचितम् । एवं तावत् सहायतापरनामधेयं सहकारित्वं विशेष इति कृत्वा 'न निरूप्यते' इत्यस्याभिप्रायो दर्शितः । सम्प्रति विशेषान्तरमाशङ्कते—एष तर्हीति । वक्ष्यमाणः । यदि सहकारित्वं न संभवति तर्हीत्यर्थः । तमेव दर्शयति—वृत्तेति । क्वचित्तु यद्वृत्तेति पाठः । यदेतत्क्वचिद्गौरश्व इत्यत्र वर्णविशेषोपलब्धिर्वृत्ता, अन्यत्र केवलोच्चारणेन तथा न वर्णविशेषोपलब्धिर्वृत्ता, एष एव विशेषः ; एकत्र वर्णविशेषोपलब्धे प्रध्वंसाभावः, इतरत्र प्रागभाव इति महान् विशेषः ।

१. व्यापारवत इति मूलपाठ. ।

अत्राप्युत्तरत्वेनोत्तरार्धमेव योजयति—नेति । न हीति सुगमम् । कारणमाह—असत्त्वादिति । नन्वसत्त्वेऽपि प्रध्वंसाभाव एकत्र, अन्यत्र प्रागभाव इत्यस्ति विशेषः इत्युक्तमेव ; अत आह—न हीति । न ह्यनुत्पन्नस्य घटस्य प्रध्वस्तस्य वोदकाहरणे कश्चिद्विशेषोऽस्ति इति । ननु प्रध्वस्तमग्निहोत्रादि कालान्तरे फलं प्रसूते, अतीतं चानुभवज्ञानं स्मृतिज्ञानं जनयति, तद्वदिह किं नेष्यते? अत उक्तमनन्वयेति । निरन्वयविनाशश्चात्र "विना संस्कारकल्पेन" इत्युक्तत्वात् सिद्धः । अग्निहोत्रादेस्स्वपूर्वात्मना फलकालेऽन्वयादनुभवस्य च संस्कारात्मना स्मृतिकालेऽन्वयान्न निरन्वयविनाशः, इह तु संस्कारो न स्वीक्रियत इति विशेषः । तच्च निरूपितमेव—

"संस्कारेऽनिष्यमाणे तु पूर्ववृत्तत्वकल्पनम् ।
निष्प्रमाणकमित्येवं नानुग्रहफलं भवेत् ॥" इति ।

न कश्चनेति वचनस्यानेकाभिप्रायत्वादेतद्विशेषद्वयनिराकरणम् । एष च श्लोकः 'प्रत्येकमप्रत्यायकत्वात्' इत्यादेः सङ्ग्रह इत्यवसेयम् । 'नन्वेप विशेषः' इत्यादिना च 'अतिशयः कश्चित्' इत्यन्तेन निबन्धनेन—प्रत्येकं वर्णानामप्रत्यायकत्वात् स्वरूपतश्च तेषां साहित्याभावात् नियतक्रमवर्तिनां च वर्णानां क्षणिकत्वेन व्यापारतः कार्ये यौगपद्यासंभवेन संस्कारानभ्युपगमे संभूयकारित्वाभावादिति—प्रत्येकमित्यादिरनुपपत्तेरित्यन्तो ग्रन्थो व्याख्यातो वेदितव्यः ॥

इति स्फोटसिद्धिव्याख्यायां चतुर्थः श्लोकः

---

१. निष्प्रमाणे इति २.—क्रमेवेति इति च चौखाम्बामुद्रितवार्तिकपाठौ ।

**ननु च यथा दर्शपूर्णमासादयः क्रमवन्तोऽपि संभूयकारिणः, अभ्यासाश्च स्वाध्यायग्रहणादिषु, गमनक्षणाश्चाभिमतदेशप्राप्तौ; यथा च तत्र कैवल्ये यौगपद्ये च क्रमविपर्यये कर्तृभेदे च न फलोत्पादः, केवलादिभ्यश्च विशेषात् फलोत्पादः, तथा वर्णेष्वपि किं नेष्यते ?**

---

'न कश्चन निरूप्यते' इत्यनेनान्योऽपि न विशेषः कश्चित् संभवतीति सूचितम्; तदमृष्यमाणः प्रत्यवतिष्ठते—ननु च........नेष्यते ? इति । दर्शपूर्णमासादय इति । आदिशब्देन चातुर्मास्यादेरुपादानम् । क्वचित्पाठः दर्शादयः षडिति, पूर्णमासादयः षडिति वा । तत्र दर्शशब्देन च पूर्णमासशब्देन च समुदायिनामुपादानम्; आदिशब्देन समुदाय्यन्तराणामाग्नेयोऽष्टाकपालः उपांशुयाजश्चाग्नीषोमीय एकादशकपाल इति पूर्णमासयागाः, आग्नेयोऽष्टाकपालः ऐन्द्रं पयः ऐन्द्र दधीति दर्शयागाः । क्रमवन्तोऽपीति । वस्तुस्वभावादेव क्रमस्तावत्सिद्धः । क्रमनियमस्तु वाचनिक इति भावः । तदुक्तम् —

"दृष्टश्च पूर्णमासादेः क्रमः संहत्यकारिणः ।" इति ।

दृष्टान्तान्तरमाह—अभ्यासाश्चेति । क्रमवन्तोऽपि संभूयकरिण इति चकारेणाकृष्यते । तदप्यनन्तरमुक्तम्—

"अभ्यासानां च लोकेऽपि स्वाध्यायग्रहणादिषु ।" इति ।

अत्र दृष्टः क्रम इत्यनुषङ्गः ।

अपरमपि दृष्टान्तमाह -गमनक्षणाश्चेति । अत्रापि स एवानुषङ्गः । तदप्युक्तम्—

"साधनादित्रयाणां च व्यापारस्यैककालता ।
सर्वत्रास्तीति नेह स्यादुपालम्भः क्रमं प्रति ॥" इत्यादि ।

ननु त्वया 'यथा दर्शपूर्णमासादयः षट् क्रमवन्तोऽपि' इति पाठो न प्रदर्शितः;

सत्यं न प्रदर्शितः, षट्शब्दानन्वयात् । किं हेय एव स पाठः? कः संशयः ? अथ वा षडित्युपलक्षणार्थं व्याख्येयम् । षडादिसंख्यायुक्ता इत्यर्थः । अथ वा षट्क्रमवन्त-इत्येकं पदम् । श्रुत्यर्थपठनस्थानमुख्यासत्तिप्रवृत्तिप्रमाणकषड्विधक्रमवन्त इत्यर्थः । एवं तु व्याख्याने वृत्तिस्थस्य क्रमवन्त इत्यस्य निष्कृष्यानुषक्तव्यत्वमिति क्लेशः । अत्र च 'क्रमवन्तोऽपि संभूयकारिणः' इत्येकत्रानन्तर्येण पठितमुत्तरयोरपि अनुषङ्गाधिकरणन्यायाच्छेषभूतमेव । यथोक्तम्—"अनुषङ्गो वाक्यसमाप्तिः सर्वेषु तुल्ययोगित्वात्" इति । तच्च व्याख्यातम्—

"अनन्तरेण सम्बद्धः स्यात् परस्याप्यनन्तरः ।
ततः पुनस्तदारूढः परानन्तर्यमश्नुते ॥" इति ।

सत्यम् । लोकवेदयो[1]ः संहत्यकारिणामपि क्रमो दृष्ट एव ; इह तु 'प्रत्येकमप्रत्यायकत्वात्' इत्युक्तमेव वैपरीत्यमित्यत आह—यथा च तत्रेति । पूर्णमासादिषु अभ्यासेषु गमनक्षणेषु चेत्यर्थः । कैवल्य इति । न फलोत्पाद इति सम्बन्धः । अनेन प्रत्येकमप्रत्यायकत्वादिति वर्णेषु चोद्यस्य, प्रत्येकमनुत्पादकत्वादिति दृष्टान्ते तुल्यत्वं दर्शितम् । यौगपद्ये चेति । न तावत्तत्रापि साहित्यं स्वरूपतः समस्ति, नियतक्रमवर्तित्वात् ; यदि तु तादृशानामपि व्यापारतः साहित्यमिष्यते, तदापीत्यर्थः । यौगपद्येऽपि न फलोत्पाद इत्यन्वयः । कदा-पुनर्यौगपद्ये सति न फलोत्पादः ?अत उक्तं क्रमविपर्यये कर्तृभेदेऽपीति । अनेन च 'नानाप्रयोक्तृप्रयुक्तेभ्यश्च प्रत्ययादर्शनात् क्रमविपर्यये यौगपद्ये[2]ऽपि च' इति चोद्यस्य तुल्यता दर्शिता । केवलादिभ्यश्च विशेषादिति । यथा च तत्रैव केवलादिभ्य आग्नेयादिभ्योऽभ्यासेभ्यः कर्मक्षणेभ्यश्च केवलेभ्यः; आदिशब्दाद्विपरीतक्रमेभ्यः कर्त्रन्तरप्रयुक्तेभ्यश्च सकाशाद्विशेषात् कारणात् फलोत्पाद इति समाश्रीयते, न त्वन्यकारण-

१. Added. अपि. ख.        २. Omitted. अपि. ख.

**विषम उपन्यासः --**

**एकार्थकारिणो येऽपि दृश्यन्ते क्रमवर्तिनः।**
**इष्टं विपश्चितां तत्र कार्यं स्थाय्युपकारकम् ॥ ५ ॥**

**दर्शादिषु तावत्क्रमवत्स्वपूर्वाणि कर्मजन्यानि स्थायीनि शक्त्यभिमतानि व्यापाराभिमतानि वोपकर्तॄणि । तत्र शक्तितो व्यापरतो वा पूर्वं परं सहायतामुपयद्भिनत्ति, न तु केवलात्फलोपजनः । क्रमविशेषाज्ञानसामर्थ्याच्च तत्रादृष्टपरिकल्पना । पूर्वकर्मोपजनितकार्यविशेषापेक्षमुत्तरस्याभिमतकार्योपजननिमित्तत्वमिति क्रमभेदे न फलोत्पादः ।**

---

कल्पनेत्यर्थः । क्वचित्पाठः केवलाद्विशिष्टादिति । तत्रापीतरविशिष्टात् क्रमविशेषादिविशिष्टाच्च केवलादेव फलोत्पादः, न त्वन्यस्मात् कुतश्चनेत्यर्थः । तथा वर्णेष्वपीति । 'अविशिष्टादजातस्य विशिष्टाद्भाव इष्यते' इत्येष प्रकार इत्यर्थः । किं नेष्यत इति । किं कारणं कस्मात्कारणादित्यर्थः ।

अत्र समाधानमाह—**विषम उपन्यासः** इति । उपन्यास उपवर्णना दृष्टान्तवचनमित्यर्थः । दृष्टान्तस्य वैषम्यमुपन्यास एवोपचरितम् । अथ वा विषमे दृष्टान्ते तमधिकृत्य तवायमुपन्यासः वाक्प्रारम्भः । अथ वा—उपन्यासो दृष्टान्तः; दार्ष्टान्तिकसमीपे हि सर्वत्र न्यस्यते इति विषमोपन्यासशब्दयोः सामानाधिकरण्यम् ।

एकार्थकारिण इति पञ्चमः श्लोकः । 'नियतक्रमवर्तिनामयौगपद्येन संभूयकारित्वानुपपत्तेः' इत्यत्र 'वर्णा न संभूयकारिणः क्रमवर्तित्वेनायौगपद्यात्' इत्युक्तम्; तत्रानैकान्तिकत्वम् 'यथा दर्शपूर्णमासादयः क्रमवन्तोऽपि' इत्यादिना परैरापादितम्; तत्पूर्वार्धेनानुभाषते । यद्यप्येकार्थकारित्वं क्रमवर्तित्वं च संभूयैकत्र वर्तमानं दृश्यत इत्यर्थः । उत्तरार्धेन वैषम्यं दर्शितम् । तत्र तेष्वित्यर्थः । उत्तरार्धं व्याचष्टे—**दर्शादिषु...न फलोत्पादः** इति । दर्शादिषु ताव·

---

१. Oimtted वाक्. ख.

क्रमवत्स्विति । तावच्छब्देनाभ्यासेषु च गमनक्षणेषु च पश्चाद्वक्ष्याम इति सूचयति । क्रमवत्स्विति दर्शादिविशेषणम् । अथ वा दर्शादिष्विति विशेषणम्, क्रमवत्स्विति विशेष्यम् । त्रिविधा हि क्रमवन्तः पूर्वमुपन्यस्ताः, तत्र दर्शादयः प्रथमे क्रमवन्तो ये तेषु तावदित्यर्थः । अनेन तत्र-शब्द एकतरत्र व्याख्यातः । अपूर्वाणि कर्मजन्यानीति कार्यमित्यस्य व्याख्या । स्थायीनि फलोत्पत्तिं यावत् स्थिराणि । शक्त्यभिमतानि व्यापाराभिमतानि वेति । अपूर्वाणि कर्मणामेव शक्तयोऽवान्तरव्यापारा वा इति द्वयी किल विपश्चितां सिद्धान्तस्थितिः । यथाहुः—

"यागादेव फलं तद्धि शक्तिद्वारेण सिध्यति ।" इति ।

तथा "यस्य च शब्दस्यार्थेन फलं साध्यते, तेनापूर्वं कृत्वा, नान्यथेति ततोऽपूर्वं गम्यते" इति । तथा "तस्मादस्त्यपूर्वं फलसाधनस्य कर्मणोऽवान्तरव्यापाररूपमङ्गानां च फलवदुपकारसाधनानाम्" इति । उपकारकमित्यस्य व्याख्या उपकर्तृणीति । सन्तीति सिध्यति । इष्टानीति वा श्लोकानुसारात्, उपकर्तृणीत्येव वा समाप्तिः ।

एवं श्लोकार्थमुक्त्वा प्रकृते पर्यवसाययति—तत्रेति । अपूर्वाणामुपकारकत्वे सतीत्यर्थः । शक्तितो व्यापारतो वा इति पूर्ववत् । पूर्वमिति । दर्शादिकं कर्मेत्यर्थः; प्रथमान्तमेतत् । परमिति । उपांशुयाजादिकं कर्मेत्यर्थः; द्वितीयान्तमेतत् । सहायतामुपयदिति पूर्वविशेषणम्; शक्तितो व्यापारतो वा सहायतामुपगच्छदित्यर्थः । भिनत्तीति । सातिशयं करोतीत्यर्थः । उत्तरार्धस्याभिप्रायो दर्शितः । न तु केवलात् फलोपजन इति । केवलाद्दर्शादेरिति सिध्यति । किं पुनः कारणं विपश्चितां पूर्वमिष्टमित्यत आह—क्रमविशेषेति । तत्र दर्शादिषु । यथाहुः—

"अर्थापत्तेरिहापूर्वं पूर्वमेकं प्रतीयते ।
ततस्तु सिद्धये भूयः स्यादपूर्वान्तरप्रमा ॥"

---

१. विपश्चितामपूर्व- ख.

प्रधानानां फलं प्रति अङ्गानां च प्रधानानि प्रति, युगपदुपादानात् अपेक्षावशेनैकापूर्वकल्पनया तत्सम्भवात् नापूर्वान्तरकल्पनाप्रमाणमस्तीत्येकमेव तावदपूर्वं कल्प्यते। ततः पुनर्बहुभिः क्रमवर्तिभिरेव कर्मभिस्तदशक्यं युगपत्कर्तुमिति ततोऽपि पुनरपूर्वासिद्ध्यर्थं प्रत्यात्मकापूर्वाणि कल्प्यन्ते। सर्वत्र च—

"प्रमाणवन्त्यदृष्टानि कल्प्यानि[1] सुबहून्यपि।
अदृष्टशतभागोऽपि न कल्प्यस्त्वप्रमाणकः[2]॥" इति।

ननु च यथाग्नेयादिभिरपूर्वाणि जन्यन्ते, तैश्च समुदायापूर्वम्, समुदायापूर्वाभ्यां च परमापूर्वम्, ततो दर्शस्य प्रथमानुष्ठानेऽपि पौर्णमास्या अग्नीषोमीयोपक्रमत्वेऽपि कार्योत्पादप्रसङ्गः; नैतदेवम्; अत एवाह----क्रमविशेषाम्नानसामर्थ्याच्चेत्यादि। यथा तत्र परमापूर्वसिध्यर्थमुत्पत्त्यपूर्वाणि कल्प्यन्ते, एवं क्रमविशेषाम्नानसामर्थ्यात् आग्नेयादिषु क्रमनियमादृष्टानि कल्प्यन्ते। कीदृशी कल्पनेत्यत उक्तम्----पूर्वकर्मेति। पूर्वेण कर्मणाग्नेयेनोपजनितं कार्यमाग्नेयापूर्वमपेक्ष्योत्तरस्योपांशुयाजस्याभिमतं यत्स्वकार्यं उपांशुयाजापूर्वं तस्योपजननिमित्तत्वमिति। एवं चाग्नेयानन्तर्यस्योपांशुयाजाङ्गत्वात्तदभावे क्रमनियमकृतापूर्वाभावेनोपांशुयाजापूर्वमेव विगुणं स्यादिति पूर्वकर्मजनितकार्यविशेषापेक्षोत्तरस्य स्वकार्यजनने, न तु साक्षादिति द्रष्टव्यमिति। क्रमभेदे न फलोत्पाद इति। इतिर्हेतौ, उत्पत्त्यपूर्वाणामेव वैगुण्यप्रसङ्गादिति भावः। अथ वा, न तु केवलात् फलोपजन इति। न तु केवलात्परस्मात् कर्मणः, किं तु पूर्वसहितादेव; साहित्यं चापूर्वद्वारकमित्यर्थः। किं पुनस्तत्रापूर्वसद्भावे प्रमाणम्? तदुक्तम् 'क्रमविशेषाम्नानसामर्थ्यात् तत्रादृष्टपरिकल्पना।' इति। एतच्च तत्पुनर्बहुभिः क्रमवर्तिभिरेव कर्मभिस्तदशक्यमिति उपात्तवार्तिकानुसारेण व्याख्येयम्। एवं च कैवल्ये यौगपद्येऽभिमतानुपूर्व्यभेदे कर्तृभेदे च न

१. कल्प्यन्ते इति २. कल्प्यो ह्यप्र इति च चौखाम्बामुद्रितवार्तिकपाठौ।

**अभ्यासाश्च पूर्वपूर्वाहितसंस्कारसहकार्युत्तरोत्तरावृत्तिजनितसंस्कारक्रमेण स्वाध्यायग्रहणलक्षणफलप्रसवहेतवः । गमनक्षणाश्चाणुपरिमाणदेशातिक्रमक्रमेण समीहितदेशाधिगतये प्रभवन्ति । तथा हि—**

---

फलोपजन इत्येतदत्र समञ्जसमेवेति दर्शयतोक्तम्--पूर्वकर्मेति । पूर्वेण कर्मणाग्नेयेनोपजनितमुत्पत्त्यपूर्वमपेक्ष्योत्तरस्योपांशुयाजस्याभिमतकार्योपजननिमित्तत्वम् अभिमतस्य स्वर्गाख्यस्य कार्यस्य तदपूर्वस्य वा जननं प्रति निमित्तत्वमिति न क्रमभेदे फलोत्पादः । अभिमतानुपूर्व्यभेदे न स्वर्गाख्यफलोत्पादः, यथाचोदितसाहित्याभावात् । उपलक्षणं चैतत् कैवल्यकर्तृभेदयोः । अभ्यासाश्च स्वाध्यायग्रहणादिष्वित्यत्रापि व्याचष्टे—**अभ्यासाश्च....प्रसव हेतवः** इति । अभ्यासाश्चेति । स्वाध्यायग्रहणलक्षणफलप्रसवहेतव इति सम्बन्धः । स्वाध्यायस्य वेदस्य ग्रहणं स्वाध्यायग्रहणम्, स्वाध्यायग्रहणलक्षणं फलं यत् तस्य यः प्रसवः तस्य हेतवः । कथमित्याह—पूर्वपूर्वेति । पूर्वपूर्वैरभ्यासैरुत्तरोत्तरत्राहिताः संस्काराः सहकारिणो यासां तादृग्विधाभिरुत्तरोत्तराभिरावृत्तिभिर्जनिता ये संस्कारास्तेषां क्रमेण पारम्पर्येणेति । आह च—

"आवृत्तिभिर्यथाध्येये संस्कारो भवति क्रमात् ।
वाक्यावयवरूपेण तथापूर्वं भविष्यति ॥" इति ।

यत्पुनरुक्तं गमनक्षणाश्चाभिमतदेशप्राप्ताविति तत्रापि वैषम्यं दर्शयति—**गमनक्षणाश्च....संभवति** इति । गमनक्षणाश्चेति । अभिमतदेशसङ्गतये प्रभवन्तीति संबन्धः । अभिमतो यो देशः तस्य या सङ्गतिः तस्यै । समीहितदेशाधिगतय इति पाठे अधिगतिः प्राप्तिः । समधिगतदेशेति पाठे समधिगमेनोद्देशो लक्ष्यते । कथमित्याह—अण्विति । अणुरूपं परिमाणं यस्य देशस्य सोऽणुपरिमाणः, अणुपरिमाणदेशस्यातिक्रमः अणुपरिमाणदेशातिक्रमः, तत्क्रमेण । ननु युक्तमपूर्वसंस्कारयोः स्थायित्वात् तद्द्वारा दर्शादेरभ्यासानां च संहत्यकारित्वम् ; अणुपरिमाणदेशातिक्रम-

प्राचीनाभ्याशदेशप्राप्तिस्तथाविधोत्तरदेशविशेषाश्रयनिमित्तं तत्रेति कल्प्यतेऽनवाप्तयौगपद्येभ्योऽपि कार्यद्वारा एकार्थक्रिया; न चैष कल्पो वर्णेषु संभवति।

---

स्तु न स्थायी; कथं तेन गमनक्षणयौगपद्यम्? अत आह—तथा हीति। प्राचीनाभ्याशदेशप्राप्तिरिति। प्राचीनस्याभ्याशदेशस्य प्राप्तिः यत्र देशे देवदत्तः पूर्वमस्थात् तस्योत्तरः तत्परस्य प्राचीनो योऽभ्याशोऽणुपरिमाणो देशः तस्य प्राप्तिरित्यर्थः।

अथ वा कीदृश्यभ्याशदेशप्राप्तिरित्यपेक्षायामुक्तम्—प्राचीनेति। या खल्वाद्येन कर्मक्षणेन निष्पन्ना सा प्रथमेत्यर्थः। तथाविधोत्तरदेशविशेषाश्रयनिमित्तमिति। तथाविधस्योत्तरदेशविशेषस्याश्रय आश्रयणं प्राप्तिः तस्य निमित्तमिति। तथाविधत्वमणुपरिमाणत्वम्; विशेषशब्देनाभ्याशत्वं दर्शयति। अथवा उत्तरदेशविशेषाश्रयः कीदृशः? तदुक्तम्—तथाविधेति। यथाभ्याशदेशप्राप्तिः प्रथमक्षणजन्या तथा द्वितीयक्षणजन्यैषा। दशेप्राप्तेर्हि गमनक्षणोऽसमवायी; देहदेशौ समवायिनौ; पूर्वदेशप्राप्तिर्निमित्ते[1]ऽन्तर्भवतीति निमित्तशब्देन सूचितम्। प्रथमद्वितीयक्षणयोस्तावदेवम्; तथा द्वितीयतृतीययोः; एवमन्त्यदेशप्राप्तिर्यावत्। सा तु फलमेव, सर्वेषामुद्देश्यत्वात्। न तत्रान्यत्रेवादृष्टापेक्षा दृष्टैरेवावान्तरकार्यैस्तन्निर्वाहादिति। तत्रेति। गमनेष्वित्यर्थः। ततः किमित्याह—इतीति। तस्मादित्यर्थः। कल्प्यते उन्नीयते। कल्पत इति वा पाठः; अवकल्पत इत्यर्थः। एकार्थक्रियेति संम्बन्धः। कार्यद्वारानवाप्तयौगपद्येभ्योऽपीत्यन्वयः। अपूर्वसंस्कारस्थानीयेन केनचित्कार्येणानवाप्तं यौगपद्यं यैः तेभ्यः कर्मक्षणेभ्य इति पञ्चमी। अपिशब्देनापातप्रतीतौ विरोधाशङ्कां सूचयति। एकार्थक्रियेति। एकस्यार्थस्य प्रयोजनस्य समीहितदेशसङ्गतिरूपस्य कर्तुः क्रिया निष्पत्तिरूपा। अथ वा एकार्थस्य कर्मण ईप्सिततमस्य क्रिया निष्पादना भावना

---

१. निमित्तवर्गे. ख.

पुरुषव्यापारः । एकेति क्रियाया वा विशेषणम् । तत्र समासो वा व्यासो वा । एतदप्युक्तम्—

"एकसाधनसंस्थाश्च व्यापारावयवा यदा ।
स्वरूपतो निरूप्यन्ते यौगपद्यमसत्तदा ॥
किं पुनर्बहवो भिन्ना भिन्नसाधनसंश्रिताः ।
भवेयुर्यौगपद्येन व्यापाराः क्रमवर्तिनः ॥
यदात्वाद्यपरिस्पन्दात्प्रभृत्याफललाभतः ।
क्रिया पूर्वापरीभूता लक्ष्यते वर्तते तदा ॥" इति ।

नन्वनवाप्तयौगपद्येभ्योऽपि कर्मक्षणेभ्य एकार्थक्रियावकल्पत इति कथं श्लोकेऽन्तर्भवति ? श्रूयताम्—ये पुनरेकार्थकारिणोऽपि क्रमवर्तिनो दृश्यन्ते पदार्थाः, तेषु विपश्चितां स्थायि किञ्चित्कार्यमिष्टमेव, यदि तत्तत्रोपकारकम्—इति श्लोकेनोक्तम् । तत्रानुपकारं चेत् नेष्यते—इत्यभिप्रायः, सोऽनेन व्याख्यातः गमनक्षणाश्चेत्यादिना । श्लोकस्थस्य तत्रशब्दस्याभिप्रायमाह—न चैष इति । कल्पः प्रकारः । [1]परिकल्पोऽपि स एव, यदि तथा पाठः । कल्पनं वा । एतच्च वर्णवादिन उत्तेजनायोक्तम् ॥

इति स्फोटसिद्धिव्याख्यायां गोपालिकायां
पञ्चमः श्लोकः ॥

---

१. Omitted. परिकल्पोऽपि. ख.

कथं न संभवति ? यदा तेऽपि स्वोपलब्धिनिबन्धनसंस्कार-द्वारमन्त्यवर्णप्रत्ययेन सहैकार्थक्रियामुपगन्तुं क्षमन्ते । यथोक्तम्— "पूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णो वाचकः— इत्यदोषः ।"

नैतत्सारम्—

संस्काराः खलु यद्वस्तुरूपप्रख्याप्रभाविताः ।
विज्ञानहेतवस्तत्र ततोऽर्थे धीर्न कल्पते ॥ ६ ॥

---

वर्णवादी पुनर्न चेत्येतदसहमान आह—कथं.......इत्यदोषः इति । कथमिति । किंवृत्तमाक्षेपे, संभवत्येवेत्यर्थः । कारणमाह—यदेति । तेऽपीति । पूर्णमासादिवद्वर्णा अपीत्यर्थः । स्वोपलब्धिनिबन्धनसंस्कारद्वारमिति । स्वशब्दस्यात्म-वाचित्वे स्वेषामुपलब्धिः स्वोपलब्धिरिति षष्ठीसमासः;आत्मीयवाचित्वे स्वीयोपलब्धिः स्वोपलब्धिरिति कर्मधारयः । स्वोपलब्धिर्निबन्धनं कारणं यस्य संस्कारस्य स स्वोपलब्धिनिबन्धनः;तादृशः संस्कारो द्वारमस्येति पुनर्बहुव्रीहिः । एतच्चोपगन्तुमिति प्रयोजनार्थक्रियाविशेषणम् । क्षमन्त इति क्रियार्थक्रियाविशेषणं वा ; क्रियार्थक्रिया-विशिष्टप्रयोजनक्रियाविशेषणं वा । अन्त्यवर्णप्रत्ययेन सहेति । अन्त्यवर्णविषयेण प्रत्ययेन सहेति तस्य न संस्कारापेक्षा, अव्यवधानादिति भावः । एकार्थक्रियामिति व्याख्यातप्रायं पूर्वत्रैव कृतेन व्याख्यानेन । उपगन्तुं क्षमन्त इत्यत्र तदेत्याक्षिप्य कथ-मिति पूर्वेण सम्बन्धः कर्तव्यः । अस्य पक्षस्य भाष्यसम्मतिमाह—यथोक्तमिति । पूर्वेति । कार्यदर्शनबलेन[2] वर्णैरात्मनि निहितो विशेषः संस्कारापरनामा वर्णावान्तर-व्यापारः स्थायी कल्प्यते, तत्सहकृतादन्त्यवर्णादर्थबुद्धिरित्यर्थः[1] । पूर्ववर्णजनितश्च संस्कारोऽन्य एव कोऽप्यपूर्ववदिति भाष्याभिप्रायः ।

---

१. Omitted. अर्थ. ख. २. बलेन हि. ख.

**संस्काराः खलु यद्वस्तूपलम्भसंभावितात्मानस्तत्रैव नियतनिमित्तलब्धप्रतिबोधा धियमाविर्भावयन्ति, नार्थान्तरे ; न हि जातु गवावग्रहप्रत्ययप्रभावितः संस्कारोऽश्वस्मरणमुपकल्पयति ॥**

---

दूषयति—**नैतत्सारम्, संस्काराः.... ....उपकल्पयति** । संस्काराः इति षष्ठः श्लोकः । संस्कारो नाम गुणविशेषः । यथोक्तं तार्किकरक्षायाम्—

"यज्जातीयसमुत्पाद्यस्तज्जातीस्य कारणम् ।
स्वयं यस्तद्विजातीयः संस्कारः स गुणो भवेत् ॥" इति ।

खलुः प्रसिद्धौ, तत्प्रयोजनं च हेत्वनभिधानम् । येषां वस्तुरूपाणां प्रख्याभिरनुभवैर्निष्पादिता इति । विज्ञानहेतव इति षष्ठीसमासः । तत्र वस्तुरूपेषु । ततो वर्णानुभवजनितेभ्यः संस्कारेभ्यः । अर्थेऽभिधेये धीर्न कल्पते अवकल्पते । संस्काराः खल्विति व्याख्यातम् । यद्वस्तूपलम्भसंभावितात्मान इति । सम्भावितजन्मान इति वा पाठः । आत्मजन्मनोर्ग्रहणमभिव्यक्तितो भेदग्रहणाय ; यथा आत्मा ततः संभावितः, तथा तत्रैव धियमाविर्भावयितुं शक्तिरपि तत एव लब्धेति भावः । ननु तत्र शक्तिरस्माभिः स्वीक्रियत एव, अतः सिद्धसाधनम् ; अत उक्तं तत्रैवेति । एवकारः श्लोकेऽर्थसिद्ध इति भावः । नियतनिमित्तलब्धप्रबोधा इति । नियतान्निमित्ताल्लब्धः प्रबोधः प्रतिबोधो वा यैरिति विग्रहः । ननु संस्काराः सुप्ता इवावतिष्ठन्ते ; यस्तु तेषां कश्चित् प्रबुध्येत, स स्मृतिं जनयेत् ; स च प्रतिबोधो न स्वायत्तः, किं तु पराधीनः इत्युक्तम्—लब्धेति । कुतस्तर्हि लाभः ? तदुक्तम्—निमित्तेति । अन्यस्मात्कादाचित्कात्कारणादिति प्रणिधानादि च निमित्तमभिप्रेतम् ।

निमित्तं च तत् न सर्वेषां साधारणम्, किं तु व्यवस्थितमिति दर्शितम्—नियतेति। एकनिमित्तप्रसूतः प्रबोधः प्रायेणैकमेव संस्कारं विषयीकरोति। अत्र च सर्वत्र कार्यदर्शनमेव प्रमाणमिति वेदितव्यम्। नार्थान्तर इति। स्वकारणज्ञानविषयादन्यस्मिन्नित्यर्थः। यो यः संस्कारः स स स्वकारणज्ञानविषय एव धियमादधाति, नातद्विषय इत्यर्थः। अत्रैव दृष्टान्तमाह—न हीति। जातु कदाचिद्गवावग्रहप्रत्ययप्रभावित इति। अवग्रह आकारः; गवाकारज्ञानजनित इत्यर्थः। अथ वा अवग्रहो ज्ञानम्, प्रत्ययः कारणम्। अश्वस्मरणमिति षष्ठीसमासः। उपकल्पयतीति वर्तमाननिर्देशः संप्रतिपत्तिद्योतनाय। प्रयोगश्च भवति—वर्णानुभवजनितः संस्कारो नार्थप्रत्ययनिमित्तम् अतद्विषयज्ञानजन्यत्वात् गवावग्रहप्रत्ययजनितो यथा अश्वत्वप्रत्ययस्य। न चानुमानस्यार्थप्रतीत्यन्यथानुपपत्तिप्रसूतार्थापत्तिबाधः, अन्यथोपपत्तेः साधयिष्यमाणत्वात् ॥

इति स्फोटसिद्धिव्याख्यायां गोपालिकायां

षष्ठः श्लोकः

**यदि मन्वीत--प्रत्येकमभिमतकार्यदर्शनाभावाद्वर्णेभ्यो यौगपद्याभावाच्चावश्यकल्पनीयं तस्य किंचन बीजम् । तन्न शब्दः, अनेककल्पनादोषात् ; तस्य खल्वात्मा अर्थाधिगमनिमित्तभावश्चेति द्वयमुपकल्पयितव्यम् । संस्कारं तु वासनाद्वितीयनामानं पटुतरसंवेदनसमनुभूतवस्तुगोचरं सर्व एव संगिरन्ते स्मरणफलप्रसवोन्नीयमानात्मानं प्रवादिनः; अर्थाधिगमनिमित्ततायां तु तस्य विवादः । तत्र च कार्यान्तरे इव तद्भावे भावो निर्णयनिबन्धनम् ।**

---

ननु पूर्ववर्णजनितसंस्कार इति भाष्यं स्मृतिहेतुव्यतिरिक्तसंस्काराभिप्रायमिति मन्यन्ते ; तत्कथं स्मृतिहेतुसंस्कारनिराकरणम् 'संस्काराः खलु, इत्यनेन संगच्छते? उच्यते—सत्यं संस्कारान्तरपरं भाष्यम् ; तथापि स्वोपलब्धिनिबन्धनसंस्कारद्वारामित्युक्तम् । तत्रेदमुच्यते । न तावदपूर्वमिव संस्कारान्तरं वर्णज्ञानजन्यं संभवति इत्युपरिष्टाद्वक्ष्यामः । अतः स्वोपलब्धिनिबन्धनसंस्कारद्वारमिति वचनात् स्मृतिहेतुसंस्कारोऽयमुपन्यस्त इत्यापाद्य 'संस्काराः खलु' इत्यादिना दूषणमुपन्यस्तम् । एवं च कृते किमिदं स्मृतिहेतुत्वमापाद्यते ? सिद्धान्त एवायमस्माकमिति—वार्तिककारीयं वासनापक्षमुपन्यस्यति—यदि मन्वीतेत्यादिना ।

केचित्तु व्याचक्षते—"अथ वा वासनैवास्तु" इत्यपि भाष्यव्याख्यानमेव ;ततो द्वेधा भाष्यं वार्तिककारेण व्याख्यातम्—-स्मृतिहेतुव्यतिरिक्तविषयं वासनाविषयं चेति । व्यतिरिक्तविषयत्वं पश्चादनुसरिष्यते । वासनाविषयत्वं तावदङ्गीकृत्य दूषितम् 'संस्काराः खलु' इत्यादिना । सम्प्रति वासनावादीप्रत्यवतिष्ठते—**यदि मन्वीत** ·······**परिक्षयात्** इति । अयमर्थः—यदि मन्वीत वर्णवादी, किं पुनः स मन्यते ? तदाह—प्रत्येकमिति । प्रत्येकं वर्णेभ्योऽभिमतकार्यदर्शनाभावादित्यन्वयः । अभिमतं कार्यं वाक्यार्थज्ञानमत्र तच्छेषतया च पदार्थज्ञानमपीति तदेवात्राभिमतकार्यतया विवक्षितम्, दर्शनस्य परार्थत्वादिति न्यायात् । दर्शनमुच्चारणम्

न खलु पुरस्तनवर्णविज्ञानोपहितसंस्कारविरहे केवलाद्विसर्जनीयादर्थधियमुदीयमानामुदीक्षामहे, तद्भावे च पश्यामः। यद्यपि चान्यत्रास्य कार्यान्तरोदयप्रत्ययता न प्रतीता, तथापि न कार्यान्तरोपजनगोचरसामर्थ्यं प्रतिरुध्यते केनचित्। तस्मात् कार्यान्तरपरिकल्पितसत्ताकस्य संस्कारस्यैव शक्त्यन्तरपरिकल्पनामात्रमस्तु, इह विषये कार्यान्तरदर्शनात्; न तु स्फोटपरिकल्पना युक्ता, क्लृप्तसत्ताकस्य तस्यैव शक्तिमात्रकल्पनया कार्योपपत्तावर्थापत्तिपरिक्षयात्।

---

दृश्यतेऽनेनार्थ इति। तत्परार्थमर्थप्रत्यायनार्थमिति। हेत्वन्तरमाह—यौगपद्येति। अयमर्थः—ननु यथा ग्रावाणः सम्भूयोखां धारयन्ति, तथा वर्णा अपि सम्भूयार्थप्रत्ययमाविर्भावयन्तु। विषम उपन्यासः, वर्णानां नियतक्रमवर्तितया यौगपद्यासंभवात् ग्राव्णां चैकदेशकालवर्तितया तत्संभवादिति अवश्यकल्पनीयमिति भवति तावदाभिमतकार्यदर्शनम्। न च सा भ्रान्तिः, कारणद्वयाभावात्; न च निर्निमित्तं कार्यमिति संभवति; आकस्मिकत्वे गगनवन्नित्यत्वापातः, शशविषाणवद्वा अत्यन्ताभाव इति प्रसङ्गात् तस्याभिमतस्य कर्यस्य बीजं कारणमवश्यं कल्पनीयमित्यर्थः। क्वचित्पाठस्तस्य तद्बीजमिति। तस्याभिमतस्य कार्यस्य कृतं वर्णानां यौगपद्यस्य बीजं कारणमित्यर्थः। सत्यमेवमेतत्; तत्तु बीजं तथाविधस्फोटाभिधानशब्द एव वर्णबुद्धिभिर्ग्राह्य इति कल्प्यताम्, अत आह—तन्न शब्द इति। तद्बीजं न स्फोट इत्यर्थः। अभिमतकार्यस्योत्पादकं यौगपद्योपेतं च यत्कारणं तस्य न वर्णातिरिक्तशब्दतेत्यर्थः पाठान्तरे द्रष्टव्यः। कारणमाह—अनेकेति। अनेककल्पनाशब्दस्य दोषशब्दस्य च कर्मधारयः। क्वचित्पाठस्तत्रानेक इति। तद्वृत्तेन शब्दस्य परामर्शः, अनेककल्पनामेव

व्याचष्टे—तस्य खल्विति । तस्य खल्वित्युपपादनद्योतनाय प्रसिद्ध्यर्थमेव वा । आत्मा रूपम्, अप्रसिद्धत्वात् । अर्थाधिगमनिमित्तभावश्चेति सुगमम् । तस्य खल्वितीदं द्वयं कल्पनीयमित्यन्वयः । संस्कारपक्षे नानेककल्पनादोष इति दर्शयन्नाह—संस्कारं त्विति । वासनाद्वितीयनामानमिति । वासनेतीदृशं संस्कार इति नाम्नो द्वितीयं नाम यस्येति बहुव्रीहिः । स्मृतिहेतुर्हि संस्कारो वासनेति गीयते । यथोक्तम्—

"अथवा वासनैवास्तु संस्कारः सर्व एव हि ।
दृढज्ञानगृहीतेऽर्थे संस्कारोऽस्तीति मन्वते ॥" इति ।

संस्कारान्तरपक्षे हि शब्दकल्पनवद्द्वयमपि कल्पनीयम्, न वासनापक्षे इति भावः । पटुतरसंवेदनसमनुभूतवस्तुगोचरमिति । एष च "दृढज्ञानगृहीतेऽर्थे" इत्यस्योपन्यासः । पटुतरेण संवेदनेन समनुभूतं वस्तु गोचरो यस्येति बहुव्रीहिः । कारणज्ञानस्य यो विषयः स एव कार्यज्ञानस्य स्मरणस्यापि विषयः । कारणज्ञानं कार्यज्ञानं चान्तरा यथाक्रमं कार्यभूतः कारणभूतश्च यः संस्कारस्तस्यापि तद्विषय एव विषय इत्युपचर्यते । अव्यक्तानुभवादिव्यावृत्त्यर्थं समनुभूतमिति समा विशेषणम् । वेदनमात्रस्य समनुभवहेतुत्वाभावात् संवेदनमिति संशब्द । संवेदनस्याप्यपटुनोऽकारणत्वात् पटुग्रहणम् । पटुमात्रस्यापर्याप्तत्वात्तरप्प्रयोगः । सर्व एव संगिरन्त इति । मन्वत इति न मननमात्रं विवक्षितम्, किं तु तत्पूर्वकं संगिरणमेवेति भावः । स्मरणफलप्रसवोन्नीयमानात्मानमिति । स्मरणमेव फलं तस्य प्रसवेनोन्नीयमान आत्मा रूपं यस्य संस्कारस्येति । स्मरणं हि पूर्वमनुभूतविषये, नाननुभूतविषये इत्यनुभूतवतः कश्चिदतिशयोऽनक्षगोचरोऽप्युन्नीयत इति । प्रत्यादिन इति । वार्तिकगतस्य सर्वशब्दस्य विशेष्यं दर्शितम् । यथाहुः—"वस्तुधर्मो ह्येषः यदनुभवः

१. Added शब्दस्य. ख.

पटीयान् स्मृतिबीजमाधत्ते" इति। अतश्च सर्वतन्त्रसिद्धान्तोऽयं यत्संस्कारोऽस्तीति। अर्थाधिगमनिमित्ततायां तु तस्य विवाद इति। तस्य संस्कारस्यार्थाधिगमं प्रति निमित्ततायां केवलं विवादः, वर्णज्ञानजन्मनः संस्कारस्य वर्णस्मरणवदर्थाधिगमं प्रति या निमित्तताश्रीयते तस्यामेव विवादः—भवन्तो निमित्तता न युक्तेति, वयं पुनर्युक्तेति।

ननु का नामात्र प्रतिपत्तिः[१] अत आह—तत्र चेति। विवादे च सतीत्यर्थः। कार्यान्तर इव तद्भावे भावो निर्णयनिबन्धनमिति। स्मरण इव संस्कारस्य भावेऽर्थप्रतिपत्तेर्भावः संस्कारनिमित्ततानिर्णयकारणमिति। अथवा कार्यान्तर इव यथा बीजादिकार्येऽङ्कुरादाविति। तदप्युक्तम्—

"तस्यार्थबुद्धिहेतुत्वे विसंवादोऽर्थनिर्णये।
तद्भावभाविता हेतुरन्यत्रेव प्रतीयते॥" इति।

अत्र तद्भावे भावो निर्णयनिबन्धनमित्युक्तम्। एतदेव तद्व्यतिरेके व्यतिरेकपूर्वकं व्याचष्टे—न खल्विति। पुरस्तनवर्णविज्ञानोपहितसंस्कारविरह इति। पुरस्तनेन वर्णविज्ञानेन पुरस्तनस्य वर्णस्य विज्ञानेन वोपहितस्य संस्कारस्य विरहे, उपहितेन वा संस्कारेण विरहे सतीत्यर्थः। केवलाद्विसर्जनीयादिति। 'अश्वः' इत्यत्र गकारौकारविरहितो विसर्जनीयः केवलो न गोत्वप्रत्ययनिमित्तमिति। अथवा यत्र वर्णान्तररहितः केवलो विसर्जनीयः केनचित्प्रयुज्यते तदुदाहरणमिति। अर्थधियमुदीयमानामुदीक्षामह इति। वयमिति सिध्यति। एष च लौकिकत्वेन प्रतिवादिनैकीभूय निर्देशः। एवं व्यतिरेके व्यतिरेको दर्शितः। अन्वयेऽन्वयमप्याह—तद्भावे च पश्याम इति। पुरस्तनवर्णविज्ञानोपहितसंस्कारभावे च विसर्जनीयादर्थधियमुदीयमानां पश्याम इति। ननु स्मृतिहेतोः कथं कार्यान्तरे सामर्थ्यम्? उक्तं हि—संस्काराः खलु यद्वस्त्विति,

१. Added. मन्यामहे इति. ख.

अत आह—यद्यपि चान्यत्रेति । वर्णेभ्योऽन्यत्रेत्यर्थः । अस्येति । वासनाद्वितीयनाम्नः संस्कारस्येत्यर्थः । कार्यान्तरोदयप्रत्ययतेति । स्मरणादन्यस्य कार्यस्य य उदयस्तं प्रति प्रत्ययता कारणतेत्यर्थः । क्वचित्पाठः कार्यान्तरोदयप्रकारतेति । कार्यान्तरोदयेति पूर्ववत् । प्रकार इत्थंभावः शेष इति पर्यायाः । तेन शेषतेत्यर्थः । स्मरणोदये हि मनः करणं संस्कारः शेष इति विवक्षामाश्रित्य कार्यान्तरेऽप्यर्थप्रत्यये वर्णानां कारणता संस्कारः शेष इत्याश्रित्योक्तमिति वेदितव्यम् । न प्रतीतेति । केवलस्मृत्युदयप्रकारतादर्शनात् । तथापि न कार्यान्तरोपजननगोचरसामर्थ्यमिति । कार्यान्तरेति पूर्ववत् । कार्यान्तरस्य य उपजनस्तद्गोचरं सामर्थ्यमिति । प्रतिरुध्यते[1] केनचिदिति । न केनचित्प्रतिरुध्यते वार्यत इत्यन्वयः । संभवति ह्येकस्याप्यनेकत्र सामर्थ्यं कर्मवत्संयोगविभागयोः । न च दाहपाकविभागेन वह्नेर्भेदः । तदप्युक्तम्—

"यद्यपि स्मृतिहेतुत्वं संस्कारस्य व्यवस्थितम् ।
कार्यान्तरेऽपि सामर्थ्यं न तस्य प्रतिषिध्यते ॥" इति ।

उपसंहरति—तस्मादिति । प्रमाणविरोधाभावादित्यर्थः । कार्यान्तरपरिकल्पितसत्ताकस्येति । कार्यान्तरेण स्मरणेन परिकल्पिता सत्ता यस्येति विग्रहः । संस्कारस्यैवेत्येवकारेण संस्कारस्योभयवादिसिद्धतां दर्शयति । शक्त्यन्तरपरिकल्पनामात्रमिति । यथा स्मृतिं प्रति संस्कारस्य काचिच्छक्तिः कल्पिता, तथेहाप्यन्या कल्प्यतामिति दर्शितम् । शक्त्यन्तरेति । मात्रशब्देन धर्मिकल्पनां व्यावर्तयति । अस्त्विह विषय इति । वर्णेभ्योऽर्थप्रतिपत्तौ पूर्ववर्णजनितसंस्कारस्य शक्त्यन्तरकल्पनामात्रमस्त्वित्यन्वयः । कुत इत्यपेक्षायामुक्तम्—कार्यान्तरदर्शनादिति । नैतावता घटानुभवजनितात् संस्कारात्पटज्ञानप्रसङ्गः । यत्र कार्यदर्शनं तत्र शक्तिः कल्प्यते, यत्र न दृश्यते तत्र न कल्प्यत इति दर्शनादर्शनाभ्यां व्यवस्थोपपत्तेरित्यर्थः । एतदुक्तं भवति—सर्वत्र

१. रुध्येत. क.

तदिदमसमञ्जसमिव लक्ष्यते । तथा हि—

शक्तेः शक्त्यन्तरायोगस्तत्र सत्यप्यदर्शनम् ।
विलक्षणस्योपजनो नाविशेषाच्च कारणात् ॥ ७ ॥

ज्ञानान्तरोपजनगोचरं सामर्थ्यमेवात्मनि प्राचीनविज्ञानाहितानिवेशं

---

हि संस्कारः केवलं स्मरणमेव प्रसूते । अस्मिंस्तु विषये कार्यान्तरस्यापि दर्शनात् स्मरणवत्तदपि करोत्येव, का वो क्षतिः इति । तदुक्तम्—

"तेन संस्कारसद्भावो नानेनैव प्रकल्पितः ।
तस्यार्थप्रत्ययार्थत्वमदृष्टं केवलं कृतम् ॥" इति ।

श्लोके चास्मिन्ननेनेति शब्देन वर्णवादी परामृश्यते, यदि वार्तिककारीय एव वासनासंस्कारपक्षः । अथ तु भाष्यकारीयोऽपि तदानेनेति भाष्यकार एव निर्दिश्यत इति । 'तन्न शब्दः' इति यदुक्तं तदुपसंहरन्नाह—न तु स्फोटपरिकल्पनेति । वर्णान् परित्यज्य 'अस्ति स्फोटो वाचकश्च' इति परिकल्पना । अत्र कारणमाह—क्लृप्तसत्ताकस्येति । क्लृप्ता सत्ता यस्य संस्कारस्येति । शक्तिमात्रकल्पनयेति मात्रशब्देन शक्तिमन्तं व्यावर्तयति । कार्योपपत्तौ अर्थप्रतीतिः कार्यम् । अर्थापत्तिपरिक्षयादिति । अनुपपत्तिर्ह्यर्थापत्तेर्मूलम् , सा चान्यथोपपत्त्या क्षीयत इति तन्मूलार्थापत्तिरपि क्षीयते ; अतो न स्फोटपरिकल्पना इति । तदप्युक्तम्—

"क्षीणार्थापत्तिरेव च न स्फोटं परिकल्पयेत्" इति ।

एवं च संस्कारस्यार्थापत्त्या हेतुत्वकल्पनात् 'संस्काराः खलु यद्वस्तु' इत्यर्थापत्तिबाधितमेवेत्यवस्थितमिति ।

एतदपि दूषयति—तदिदमसमञ्जसमिव लक्ष्यते। तथा हि—......

---

१. Omitted वा. ख. २. Omitted एव. ख.

अयोगादित्युक्तम् इति। असमञ्जसमिवेति इवशब्देन तीक्ष्णवाक्यत्वं परिहरति। तथा हीत्युपस्कारः। शक्तेः शक्त्यन्तरायोगः इति सप्तमः श्लोकः। तत्र शक्तेरिति संस्कारस्य निर्देशः। कथं संस्कारस्य शक्तित्वमित्यपेक्षायां तत्तावदाह—ज्ञानान्तरेति। धीरा बुद्धिमन्तः ज्ञानान्तरोपजनगोचरं समर्थं संस्कारमाचक्षते। ज्ञानान्तरस्योपजनो गोचरो यस्येति। एवकारेण वस्त्वन्तरत्वं व्यवच्छिनत्ति। आत्मनि प्राचीनेन विज्ञानेनाहितो निवेशो यस्येति। तथा चाह—

"शक्तिभिः सर्वभावानां व्यवहारानुपातिता।
तेनान्यदेशकालेऽपि रूपे ताभिः स सिध्यति॥" इति।

एषा च प्राचीनज्ञानस्य शक्तिः; आत्मनि च तिष्ठति; कथमन्यशक्तिरन्यत्र समवैतीति चेत्, तत्राप्याहुः—

"शक्तिः कार्यानुमेयत्वाद्यद्गतैवोपयुज्यते।
तद्गतैवाभ्युपेतव्या स्वाश्रयान्याश्रयापि वा॥" इति॥

अथवा आत्मनः शक्तिः पूर्वविज्ञानेन जन्यते, 'आवृत्तिभिर्यथा ज्ञेये संस्कारः' इति न्यायात्। अभिव्यज्यते वा। यथोक्तम्—

"आत्मस्थोन्मीलनं तेन व्यक्तिरस्य भविष्यति" इति।

शक्तेः प्रतिबन्धनिवृत्तिर्वा तेन क्रियते। तदप्युक्तम्—

"सर्वावाप्तिसमर्थो वा प्रकृत्यात्मा सदेष्यते।
कश्चित्तु प्रतिबन्धोऽस्य कर्मभिः सोऽपनीयते॥" इति।

एतत्सर्वमपूर्वं प्रति उक्तमपि तुल्यन्यायतयात्रापि भवतीति द्रष्टव्यमिति। यदि विज्ञानस्य शक्तिः, यदि वात्मनः, उभयथापि शक्तित्वं सिध्यति; तदेवात्रोपयुज्यते इति शक्तिमद्विशेषो न निर्देष्टव्य इत्यभिप्रायेण सोऽत्र न निर्दिष्ट इत्यव-

**संस्कारमाचक्षते धीराः । न च सामर्थ्यानां सामर्थ्यान्तरयोगः, अनवस्थापातात् । अपि च क्रमव्यतिक्रमभावितपूर्ववर्णसम्पादितसंस्कारसद्भावेऽपि नार्था-**

---

गन्तव्यम् । एवं शक्तित्वमुपपाद्य 'शक्तेः शक्त्यन्तरायोगः' इत्येतद्व्याचष्टे—न चेति । सामर्थ्यानां सामर्थ्यान्तरयोग इति शक्तिपदस्थाने सामर्थ्यपदप्रक्षेपः पर्यायत्वात् । अयं चाभिप्रायः—समर्थस्य हि भावः सामर्थ्यम्; न च भावस्य भावान्तरयोगः संभवतीति प्रसिद्धतरमेवेति । सामर्थ्यान्तरेण योगः सम्बन्ध इति । अनेन च शक्त्यन्तरायोग इत्यस्य शक्त्यन्तरेण योगाभाव इत्यर्थो दर्शितो वेदितव्यः । हेतुमाह—अनवस्थापातादिति । यदि शक्तेः शक्त्यन्तरयोगोऽङ्गीक्रियते ततः शक्त्यन्तरस्यापि शक्त्यन्तरयोग इत्यनवस्थापातः । ननु वर्णानुभवजनित-संस्कारेभ्योऽर्थप्रतीतिकार्यदर्शनात् तेषां तच्छक्तिः कल्पिता ; न ततोऽपि पुनः कार्यान्तरं दृश्यत इति न तद्विषया शक्तिः कल्प्यत इति व्यवस्थेति । तन्न ; वर्णातिरिक्तशब्दत एवार्थप्रतीत्युपपत्तौ न संस्कारस्य शक्तिकल्पना प्रमाणवती । प्रमाणं विना स्वातन्त्र्येण कल्पने कुतो व्यवस्थेत्यभिप्रायः । द्वितीयपादं व्याचष्टे—अपि च क्रमेति । क्रमव्यतिक्रमेण भावितैर्निर्मितैरभिव्यञ्जितैर्वा पूर्ववर्णैः सम्पादितानां संस्काराणां सद्भावेऽपीति विग्रहः । अनेन तत्र सत्यपीति व्याख्यातम् । तत्रशब्देन शक्त्यात्मनः संस्कारस्य परामर्शः पूर्वश्लोकनिर्दिष्टत्वात् , न तु शक्तेः; सत्यपीत्यनेनान्वयायोगात् इति दर्शितम्[१] ।

अदर्शनमित्येतद्व्याचष्टे—नार्थाधिगमः समीक्ष्यत इति । अनेन पूर्वश्लोकगतम् 'अर्थे धीः' इत्येतत्प्रकरणादर्थधिय इति विपरिणामेन संबध्यत इति सूचितम् । शेषमाह—तन्नेति । तस्मादित्यर्थः । यतः संस्कारसद्भावेऽप्यर्थाधिगमो न भवति,

---

१. Added वेदितव्यम्. ख.

ततोऽसावर्थाधिगमो न तद्धेतुः तद्धेतुकः संस्कारो हेतुर्यस्येति बहुव्रीहिः । अथवा तदा अर्थाधिगमं परामृश्य षष्ठीसमास एवास्तु, अदसा च संस्कारपरामर्शः इति ।

ननु क्रमभेदे संस्कारा एव न संवर्तेरन्निति कुतस्तदन्वयेऽर्थाधिगमव्यतिरेकः? संस्कारव्यतिरेक एव तु[1] तद्व्यतिरेकः । तथा हि—क्रमभेदे तावत् अर्थभेदः, यथा 'जरा राज' इति । यदा हि स्पर्शो[2]ऽष्टमः प्रथमः, आद्यस्वरो द्वितीयः, अन्तःस्थद्वितीयस्तृतीयः, द्वितीयस्वरश्चतुर्थः; तदा पूर्ववर्णजनितसंस्कारत्रयद्वितीयस्य स्वरस्यान्तिमवयोऽवस्थावाचकत्वमापादयति। यदा पुनरन्तःस्थद्वितीयः प्रथमः, द्वितीयस्वरश्च तत्परः, स्पर्शाष्टमश्च तृतीयः, प्रथमस्वरश्च चतुर्थः; तदा राजतेर्लोण्मध्यमभावेन प्रथमस्वरस्य दीप्तिविधिनिमन्त्रणादिवाचकत्वं संस्कारत्रयेण सम्पद्यते । ईदृशः खलु क्रमस्य महिमा यत्तद्भेदात्त एव वर्णाः स्वानुभवद्वारेणान्यादृशानन्यादृशांश्च संस्कारान् जनयन्ति । एवं च क्वचित् सहकारिणोऽपि वर्णस्य क्वचिदन्त्यतया वाचकत्वं समञ्जसं भवति । एवं क्रमभेदे तेषामेव वर्णानां परस्परविलक्षणसंस्कारजनकत्वं क्रमकृतादेव वैलक्षण्यादुपपद्यते । एवं च तत्र सत्यप्यदर्शनमासिद्धमित्यत आह—न खल्विति । क्रमभेदेऽपि प्रत्येकमक्षराणामुपलम्भैः प्रभाविताः संस्काराः परस्परमन्योन्यमतिशेरते । जरेत्यत्रत्याः संस्कारा न राजेत्यत्रत्यानतिशेरते, न च राजेत्यत्रत्या जरेत्यत्रत्यान् । नान्योन्यस्माद्विलक्षणा भवन्तीति यावत् । इदमाकूतम्—ते खलु वर्णाः संभूय वा संस्कारानादधति प्रत्येकं वा? न तावत्संभूय, असंभवात् । अतः प्रत्येकं वर्णानुभवाः संस्कारहेतव इति वाच्यम् । जरा राजेत्यत्र च क्रमान्यत्वेऽप्यक्षराणि तान्येव प्रत्यभिज्ञायन्ते । तदनुभवाश्च तज्जातीयाः संस्काराश्च न विलक्षणाः । ततः क्रमभेदेऽपि त एव संस्काराः, न तेषां क्रमभेदाद्भेदः । प्रयोगश्च भवति– राजेत्यत्रत्याः संस्काराः न जरेत्यत्रत्येभ्यो विलक्षणाः, समानवर्णजनितत्वात् , यथा जरेत्यत्रैव प्रयोगान्तरस्थेभ्यः प्रयोगान्तरस्था इति ।

१. Omitted तु. ख. २. स्पर्शेषु. ख.

धिगमः समीक्ष्यते । तन्नासौ तद्धेतुर्भवितुमर्हति। न खलु क्रमभेदेऽपि प्रत्येकमक्षरोपलम्भप्रभाविताः संस्काराः परस्परमतिशेरते । अपि च अन्यत्रासमीक्षितैवंविधस्वभावोऽभिमत एष संस्कारो न विशेषविकलाद्धेतोरुदेतुमुत्सहते । न च वर्णात्मानः प्रत्येकं विशेषवन्तः ; नाप्यपरसमवधानमेतान्

---

न च वैलक्षण्यं प्रमाणान्तरासिद्धम् , येन कालात्ययापदिष्टत्वं स्यात् । न चार्थापत्तिर्वैलक्षण्यसाधिका ; अन्यथाप्युपपन्नत्वादित्युक्तमेव । उत्तरार्धं व्याचष्टे—अपि चेति । अथवा न खलु क्रमभेदेऽपीत्यादि[1] क्रमविलक्षणस्योपजनो न कारणादित्यस्यांशस्य व्याख्यानम् । विलक्षणस्येत्यत्र भार[2] इति चानेन व्याख्यातम् । अविशेषाच्चेति व्याचष्टे—अपि चेति । अन्यत्रासमीक्षितैवंविधस्वभाव इति । वर्णानुभवजनितेभ्योऽन्यत्रासमीक्षित एवंविधः कार्यान्तरजनकतया विलक्षणः स्वभावो यस्येति । एतत्तु विलक्षणस्येत्यस्य व्याख्यानम् । वैलक्षण्यं च पराभिमत्योक्तमित्युक्तमभिमत इति । भवदभिमत इत्यर्थः । विशेष्यं दर्शितम् एष संस्कार इति । एतदा त्वधिकारलभ्यत्वं सूचयति । न विशेषविकलाद्धेतोरुदेतुमुत्सहत इति । 'उपजनो नाविशेषाच्च कारणात्' इत्यस्य व्याख्यानमिति । यथा पूर्वार्धगतयोर्हेत्वोः शेषो दर्शितः तथात्रापि दर्शयति—**तन्नासौ तद्धेतुर्भवितुमर्हतीति** । सैव व्याख्या । क्वचित्त्वेष ग्रन्थो न दृश्यते । ननु क्रमभेदे वर्णा एव विलक्षणा विलक्षणानेव संस्कारानादधतीत्यसिद्धतेत्यत आह—न चेति । वर्णाः प्रत्येकं वातिशयशालिनः, संहता वा ? न तावत्प्रत्येकमित्युक्तम् । न च वर्णात्मानः प्रत्येकं विशेषवन्त इति । विशेषस्यासत्त्वात् अनभिमतत्वाच्च । द्वितीयं विकल्पशिरो दूषयति—नापीति । अपरसमवधानमिति । अपरैर्वर्णैः सम्भूयावधानम् एककार्योन्मुख्यमित्यर्थः । सन्निधानमिति वार्थः ।

---

१. इत्यादिकमपि. ख. २. अयं निर्भरपर्यायः.

विशिनष्टि, नियतानुपूर्व्यतया असम्भवात् समवधानस्य; निरुद्धागामिनोः खलु तदानीमत्यन्तासतोरनतिशयतया कार्योपजनोपयोगायोगादित्युक्तम् ॥

---

तथैव क्वचित् पाठः। एतान् विशिनष्टीति। वर्णात्मनो विशेषयुक्तान् करोतीत्यर्थः। कारणमाह— नियतानुपूर्व्यतया असम्भवात् समवधानस्येति। नियतमानुपूर्व्यं येषां ते नियतानुपूर्व्याः, तेषां भावो नियतानुपूर्व्यता तया कारणेन वर्णात्मनां परस्परसमवधानस्यासम्भवादित्यर्थः। एष तर्हि विशेषः—वृत्ता वर्णविशेषोपलब्धिः क्वचित्, अन्यत्र न तथेति ; अत आह—निरुद्धेति। विनष्टाजातयोर्वर्णयोः तदानीं कार्योपजनकालेऽत्यन्तासतोरनतिशयतया निरुद्धस्यागमिनो वर्णादविशिष्टतया कारणेन विलक्षणसंस्काराख्यकार्योपजनं प्रत्युपयोगासम्भवादित्यर्थः। अथवा क्रमनियमात् पूर्वस्योत्तरसमवधानं उत्तरस्य च पूर्वसमवधानं न संभवतीत्युक्तम्। एतदेव विवृणोति—निरुद्धागामिनोः खल्विति। निरुद्धवर्तमानकाले नास्त्यजातम्, अजातवर्तमानकाले नास्ति निरुद्धमित्येवमन्योन्यकालेऽत्यन्तासतोर्विलक्षणसंस्कारोपजनोपयोगिविशेषापरपर्यायातिशयाधारत्वासम्भवात् विलक्षणसंस्कारोपजनकार्योपयोगासंभवात्। इत्युक्तमिति। उक्तिश्च 'सत्यं स तु विशेषोऽत्र' इत्यस्य व्याख्यानं। न च संस्कारेण विशेषणमिति भ्रमितव्यम्, विलक्षणसंस्कारोत्पत्तय एव विशेषान्वेषणादिति ॥

॥ इति स्फोटसिद्धिव्याख्यायां गोपालिकायां सप्तमः श्लोकः ॥

---

योऽपि मन्यते--न खलु साक्षाद्भावनानां व्यापारमभिधेयप्रत्ययविषयमुपेमः, अपि तु ताभ्यः स्थायित्वेन प्रतिलब्धयौगपद्याभ्यः प्रत्यवमृष्टसकल-

---

अन्येषां प्रत्यवस्थानमाह—योऽपि मन्यते....तदिदमुक्तम्....ज्ञानकारणम् इति। अस्यार्थः—पूर्वत्र पूर्ववर्णजनितसंस्कारसहितान्त्यवर्णवाचकत्वस्यैव प्रकारान्तरत्वात् 'यदि मन्येत' इत्युक्तम्; इदानीं तु सर्वेषामेव वर्णानां वाचकत्वमिति वाद्यन्तरत्वात् 'योऽपि' इत्युक्तम्। भावनानामिति। संस्कारो वासना भावनेत्यनर्थान्तरम्। न खलु वयमन्त्यवर्णवाचकवादिवत्साक्षादव्यवधानेनैव व्यापारं भावनानामभिधेयप्रत्ययविषयमुपेमः। अभिधेयस्य प्रत्ययो विषयो यस्य कार्यतयेति बहुव्रीहिः। येन 'शक्तेः शक्त्यन्तरायोगः' इत्युपालभ्येमहि। न च 'विलक्षणस्योपजनः' इत्युपालम्भः, संस्कारस्य स्मृत्येकहेतुत्वात्। उपेम इति। अभ्युपगच्छाम इत्यर्थः। अपि त्विति। किन्तु किं पुनर्यूयमभ्युपगच्छथेति यावत्। ताभ्य इति। भावनाभ्य इत्यर्थः। पञ्चमी चेयम्। प्रत्यय उदेतीत्यन्वयः। स्थायित्वेन प्रतिलब्धयौगपद्याभ्य इति। यावत् कार्योत्पत्तिस्तावत्कालवर्तित्वं संस्काराणां तदावेदकप्रमाणादेवावगतमिति भावः। स्थायित्वेन कारणेन प्रतिलब्धं यौगपद्यं याभिरिति विग्रहः। प्रत्यवमृष्टसकलवर्णरूपात्मेति। पूर्वमुच्चारणवेलायां येषां[1] यानि रूपाणि गृहीतानि तानि सर्वाणि तदनन्तरमन्येन ज्ञानेन समनुसन्धीयन्ते; तेषां ततश्चार्थावबोध इत्यभिमानः। तेनायमर्थः—प्रत्यवमर्शोऽवमृष्टानां पुनरप्यवमर्शः; प्रत्यवमृष्टानि सकलानां वर्णानां रूपाणि दीर्घादीनि क्रमादीनि च सकलानि वा वर्णरूपाणि येन। अथवा वर्णरूपेति द्वन्द्वतामाश्रित्य सन्निधानाच्च रूपस्य वर्णैर्विशेषणमाश्रित्य प्रत्यवमृष्टानि सकलानि वर्णरूपाणि येनात्मनेति विग्रहः। स तादृश आत्मा यस्येति पुनश्च बहुव्रीहिः। अनेन च तत्र सत्यप्यदर्शनमसिद्धमिति दर्शयति। एक इति। अनेनैकप्रत्ययजनितप्राकट्याश्रयत्वेनैकपदतां दर्शयति।

---

१. तेषा. क.

वर्णरूपात्मा एकः प्रत्यय उदेति ; तत्र स एव वा तद्विपरिवर्तिनो वा वर्णास्तत्र समधिगतसहभावा जनयन्त्यर्थावबोधमिति वृथा शब्दपरिकल्पनापरिश्रमः । स्मृतौ च सहभावो न प्रत्यक्ष इति चेत्, किमत्र प्रत्यक्षवर्तिना यौगपद्येन ?

---

प्रत्यय उदेतीति । वर्तमानापदेशेन सर्वस्वसंवेद्यतां दर्शयति । ननु उदेतु, ततः किमत आह—तत्रेति । उदये सिद्धे सतीत्यर्थः । स एव वेति । प्रत्यय एव वेत्यर्थः । उत्तरापेक्षया वाशब्दः । तद्विपरिवर्तिनो वा वर्णा इति । तत्र प्रत्यये विपरिवर्तमानाः प्रकाशमाना इति । वाशब्दश्च पूर्वापेक्षया । वार्तिके च "समस्तवर्णविज्ञानम्" इति क्वचिदुक्तम् ; "तदारूढास्तदा वर्णाः" इति क्वचित् ; तदनुसारेणायमव्यवस्थावादः—

"प्रमाणं वापि शब्दो वा तज्ज्ञानं वा निरूप्यते" इति ।

शब्दप्रमाणपक्षमवलम्ब्य तद्विपरिवर्तिनो वा वर्णा इत्युक्तम् । तज्ज्ञानप्रमाणपक्षमवलम्ब्य प्रत्यय एव वेत्युक्तम् । तत्र समधिगतसहभावा इति। तस्मिन् प्रत्यये समधिगतः संप्राप्तः सहभावः साहित्यं यैरिति विग्रहः । समधिगतः प्रज्ञातः सहभावो येषामिति वा । जनयन्त्यर्थावबोधमिति । स एव वेत्यत्र जनयतीति द्रष्टव्यम् । इति वृथा शब्दपरिकल्पनापरिश्रम इति । यतो दृष्टेभ्य एव वर्णेभ्योऽर्थप्रत्ययः कथञ्चिदुपपद्यते, ततो वृथा मुधैव अत्यन्तादृष्टशब्दपरिकल्पनायां भवतां परिश्रमः । यस्य प्रयोजनस्य सिद्धये शब्दः कल्पयितुमिष्यते, तस्य दृष्टैरेव वर्णैः सिद्धत्वादिति । चोदयति—स्मृतौ चेति । चोऽवधारणे । यत्त्वयोक्तं साहित्यं तत्स्मृतावेव, न पुनः श्रोत्रप्रत्यक्षे[1]; प्रत्यक्षवर्ती च शब्दः स्फोटपक्षे वाचकः ; 'प्रत्यक्षाच्छब्दादर्थं प्रतिपद्यामहे' इति लौकिकी प्रसिद्धिरिति चेन्मन्यस इत्यर्थः । परिहरति—किमत्रेति । किं

---

१. श्रौत्रप्रत्यक्षे. ख.

**सर्वथाज्ञाने नैषां तदर्थ्यते ; तच्च स्मरणज्ञानेऽस्त्येव । स चैष प्रत्ययः स्मरण-प्रत्यक्षरूपाभ्यामुभयात्मा सदसद्वर्णरूपावभास्यन्त्यवर्णगोचर इष्यते कैश्चित् ।**

---

प्रयोजनमत्रेदानीं प्रत्यक्षज्ञानवर्तिना स्फोटावलम्बिना यौगपद्येनोपन्यस्तेनेत्यर्थः । अनवसरं हि तदुपन्यसनमिदानीमित्याह—सर्वथाज्ञान इति । अज्ञान इत्यकार-प्रश्लेषेण छेदः । सर्वथा सर्वप्रकारेण यावन्तः प्रकारा ज्ञाने विद्यन्ते तैः सर्वैरप्येषां वर्णानां यौगपद्येन ज्ञानानुत्पत्तौ तत्प्रत्यक्षवर्ति यौगपद्यं स्फोटविषयम् ; अत एव वर्णानां योगपद्यासम्भवेन स्फोटकल्पने प्रवृत्तत्वा-दित्यर्थः । इह च केनचित्प्रकारेण वर्णानां स्वरूपतो यौगपद्यमस्त्येवेत्याह—तच्चेति । तत् वर्णानां यौगपद्येन ज्ञानं वर्णयौगपद्यस्य वा ज्ञानम् प्रत्येकवर्णानुभव-जन्यसंस्कारजन्मनि स्मरणज्ञानेऽस्त्येवेति किं प्रत्यक्षवर्तियौगपद्यतृष्णया ? न खलु वर्णयौगपद्ये संभवति स्फोटप्रत्यक्षत्वकल्पनाबीजमस्तीति भावः । अज्ञान इत्यत्रत्यं ज्ञानं तच्छब्देन परामृश्यते । तादृग्विधज्ञानत्वमिति यावत् । कचित्तु वर्णयौगपद्यं तच्छब्देन परामृश्यत इत्याहुः । अन्या व्याख्या—किमत्र शब्दव्यवहारे प्रत्यक्षवृत्तिवाचकयौगपद्येन ? कुतः ? सर्वथाज्ञाने, सर्वथा तस्यानुपलम्भादित्यर्थः । ज्ञान इति वा छेत्तव्यम् । सर्वथार्थज्ञानसंभवादित्यर्थः । एषां पुनर्वर्णानां प्रत्यक्षवृत्तियौगपद्यासंभवे सर्वप्रकारेण चार्थज्ञानोदये सति सर्वप्रकारे विज्ञाने यौगपद्यमर्थ्यते । न तु ज्ञानविशेषास्था क्रियते । तच्च स्मरणज्ञानेऽस्त्येवेत्यु-क्तम् । सर्वथाज्ञान इत्येतत्पूर्वापराभ्यां तन्त्रेण संबध्यते । एवं प्रत्यय उदेति, तत्र च वर्णानां यौगपद्यमित्युक्तम् । प्रत्ययमपि द्वेधा विभजन्नाह—स चैष प्रत्यय इति । स्मरणप्रत्यक्षरूपाभ्यामुभयात्मेति । स्मरणत्वरूपेण प्रत्यक्षत्वरूपेण चोभय आत्मा यस्येति विग्रहः । सदसद्वर्णावभासीति । सदसद्वर्णावभासनशील इत्यर्थः । अन्त्यवर्ण-

---

१. प्रत्यक्षकल्पना. ख. २. तद्यौगपद्यं. ख.

अन्यैस्तु सकलवर्णोपलब्धिनिबन्धननिखिलभावनाबीजजन्मा युगपदखिल-वर्णरूपपरामर्शी चरमवर्णप्रत्यक्षोपलब्धिसमनन्तरः स्मरणैकरूपः सङ्गीर्यते। क्रमसमधिगतात्मसु न युगपदनुस्मरणमित्यपि मिथ्या। तथा हि--सकलवादि-

---

गोचर इति। अन्त्यो वर्णो गोचरो विषयो यस्येति विग्रहः। तेन येयं सद्रूपान्त्य-वर्णविषया प्रत्यक्षा,पूर्वेषु चातीतेषु स्मृतिरूपा बुद्धिः, सैवार्थप्रतीतिहेतु-रिति मन्यन्त इति इष्यते। कैश्चिदिति। वर्णवादिभिरिति सिध्यति। किञ्चापरैरित्याह:--अन्यैस्त्विति। संगीर्यत इत्यन्वयः। सकलवर्णोपलब्धिनिबन्धननिखिलभावनाबीज-जन्मेति। सकलवर्णेति कर्मधारयः। वर्णोपलब्धीति षष्ठीसमासः। उपलब्धिनिबन्ध-नेति बहुव्रीहिः। भावनाबीजेति रूपककर्मधारयः। सकलवर्णोपलब्धिनिबन्धनेभ्यो निखिलेभ्यो भावनाबीजेभ्यो जन्म यस्य प्रत्ययस्येति पुनर्बहुव्रीहिः। युगपदखिल-वर्णरूपपरामर्शीति। अखिलवर्णरूपेति व्याख्यातम्, सकलवर्णरूपेत्यत्र तुल्य-प्रकारत्वात्। युगपदखिलवर्णरूपाणि परामृशतीति युगपदखिलवर्णरूपपरामर्शीति। चरमवर्णप्रत्यक्षोपलब्धिसमनन्तर इति।[1] अन्तिमस्य वर्णस्य यत्प्रत्यक्षं ज्ञानं तस्य समनन्तर इति। स्मरणैकरूप इति। स्मरणत्वमेकमेव रूपं यस्य प्रत्ययस्येति विग्रहः। प्रत्यय इत्यधिकाराद्विशेष्यं सिध्यति। युगपदखिलवर्णपरामर्शी-त्युक्तम्, तत्र युगपत्त्वविपर्ययमाशङ्क्य परिहरन्नाह—क्रमसमधिगतात्मस्विति। क्रमेण समधिगतः अनुभूत आत्मा येषामिति विग्रहः। वर्णेष्विति विशेष्यम्, अथवा वस्तुष्विति। न युगपदनुस्मरणमिति। भवतीति शेषः। अनुशब्देनासम्भवं व्यनक्ति। न हि क्रमेणानुभूय तदनन्तरमेव युगपत्स्मर्तुं शक्यते, अनुभवानुसारित्वात् स्मरणस्येति भावः। इत्यपि मिथ्येति। एषा हि स्फोटवादिन एतत्पक्षदूषणे विशिष्टा युक्तिरभिमतेत्यपिशब्देन दर्शितम्। तथा हीत्युपपादनप्रतिज्ञा। उपपादयति—

---

१. प्रत्ययोपलब्धि. ख.

**नामभिमतं पौर्वापर्यालोचितेष्वपि भावेषु समुच्चयावग्राहि ज्ञानम् ; तदनभ्युपगमे हि तत्प्रकारानुपातिषु शतं विंशतिरिति समुच्चयदर्शनं विरुध्यते । तस्माच्छ्रोत्रमनोजन्मभिः क्रमवतीभिरपि बुद्धिभिरवधृतेष्वपि वर्णात्मसु पुरस्तात् , परस्तादद्वयमक्रममखिलवर्णरूपावग्राहि स्मरणमवकल्पते ।**

---

सकलेति । अथवा मिथ्येत्यत्र कारणमाह—तथा हि सकलेति । यथा हि मिथ्या, तथा सति हि समुच्चयज्ञानमिष्टमित्यन्वयः । ननु कथं तदिच्छया मिथ्यात्वं कल्प्यते तत्राह—तदनभ्युपगम इति । सकलवादिनामभिमतमिति कर्तरि षष्ठी । अभिमतमिष्टम् । पौर्वापर्यालोचितेष्वपि भावेष्विति । पूर्वं पौर्वापर्येण गृहीतेष्वपीत्यर्थः । अपिशब्देन परोक्तविरोधसम्भावनां दर्शयति । समुच्चयावग्राहि समुच्चयावभासि । तदनभ्युपगमे समुच्चयावग्राहिणो ज्ञानस्य सर्ववादिभिरनङ्गीकारे । तत्प्रकारानुपातिष्विति । तस्मिन् प्रकारे येऽनुपतन्ति, तेषु; क्रमज्ञातेष्वित्यर्थः । शतं विंशतिरिति समुच्चयदर्शनमिति । शतं विंशतिरित्येवमाकारमित्यर्थः । उपसंहरति— तस्मादिति । श्रोत्रमनोजन्मभिरिति । न केवलं श्रोत्रमात्रादासां जन्म, किन्तु मनसोऽपीत्यर्थः । यदि मनो न श्रवणवेलायां व्याप्रियते, कथं मनसा स्मरणं जन्येत त्वगादिवत् ? यतस्तु मनसैव स्मर्यते, ततस्तस्याप्यनुभवे व्यापारः समुन्नीयते । यथाहुः—

"स्मृतिश्च न भवेत्पश्चाद्गृह्णीयात्तन्न चेन्मनः ।
श्रोत्रग्रहणवेलायाम्" इति ।

बुद्धिभिरिति बुद्धिभेदं दर्शयति । पुरस्तादवधृतेष्वित्यन्वयः । परस्तात्स्मरणमिति चान्वयः । बुद्धिभिरित्यस्य व्यतिरेकः—अद्वयमिति, क्रमवतीभिरित्यस्या-

तत्र च प्रतिसंक्रान्तप्रतिबिम्बा इव वर्णाः समीहितकार्यं प्रत्यनन्तरतां नाति-क्रामन्तीति लौकिकवचनमपि समञ्जसम्—शब्दादर्थं प्रतिपद्यामहे—इति, शास्त्रकारवचनं च–"भावमाख्यातेनाचष्टे" इति । तदिदमुक्तम्—

"यद्वा प्रत्यक्षतः पूर्वं क्रमज्ञातेषु यत्परम् ।
समस्तवर्णविज्ञानं तदर्थज्ञानकारणम् ॥" इति ।

---

क्रममिति, वर्णात्मस्वित्यस्याखिलवर्णरूपावग्राहीति, अवधृतेष्वित्यस्य स्मरणमिति व्यतिरेकः । एवं च वर्णेष्वनुयुज्यमाना दोषाः परिहृता इत्याह—तत्र चेति । तस्मिन् स्मरणे चेत्यर्थः । अथवा स्मरणप्रत्यक्षरूपाभ्यामुभयात्मनि स्मरणैकरूपे वा प्रत्यय इत्यर्थः । प्रतिसंक्रान्तप्रतिबिम्बा इवेति । तस्मिन् प्रतिसंक्रान्तं प्रतिबिम्बं येषामिति । इवशब्देन प्रतिबिम्बसद्भावोऽपि नैषां पारमार्थिक इति दर्शयति । न ह्यमूर्तेषु प्रतिबिम्बसम्भवः । एतच्च "तदारूढाः" इत्यस्य व्याख्यानम् । समीहितकार्यं प्रत्यनन्तरतां नातिक्रामन्तीति "न दूरेऽर्थावबोधनम्" इत्यस्य व्याख्या । इति लौकिकं वचनमिति "शब्दादर्थमतिः" इत्यस्य व्याख्या । उपलक्षणं चैतदित्याह—शास्त्रकारवचनं चेति । आचार्यमतमेव चेदमित्याह—तदिदमिति । 'इति वृथा शब्दपरिकल्पनापरिश्रमः' इत्यन्तस्य निबन्धनस्य मूलभूतम् "यद्वा प्रत्यक्षतः" इति वार्तिकमुपात्तं निबन्धनकृता, तत्रैव समस्तार्थ-सूचनात् । शेषं तु व्याख्यातृभिरेव प्रदर्शनीयम् । तथाहि—'स्मृतौ च' इत्यादेः 'अस्त्येव' इत्यन्तस्य व्याख्येयं वार्तिकम्—

"तत्र ज्ञाने च वर्णानां यौगपद्यं प्रतीयते ।
नावश्यं यौगपद्येन प्रत्यक्षस्थेन तद्भवेत् ॥" इति ।

'स चैषः' इत्यादेः 'संगीर्यते' इत्यन्तस्य वार्तिकद्वयम्—

"चित्ररूपां च तां बुद्धिं सदसद्वर्णगोचराम् ।
केचिदाहुर्यया वर्णो गृह्यतेऽन्त्यः पदे पदे ॥

अन्त्यवर्णे च विज्ञाते सर्वसंस्कारकारितम् ।
स्मरणं यौगपद्येन सर्वेष्वन्ये प्रचक्षते ॥" इति ।

'क्रमसमधिगतात्मसु' इत्यादेः 'विरुध्यते' इत्यन्तस्य—

"सर्वेषु चैवमर्थेषु[1] मानसं सर्ववादिनाम् ।
इष्टं समुच्चयज्ञानं क्रमज्ञातेषु सत्स्वपि ॥

न चेत्तदभ्युपेयेत क्रमदृष्टेषु नैव हि ।
शतादिरूपं जायेत तत्समुच्चयदर्शनम् ॥" इति वार्तिकद्वयं विषयः ।

'तस्माच्छ्रोत्रमनोजन्मभिः' इत्यादेस्तु —

"तेन श्रोत्रमनोभ्यां स्यात् क्रमज्ञातेषु यद्यपि ।
पूर्वज्ञानं परस्तात्तु युगपत् स्मरणं भवेत् ॥

तदारूढास्तदा वर्णा न दूरेऽर्थावबोधनात्[2] ।
शब्दादर्थमतिस्तेन लौकिकैरभिधीयते ॥"

इति द्वयं विषयः ।

**तस्यापि** इति । योऽपि खल्वेवं मन्यते तस्यापि वादिन इत्यर्थः । किं पुनस्तेस्येत्यपेक्षायामाह—**पूर्वोपलब्धि.....अनुमीयते** इति । पूर्वोपलब्धिभेदेऽपीत्यष्टमः श्लोकः । यत्प्रकारानुपातिन्यः पूर्वोपलब्धयश्चरमप्रत्ययकारणतयाभिमताः

---

१. चैतदर्थेषु. ख. २. बोधनम्. ख.

तस्यापि—

पूर्वोपलब्धिभेदेऽपि भवेदर्थस्य दर्शनम्।
एकोपलब्धौ नैतेषां भेदः कश्चन लक्ष्यते ॥ ८ ॥

पूर्वोपलब्धयोऽपि हि क्रमविशेषवत्यः परिगृहीताभिमतविपरीतानुपूर्व्या अक्रमाश्चैकवक्तृप्रयुक्तवर्णविषया विपरीताश्च न पश्चाद्भाविन्यां समस्तवर्णावभासिन्यामुपलब्धावनुविपरिवर्तमानान् वर्णात्मनो भिन्दन्ति;

---

अस्मात्प्रकारात्प्रकारान्तरेऽपि तद्वदेव चरमभाविन्या समस्तवर्णविषयया प्रत्यया अर्थदर्शनं प्रसज्येत। कुतः? यतश्चरमभाविन्यामेकोपलब्धौ सर्वस्यामपि न वर्णानां कश्चिद्विशेष इति योजना। पूर्वोपलब्धिभेद इत्युक्तम्, तद्व्याचष्टे—पूर्वोपलब्धय इति। पूर्वोपलब्धयोऽपि हि न वर्णात्मनो भिन्दन्तीत्यन्वयः। अभिमतं प्रकारं दर्शयति—क्रमेति। येन क्रमेण वृद्धव्यवहारे वर्णा वाचकतयावधृताः, स क्रमविशेषो यासां यासु वा ताः क्रमविशेषवत्यः। आकारान्तरं दर्शयति—परिगृहीताभिमतविपरीतानुपूर्व्या इति। परिगृहीतमभिमतानुपूर्व्यविपरीतमानुपूर्व्यं याभिरिति विग्रहः। यथा जरेति विवक्षिते राजेति अन्यस्य प्रकारान्तरस्य कथनम्। अक्रमा इति। युगपन्नानावक्तृप्रयुक्ता इति सिध्यति। यथोक्तम्—

"यौगपद्य त्वशक्यत्वान्नैव तेषामिहाश्रितम्।
वक्तृभेदश्च तत्र स्यात् × × × × × ॥" इति।

अभिमतस्य प्रकारस्य कथनम्—एकेति। एकेन वक्त्रा प्रयुक्ता वर्णा विषया यासामिति विग्रहः। प्रकारान्तरकथनं विपरीताश्चेति। अनेकवक्तृप्रयुक्तवर्णविषया इत्यर्थः। सक्रमका इति सिध्यति।

असंप्राप्तनिरन्वयनिरुद्धयोर्विशेषाभावादित्युक्तम् । एकोपलब्धौ तु यौगपद्यान्नानुपूर्विको विशेषः । न चेदमिह समीचीनम्—उपलम्भगोचरमिदं यौगपद्यम्, नोपलभ्यविषयम्; उपलभ्या हि वर्णाः क्रमविशेषभाज एवैकया प्रख्यया प्रख्यायन्त इति । तथा हि—स्वतो वर्णा नित्यतया विभुतया च न देश-

---

अथवा परिगृहीताभिमतविपरीतानुपूर्व्याः पूर्वोपलब्धीर्विशिनष्टि—एकवक्तृप्रयुक्तवर्णविषया इति । अक्रमाः पूर्वोपलब्धीर्विशिनष्टि—विपरीताश्चेति । युगपन्नानावक्तृप्रयुक्ता इत्यर्थः । पश्चाद्भाविन्यामिति । एकैकवर्णानुभवसमनन्तरभाविन्यामित्यर्थः । समस्तवर्णावभासिन्यामिति । समस्तान् वर्णानवभासयतीति समस्तवर्णावभासिनी तस्याम् । उपलब्धावनुविपरिवर्तमानान् वर्णात्मन इति । अनेनैकोपलब्धिर्व्याख्याता । एतेषामित्यस्य चार्थो दर्शित इति वेदितव्यम् । हेतुमाह—असंप्राप्तेति । असंप्राप्तमनागतमजातमित्यनर्थान्तरम् । निरन्वयनिरुद्धमनन्वयनिरुद्धं चैकमेव उत्तरेणासंबध्य निरुद्धमित्यर्थः । इत्युक्तमिति च पूर्ववत् । 'क्व पुनरियं सहायता' इत्यत्रोक्तिरिति व्याख्येयम् । ननु सत्यमन्यः कश्चन विशेषो न लक्ष्यते, आनुपूर्वीनिमित्तकस्तु विशेषो लक्ष्यत एवेत्यत्राह—एकोपलब्धौ त्विति । एकशब्दसूचितं हेतुं दर्शयति—यौगपद्यादिति । आनुपूर्विक इति । अनुपूर्वशब्दादानुपूर्व्यशब्दाद्वा "ठस्येकः" इति । आनुपूर्वीत इति क्वचित्पाठः । यौगपद्यं चानुपूर्व्यं च नैकत्र संभवतः, विरोधात् । यौगपद्यं चाङ्गीकृतम्, "स्मरणं यौगपद्येन" इत्युक्तत्वादिति भावः ।

शङ्कान्तरमप्युत्तरार्धेन व्यावर्तयति—न चेदमिति । न चेदं वक्ष्यमाणमुत्तरं इहास्मिन् दूषणे परिहारत्वेन कथ्यमानं समीचीनमित्यर्थः । इदं शब्दनिर्दिष्टमेव दर्शयति—उपलम्भेति । उपलम्भगोचरमिति बहुव्रीहिः उपलभ्य-

निबन्धनं नापि कालनिबन्धनं परापरभावमनुपतन्तीति प्रख्याननिबन्धन एष समुपाश्रीयते । तच्चेदमद्वयमक्रमम्, यद्विपरिवर्तिनस्तेऽर्थप्रत्ययहेतवः । न चेदं पूर्वोपलब्धिसंबन्धिनीं परापरतां गोचरयति, वर्णावलम्बि-

---

विषयमिति च । कथं नोपलभ्यविषयत्वम्? तदाह—उपलभ्या हि वर्णा इति । क्रमभेदभाज एवेति । भेदो विशेषः; तथा च क्वचित्पाठः । एकया प्रख्यया प्रख्यायन्त इति । अनेनोपलम्भगोचरं यौगपद्यं दर्शितम् । एवं च क्रमयौगपद्ययोर्विषयभेदान्न कश्चिद्दोष इति इदमपि न समीचीनम् । असमीचीनत्वप्रतिज्ञायां कारणं वक्तुमारभते—तथा हीति । वर्णा हि स्वतः स्वरूपेण न देशनिबन्धनं परापरभावमनुपतन्ति, नापि कालनिबन्धनं परापरभावमनुपतन्ति । नित्यतया विभुतया चेति विपरीतक्रमेण संबध्यते । नित्यत्वान्न कालनिबन्धनम्, विभुत्वान्न देशनिबन्धनमिति । इति प्रख्याननिबन्धन एष समुपाश्रीयत इति । इति हेतोः प्रख्याननिबन्धनः प्रख्यानकारणक एष देशनिबन्धनः कालनिबन्धनो वा परापरभावः समुपाश्रीयते, न स्वरूपकृत इति । वर्णानां हि पूर्वदेशे शब्दः, अपरदेशे शब्दः, पूर्वकालीनः शब्दः, उत्तरकालीनः शब्दः, इति पौर्वापर्यप्रतीतिः प्रख्याननिबन्धनेति समुपाश्रीयते युष्माभिरिति । ततः किमित्याह—तच्चेदमिति । प्रख्यानमिति । अद्वयमक्रममिति व्याख्यातम् । तच्चेदमित्युक्तम्, तदेव दर्शयति—यद्विपरिवर्तिन इति । यस्मिन् प्रख्याने विपरिवर्तमाना इति । ते वर्णाः । अर्थप्रत्ययहेतव इति षष्ठीसमासः । ततः किमित्याह—न चेदमिति । चरमं प्रख्यानमित्यर्थः । पूर्वोपलब्धिसंबन्धिनीमिति । पूर्वोपलब्धिगोचरामित्यर्थः । परापरतां गोचरयतीति पौर्वापर्यं विषयीकरोतीति । कारणमाह—वर्णावलम्बितया तदुप-

**तया तदुपलब्धीनामविषयीकरणेन ; न चासमीहितावध्यवधिमद्भावं पौर्वापर्यं प्रत्येतुमर्हति ; न चैकस्मिन्नानावर्णावयवात्मनि पदे भिन्नमवध्यवधि-**

---

लब्धीनामविषयीकरणेनेति । इदं हि वर्णानवलम्बते । तथावभासात् तदुपलब्धीनां पूर्वासामुपलब्धीनामविषयीकरणेनाविषयीकरणादित्यर्थः । अथवा तदुपलब्धीनामविषयीकरणेनात्मनेति सिध्यति । पूर्वोपलब्धयो हि वर्णानेवावलम्बन्ते, नात्मानं विषयीकुर्वन्ति । यथोक्तम् "ज्ञाते त्वनुमानादवगच्छति" इति, "सत्यं पूर्वं बुद्धिरुत्पद्यते, न तु पूर्वं ज्ञायते" इति च । पूर्वं च वर्णबुद्ध्यनुभवाभावे कुतस्तत्स्मरणम् , कुतस्तरां च तत्संबन्धिन्याः परापरतायाः स्मरणमिति भावः । हेत्वन्तरमपि दर्शयन्नाह—न चेति । अथवा ननु स्वयंप्रकाशपक्षे विषयीकरणमस्त्येव । तत्र किं गोचरयति ? नेत्याह—न चेति । असमीहितावध्यवधिमद्भावमिति । यस्मात् परमपरं च सोऽवधिः ; यत्पुनः परमपरं च तदवधिमत् । असमीहितोऽनपेक्षितः अवध्यवधिमद्भावो येन चरमज्ञानेन तत्तथोक्तम् । क्रियाविशेषणं चैतत्, पौर्वापर्यमित्यस्य विशेषणं वा । प्रत्येतुमर्हतीति । इदमित्येव संबध्यते । ननु सोऽप्यपेक्ष्यताम् , किं नः छिन्नम् ? अत आह —न चेति । अपेक्षितुं क्षमत इत्यत्र बीजं नानावर्णावयवात्मनीति । नानाभूता वर्णा अवयवा यस्यात्मनः स नानावर्णावयवः, तादृगात्मा रूपं यस्य पदस्य तत्तथोक्तम् । अपिशब्दोऽत्र द्रष्टव्यः । यद्यपि नानाभूतेषु वर्णावयवेषु भिन्नावध्यवधिमद्भावापेक्षा शक्यते तथापीत्यर्थः । नेति । निषेधे बीजमेकस्मिन्निति । यद्यपि नानावर्णात्मकं पदम्, तथाप्येकमेव यथानेकतन्त्वारब्धः पटः ; न चैकस्मिन् पदेऽवध्यवधिमद्भावमपेक्षितुं क्षमते । इदमित्येव संबध्यते । कुतः पुनरेकस्मिन्नवध्यवधिमद्भावं

मद्भावमपेक्षितुं क्षमते ; प्रतिवर्णोपलम्भनप्रभावितानि च भावनाबीजानि कामं संहतिसमासादनादेकमनेकावलम्बि स्मरणं जनयेयुः, तावता चरितार्थेभ्यो नापरो वर्णात्मसु विशेषो लभ्यते । तथा च सति यथाकथंचित् पुरस्तादधिगतसंवेदनेभ्यः सकलसंस्कारजन्मनि चरमसमधिग-

---

नापेक्षितुं क्षमते चरमज्ञानम् ? अत उक्तम्—भिन्नमिति । भिन्नो ह्यवध्यवधिमद्भावः । न चैक्यभेदयोः सह सम्भवः, विरोधात् । वर्णावयवनानात्वे तिरोभूते 'गौरित्येकं पदम्' इति प्रत्ययावतरति यथा घटावयवेषु तिरोभूतेष्वेकं महत्प्रत्यक्षमिति ।

ननु भवद्भिः क्रमसमधिगतात्मसु न युगपदनुस्मरणमित्येवोच्यताम्, न पुनस्तदभ्युपगम्य क्रमदर्शनं प्रतिषेद्धुं शक्यते ; कथं हि क्रमवत्सु स्मर्यमाणेषु क्रमो न स्मर्यत इति प्रतिज्ञातुं शक्यते । अत आह—प्रतिवर्णेति । प्रतिवर्णं यान्युपलम्भनानि तैः प्रभावितानीति । भावनाबीजानीति कर्मधारयः । काममिति । न तावता क्रमसमधिगम इति भावः । संहतिसमासादनादिति । एकस्मिन्नात्मनि निरन्तरमुपजातैर्वर्णानुभवैस्तत्रैव जन्यमानानां भावनाबीजानामन्योन्यं संहतिं संघातं प्रापितत्वादिति । एकमिति । संहतत्वात् । अनेकावलम्बीति । नानावर्णानुभवप्रभावितत्वादिति । स्मरणं जनयेयुरिति । काममित्यत्र संबध्यते । यदि जनयेयुस्तर्हि सक्रमकवर्णविषयं जनयन्ति । नेत्याह—तावतेति । सकलवर्णविषयैकस्मरणजननमात्रेणेत्यर्थः । चरितार्थेभ्य इति । कृतप्रयोजनेभ्यो भावनाबीजेभ्यः सकाशादित्यर्थः । नापरो वर्णात्मसु विशेषो लभ्यत इति । अपरः आनुपूर्विको लभ्यत इति । एवंवादिना भवतेति, अथवा लौकिकेन प्रतिपत्त्रेति । इदमाकूतम्—चरमज्ञानस्य क्रमविषयत्वं तत्कार्यात् प्रकाशात् किमुन्नी-

मेऽतिशयविरहादर्थपरिच्छेदः स्यात्; न चैवं दृश्यते। ततस्तदतिरिच्यमाननिमित्तावाप्तजन्मायमित्यनुमीयते इति।

अनेनैतदप्यपाकृतं भवति—

"इत्थं क्रमगृहीतानां युगपद्याथवा परा।
स्थितिः सा कारणं तु स्यान्नित्यमर्थधियं प्रति॥" इति।

---

यते, उत तत्कारणाद्भावनाबीजसङ्घातात्? न तावत् कार्यात्प्रकाशात्, क्रमस्य तत्राप्रतीतेरित्युक्तमेव। न च भावनाबीजसङ्घातस्यानेकावलम्बिस्मरणहेतुत्वाय क्रमविषयत्वकल्पना, तस्य वर्णसङ्घस्मृत्यैव चरितार्थत्वेनार्थापत्तिपरिक्षयादिति। ततः किमित्याह—तथा च सतीति। यथाकथंचिदिति। "यावन्तो यादृशाः" इत्युक्तप्रकारविरहेणापीत्यर्थः। पुरस्तादधिगतसंवेदनेभ्य इति। चरमसमधिगम इति वक्ष्यमाणापेक्षया पुरस्ताच्छब्दः। पुरस्तादधिगतं प्राप्तं संवेदनं यैर्वर्णैस्तेभ्यः सकाशादिति। अर्थपरिच्छेदः स्यादित्यन्वयः। कथंभूतेभ्य इत्यत उक्तम्—सकलसंस्कारजन्मनि चरमसमधिगम इति सकलेभ्यः संस्कारेभ्यो जन्म यस्येति बहुव्रीहिः। चरमसमधिगम इति कर्मधारयः। आरूढेभ्य इत्यर्थात् सिध्यति। कुत इत्युक्तम्—अतिशयविरहादिति। परगृहीताभिमतानुपूर्व्यपूर्वोपलब्धिसमनन्तरचरमविज्ञानेऽप्यतिशयविरहादस्यापि तत्तुल्यत्वादित्यर्थः। अनेन च पूर्वार्धो व्याख्यातः। भवेदित्यस्याभिप्रायमाह—न चेति। सुगमो ग्रन्थः। अस्त्वेवम्; भवतस्तु किमायातमत आह—तत इति। यत एवं वर्णान्वयेऽप्यर्थपरिच्छेदव्यभिचारस्तत इत्यर्थः। तदतिरिच्यमाननिमित्तावाप्तजन्मेति। वर्णेभ्योऽतिरिच्यमानान्निमित्तादवाप्तं

भेदाभावाच्चिरानन्तरास्तमितानुपजातानामविशेषात्; असति तदन्वये क्वचित्सदा प्रतीतिप्रसङ्ग इति।

---

जन्म येनार्थपरिच्छेदेन स तथोक्तः। अयमर्थपरिच्छेदः। अत्र च 'पूर्वोपलब्धयः' इत्यादिना 'उक्तम्' इत्यन्तेन पूर्वोपलब्धिभेददर्शनपुरस्सरं पूर्वोपलब्धीनामेव विशेषत्वं निराकृतम्। 'एकोपलब्धौ तु' इत्यादिनोत्तरार्धो व्याख्यात इति विवेकः। सकलवर्णविषयचरमविज्ञानपक्षनिराकरणादेवैतदपि किञ्चिदभिमतं सिध्यतीत्याह—**अनेन.... प्रसङ्ग इति**। अनेनेति। 'पूर्वोपलब्धिभेदेऽपि' इत्यनेनैव श्लोकेनेत्यर्थः। अथवा चरमविज्ञानारूढवर्णवाचकत्वनिराकरणेनेति। इदमित्युक्तमेव दर्शयति–इत्थमिति। वार्तिकं चेदम्। अस्यार्थः–यस्तु स्वरूपयौगपद्यं वर्णानामभिलषति तस्य तदस्त्येव, नित्यत्वात्; न तु तदर्थप्रतीतिः कारणम्, अगृहीतानामप्रत्यायकत्वादित्युक्तम्—

"वर्णानां यौगपद्येन यदि चावश्यमर्थिता।
नित्यत्वात् सर्वदा तत् स्यान्न तु कारणता तथा॥" इति।

संभवति वा तस्यापि कथञ्चिदर्थप्रत्ययहेतुत्वमित्याह—इत्थमिति। अस्यार्थः—अथवा इत्थं क्रमगृहीतानां वर्णानामनन्तरं युगपद्या परा स्थितिः, सा त्वर्थधियं प्रति कारणं स्यादेव। नित्यं नियतं ध्रुवमिति। कथमनेनास्य निराकरणम्? तदुक्तम्—भेदाभावादिति। पूर्ववार्तिकोक्तान्नित्यत्वात् सर्वदा यौगपद्यात् क्रमग्रहणोत्तरकालभाविनो यौगपद्यस्य भेदाभावात् द्वयोरप्येकत्वादित्यर्थः। ननु क्रमग्रहणोत्तरभाविनी स्थितिस्तदनन्तरेत्यस्ति विशेषः, अत एवाह—चिरानन्तरास्तमितानुपजातानामविशेषादिति। न हि चिरास्तमितानामनन्तरास्तमितानामनुपजातानां च भावानां परस्परं कश्चिद्विशेषोऽस्तीति तयोर्यौग-

पद्ययोर्न भेदः कश्चिदिति । एतत्पक्षनिराकरणं प्रकृतौपयिकं करोति—असति तदन्वये क्वचित् सदा प्रतीतिप्रसङ्ग इति । तदन्वय इति । तस्यामर्थप्रतीतावेवान्वयो यस्येति बहुव्रीहिः । क्वचित्कस्मिंश्चित् । अतः कस्मिंश्चित्स्फोटात्मनि शब्दविशेषेऽर्थप्रतीत्यन्वयिन्यसति सदा व्युत्क्रमोच्चारणादिष्वपि वर्णानामविशिष्टत्वादर्थप्रतीतिप्रसङ्ग इति । अथवा तदन्वय इति वर्णातिरिच्यमानशब्दान्वय इत्यर्थः । क्वचिदिति । अनन्तरास्तमय इत्यर्थः । 'भेदाभावात्' इत्यादि 'अविशेषात्' इत्यन्तेन तुल्यन्यायता दर्शिता ; असतीत्यादि वाक्यान्तरम् । अथवा 'भेदाभावात्' इत्यादि 'प्रसङ्गः' इत्यन्तमेकं वाक्यम् । कथमेकज्ञानवर्तियौगपद्यनिराकरणेन क्रमज्ञानानन्तरभविसत्तया यौगपद्यं निराक्रियत इत्यपेक्षायां तुल्यन्यायतां दर्शयति—भेदेति । भेदाभावादिति । 'नैतेषां भेदः कश्चन लक्ष्यते' इत्यस्य हेतोरत्र तुल्यता दर्शिता । 'चिर' इत्यादिना तस्य व्याख्या । अनभिमते प्रकारेऽपि अर्थदर्शनं भवेदिति यत्पूर्वार्धेनोक्तं तस्य तुल्यता दर्शिता 'असति तदन्वये क्वचित्सदा प्रतीतिप्रसङ्गः' इति । क्वचिदेकस्यामुपलब्धौ तदन्वये वर्णानां साहित्येऽसति सत्तायौगपद्यमात्रेण सदा सर्वदा यावज्जीवं नैरन्तर्येणार्थप्रतीतिप्रसङ्ग इति श्लोकस्यैव वा व्याख्यानान्तरमिदम् । तदा 'पूर्वोपलब्धिभेदे' इत्येतत्पूर्वोपलब्धीनामभिमतानामेव चिरानन्तरास्तमिताजातत्वभेदेऽपीति व्याख्येयम् । 'एकोपलब्धौ' इत्यत्रेदानीमेकोपलब्धेरेवानङ्गीकरणादित्यभिप्रायो द्रष्टव्यः । नन्वस्त्येवानन्तरास्तमितेषु विशेषः ; तत्रापि खलु संस्कारकल्पनमवश्यं भाव्येत ; क्रमगृहीतवर्णोपजनितसंस्कारसहिततदनन्तरवर्तियौगपद्यं कारणमिति । हन्तैवंवादिनं प्रति 'शक्तेः शक्त्यन्तरायोगः' इत्यादिकं पुनरपि पठ्यतामित्यभिप्रायः ॥

इति स्फोटसिद्धिव्याख्यायां

अष्टमः श्लोकः ॥

न च समुच्चयज्ञानोपारोहिवर्णनिबन्धनार्थबोधाभिप्रायम्—शब्दादर्थं प्रतिपद्यामहे—इति, नापि शब्दजात्यभिप्रायम्। तथा हि—

नेक्षिता जातिशब्दानां समुदायानुपातिता।
जातिमाचक्षते ते हि व्यक्तीर्वा जातिसङ्गताः ॥ ९ ॥

---

यच्च पूर्वमुक्तम् 'लौकिकं वचनम्' इत्यादि तत्राह—**न च....वचनोपपत्तिः** इति। अस्यार्थः—प्रत्येकज्ञानानन्तरं यत्समुच्चयज्ञानं तत्रोपारोहिणो वर्णा निबन्धनं यस्य तादृशमर्थबोधमभिप्रेत्येत्यर्थः। शब्दादर्थमित्युपलक्षणम्। शास्त्रकारवचनस्यापि तुल्यन्यायत्वादिति तत्कारणत्वनिषेधादिति च भावः।

एवं कारकविभक्तेरनुपपत्तिरुक्ता। एकवचनानुपपत्तिमप्याह—नापि शब्दजात्यभिप्रायमिति। शब्दादर्थं प्रतिपद्यामह इत्येतदेव। यथा कारकांशे समुच्चयज्ञानोपारोहिवर्णनिबन्धनार्थबोधाभिप्रायमेतद्वचनं न भवति तथा वचनांशे जात्यभिप्रायमपि न भवतीत्यभिप्रायः। नापि शब्दजात्यभिप्रायमित्यस्योपपादनार्थं उत्तरग्रन्थ इति सूचितम्—तथा हीत्यनेन। नेक्षितेति नवमः श्लोकः।

उपलक्षणं च—नापि शब्दजात्यभिप्रायमिति, नापि शब्दव्यक्त्यभिप्रायं, नापि समुदायाभिप्रायं नाप्यन्त्यवर्णाभिप्रायमिति। क्वचित्तु नापि शब्दव्यक्त्यभिप्रायमिति पाठः, तत्राप्युपलक्षणत्वमेव। अत आह—न तावदिदमिति। अथवा न च समुच्चयज्ञानेत्यादिनापि श्लोकप्रतिपाद्यार्थोपन्यास एव। नापि वर्णसमुदायाभिप्रायमिति विवक्षितं समुच्चयज्ञानोपारोहीत्यनेनैकबुद्धिग्राह्यतया क्रोडीकृतानां समुदायत्वसंभवं सूचयति अर्थबोधेत्यनेन, एककार्यतयेति। न च समुच्चयेत्यादेः कृत्स्नस्यार्थस्य प्रतिपादकः श्लोक इत्युक्तम्—तथा हीति।

न तावदिदं शब्दजात्यभिप्रायम् ; न शब्दजातितोऽर्थप्रतीतिः, गवाश्वादिपदेषु तदविशेषादभिधेयाविशेषप्रसङ्गात् । न चानुपाश्रितव्यावृत्तयो

---

श्लोकेन च शब्दादर्थाच्च प्रतिपाद्यत इति द्रष्टव्यम् । अथवा न च समुच्चयज्ञानोपारोहिवर्णनिबन्धनार्थबोधाभिप्रायं शब्दादर्थं प्रतिपद्यामह इतीत्य-स्यानन्तरम्—नापि शब्दव्यक्त्यभिप्रायमिति वा, नापि शब्द जात्यभिप्रायमिति वा ग्रन्थो नास्त्येव ; 'प्रतिपद्यामहे इति । तथा हि' इत्येव पाठः । तथा च समुदायाभिप्रायत्वनिराकरणार्थः श्लोक इति सूचितम्—तथा हीत्यनेन । अत्र च जात्यादीनां किं वाचकमिति विकल्पोऽन्तर्णीतः[1] । तत्र जातिपक्षं तावन्निषेधति—न तावदिदं शब्दजात्यभिप्रायमिति । इदं लौकिकं वचनम् । कारणमाह—न शब्दजातितोऽर्थप्रतीतिरिति । अर्थप्रत्यायकस्य हि 'शब्दात्' इति निर्देशः, 'प्रतिपद्यामहे' इति समभिव्याहारात् । न च शब्दजातितोऽर्थ-प्रतीतिरियमुपपद्यते ; अतो न तद्विषयं वचनमित्यर्थः । कुत इत्याह—गवाश्वादिपदेषु तदविशेषादभिधेयाविशेषप्रसङ्गादिति । गवाश्वादिपदेषु भिन्ना-भिधेयेषु शब्दजातेरविशिष्टत्वादश्वपदस्य गौरप्यभिधेयः स्यात् गोपदस्याश्वोऽपि । न हि कारणस्यावैलक्षण्ये कार्यवैलक्षण्यं युज्यते । यथाहुः—

"तदतद्रूपिणो भावास्तदतद्रूपहेतुजाः ।" इति ।

ननु व्यक्तय एव वाचिकाः, अतो नोक्तदोषः ; वचनं तु तासां विशेष-रूपमविवक्षित्वा[2] जात्यात्मनैवोपचर्य प्रवर्तते ; ततो नोक्तदोष इति तत्राह—न चानुपाश्रितव्यावृत्तयो व्यक्तयो जात्यात्मना निर्दिश्यन्त इति साम्प्रतमिति । अनुपा-श्रिता अविवक्षिता व्यावृत्तिर्यासु वर्णव्यक्तिषु तास्तथोक्ताः । जात्यात्मना निर्दिश्यन्त इति 'शब्दात्' इत्येवमिति सिध्यति । न चेति साम्प्रतमित्यन्वयः ।

---

१. अन्तर्नीतः. क. ख. २. अविवक्षितत्वात्. ख.

व्यक्तयो जात्यात्मना निर्दिश्यन्त इति साम्प्रतम्, वर्णव्यक्तिसामानाधिकरण्यदर्शनात्—गोशब्दादर्थं प्रतिपद्यामहे—इति। नापि शब्दव्यक्त्यभिप्रायम्, तद्भेदात्—गोशब्दात्—इत्येकवचनानुपपत्तेः; न हि व्यक्तिविशेषपरास्तदभिधायिसमानाधिकरणवृत्तयो जातिशब्दा जातिसंख्यामनु-

---

इतिशब्दनिर्दिष्टं दर्शितमनुपाश्रितेत्यादिना। साम्प्रतं युक्तमित्यर्थः। असाम्प्रतत्वे कारणमाह—वर्णव्यक्तिसामानाधिकरण्यदर्शनादिति। वर्णव्यक्तिभिः शब्दशब्दस्य सामानाधिकरण्यदर्शनादित्यर्थः। कथमित्याह—गोशब्दादर्थं प्रतिपद्यामहे इतीति। गकारादयो हि शब्दजातेर्व्यक्तयः; गोशब्दादिति च कर्मधारयः।

द्वितीयं कल्पं दूषयति—नापि शब्दव्यक्त्यभिप्रायमिति। अत्रापि लौकिकं वचनमिति सिध्यति। कारणमाह—तद्भेदाद्गोशब्दादित्येकवचनानुपपत्तेरिति। तासां गकारादिशब्दव्यक्तीनां भेदाद्गोशब्दाद्गकारौकारविसर्जनीयशब्दादित्येकवचनानुपपत्तेरिति। बहुषु बहुवचनप्रसङ्गादिति भावः। ननु यथा राजसूयशब्दः समुदायिपरोऽपि समुदायसंख्यामनुरुध्यते तथा शब्दशब्दो व्यक्तिपरोऽपि जातिसंख्यामनुरुध्यताम्, अत आह—न हि व्यक्तिविशेषपरास्तदभिधायिसमानाधिकरणवृत्तयो जातिशब्दा जातिसंख्यामनुरुध्यन्त इति। न हि जातिशब्दा जातिसंख्यामनुरुध्यन्त इत्युक्ते "तावदेको व्रीहिः सुनिष्पन्नः" इत्यादिप्रयोगविरोधाद्व्यक्तिपरा इत्युक्तम्। व्यक्तिमात्रपरत्वेऽपि "ब्राह्मणो न हन्तव्यः" इत्यादिषु जातिसंख्यादर्शनाद्व्यक्तिविशेषेत्युक्तम्। व्यक्तिविशेषपरत्वेऽपि व्यावृत्त्यनुपाश्रयणेन 'शब्दात्' इति जात्यात्मना निर्देशसंभवात् 'गोशब्दादर्थं प्रतिपद्यामहे' इति वचनविशेषोपादानात् तदभिधायिसमानाधिकरणवृत्तय इत्युक्तम्। तदभिधायिनां व्यक्त्यभिधायिनां शब्दविशेषाणां समाने अधिकरणे वाच्ये वृत्तिः प्रवृत्तिर्येषां जातिशब्दानां ते

रुध्यन्ते ; न जातु भवति—देवदत्तयज्ञदत्तौ ब्राह्मणः—इति,—धवखदिरौ वृक्षः—इति वा । नापि समुदायाभिप्रायम् , जातिशब्दानामेकैकव्यक्ति-समवायेन जातेः समुदायनिवेशशून्यतया तदनुपातसामर्थ्याभावेन; ते हि

---

तथोक्तः । अत्रैवोदाहरणमाह— न जातु भवति देवदत्तयज्ञदत्तौ ब्राह्मण इति धवखादिरौ वृक्ष इति वेति । प्राणिविषये देवदत्तेत्युक्तम् , अप्राणिविषये धवेति । अथवा यो ब्राह्मणशब्दं जातिशब्दं नानुमन्यते, तं प्रति धवेत्युक्तम् । एवं श्लोकस्याभिप्रायो दर्शितः । संप्रति श्लोकोक्तमेव समुदायाभिप्रायत्वनिराकरणम-नुसन्धत्ते— नापि समुदायाभिप्रायमिति । अत्रापि लौकिकं वचनमिति सिध्यति । श्लोकं व्याचष्टे--जातिशब्दानामेकैकव्यक्तिसमवायेन जातेः समुदायनिवेशशून्यतया तदनुपातसामर्थ्याभावेनेति । जातिशब्दानां तदनुपातसामर्थ्याभावेनेत्यन्वयः । तदनुपातसामर्थ्याभावादित्यर्थः । 'समुदायानुपातिता नेक्षिता' इत्यनुपलब्धि-रुपन्यस्ता । समुदायानुपातित्वं चानुपातसामर्थ्यमेव ; अतोऽनीक्षणात् सामर्थ्या-भावो विवक्षित इति कृत्वोक्तम्—तदनुपातसामर्थ्याभावेनेति । जातिशब्दानां तदनुपातसामर्थ्याभावेनेत्यनेनैतत्तावदुक्तम्—जातेरन्यत्वात् तावन्न जातिशब्देन समुदायस्याभिधेयता संभवतीति । समुदाये जातिसमवायाभावाच्च समुदायस्य न जतिशब्दाभिधेयतेति दर्शयन्नाह—जातेः समुदायनिवेशशून्यतयेति । समुदाये निवेशः समुदायनिवेशः, तेन शून्या जातिस्तस्या जातेः समुदायनिवेशशून्य-तयापि कारणेन न जातिशब्दानां समुदायानुपातसामर्थ्यमिति । ननु जातेः समुदायनिवेशशून्यतासिद्धा ; सर्वव्यक्तिषु समवेता हि जातिः ; अत आह—एकैकव्यक्तिसमवायेनेति । जातेरित्यर्थात् सिध्यति, तन्त्रेण वा । न हि जातिर्व्यक्तिषु व्यासज्य वर्तते, किं तु प्रतिव्यक्ति कृत्स्नपरिसमाप्ता ; अतो न समुदायनिवेशशङ्कावकाश इति ।

जातिं तद्वतीर्वा व्यक्तीर्निमित्तरूपोपादानेनाचक्षते, न समूहम्; न हि

---

"न शाबलेयाद्गोबुद्धिस्ततोऽन्यालम्बनापि वा।
तदभावेऽपि सद्भावाद्घटे पार्थिवबुद्धिवत् ॥

प्रत्येकसमवेतार्थविषया वापि गोमतिः।
प्रत्येकं कृत्स्नरूपत्वात् प्रत्येकव्यक्तिबुद्धिवत् ॥

प्रत्येकसमवेतापि जातिरेकैकबुद्धितः ॥"

इति— न्यायादेकैकव्यक्तिसमवायश्च सिद्ध एवेति।

ननु जतित्वं जातिसमवायं चान्तरेण समुदायात्मन्येव जातिशब्दा वर्तन्तामित्यत आह—ते हि जातिं तद्वतीर्वा व्यक्तीर्निमित्तरूपोपादानेनाचक्षत इति। अनेन चोत्तरार्धव्याख्या प्रस्तुता। ते हीति। जातिशब्दा इत्यर्थः। जातिसङ्गता इत्यस्य व्याख्या—तद्वतीरिति। जातिशब्दा हि जातिवाचकाः, आकृत्यधिकरणन्यायात्। ते हि स्वतस्तावज्जातिमाचक्षते। यथा 'सम्प्रत्योषधीनां मध्य एको व्रीहिः सुनिष्पन्नः' इति। यथा च "श्येनचितं चिन्वीत" इति। प्रायेण त्वर्थक्रियाया व्यक्तिगतत्वात्तद्वतीर्व्यक्तीरेवाचक्षते "गामानय" "पशुमालभेत" इत्येवमादिषु। तदेवं जातिशब्दा जातिं वा तद्वतीर्व्यक्तीर्वाचक्षते।

ननु जातिवाचकेन शब्देन जातिमतीनामपि व्यक्तीनां कथमाख्यानसम्भवः, अत उक्तम्—निमित्तरूपोपादानेनेति। निमित्तस्य रूपस्य जातेरुपादानेन यथा शुक्लादिशब्दानां गुणं प्रवृत्तिनिमित्तत्वेनोपादाय गुणोपसर्जनद्रव्यवचनत्वम्, एवं जातिशब्दानां जातिं प्रवृत्तिनिमित्तत्वेनोपादाय जातिमद्व्यक्तिवचनत्वमिति। व्यावर्त्यमाह—न तु समूहमिति। आचक्षत इत्यनुषङ्गः।

**भवति यथा— धवादीनां वनम् धवादिवनम् —इति वा, तथा— धवादीनां वृक्षः धवादिवृक्षः इति— वा ।**

---

न तु समूहमित्येतदेव समूहवाचकत्वव्यापकप्रयोगविशेषाभावेन निदर्शयन्नाह—न हि[1] भवति यथा धवादीनां वनं धवादिवनमिति वा, तथा धवादीनां वृक्षो धवादिवृक्ष इति वेति । यथा किल लोके समुदायवाचिनो वनशब्दस्य धवादीनां वनमिति भेदविवक्षया वैयधिकरण्येन धवादिवनमिति चाभेदविवक्षया सामानाधिकरण्येन प्रयोगो दृश्यते तथा वृक्षशब्दस्य वैयधिकरण्येन वा सामानाधिकरण्येन वा प्रयोगो न भवतीति न समुदायवाचिता वृक्षशब्दस्येत्यर्थः । ननु जातिशब्दा जातिमेवाचक्षते, तद्वतीस्तु व्यक्तीर्लक्षयन्त्येव ; न त्वभिदधति । यथा च व्यक्तयो जातिसमवायेन लक्ष्यन्ते, एवं समुदायोऽपि व्यक्तिसमवेतत्वेनैकार्थसमवायात् जातिशब्दैर्लक्षयितुं शक्य एव, सम्बन्धमात्रनिमित्तत्वाल्लक्षणाया इत्युच्यते ; अत्राप्येष एव ग्रन्थो व्याख्येयः "नेक्षिता जातिशब्दानाम्" इत्यादिः । तत्र पुरस्तनस्य ग्रन्थस्य पूर्वैव व्याख्या । 'नापि समुदायाभिप्रायम्' इति[2] ग्रन्थस्य—न लौकिकं वचन जातिशब्देन समुदायं लक्षयित्वा समुदायाभिप्रायं भवितुमर्हतीत्यर्थः । कारणमाह—जातिशब्दानामिति । तदनुपातसामर्थ्याभावेनेति । समुदाये योऽनुपातः—मुख्यमर्थमभिधायानन्तरं तत्संबन्धेन गमनं लक्षणेति यावत्—तत्र सामर्थ्याभावादित्यर्थः । एकैकव्यक्तिसमवायेन जातेः समुदायनिवेशशून्यतयेति पूर्ववत् । जातिशब्दानां हि जातिसमवाय एव लक्षणायां बीजम्, न सम्बन्धान्तरमिति भावः । ते हि जातिं तावदाचक्षते, व्यक्तीर्वाचक्षते प्रत्याययन्तीति यावत् । निमित्तरूपोपादानेन स्वाभिधेयस्य रूपस्योपादानेनाभिधानेन तत्सम्बद्धा व्यक्तीरपि प्रत्याययन्ति लक्षणया इति न समूहं निमित्तरूपोपादानेनाचक्षते, न स्वाभि-

---

१. न हि. ख. २. इति नापि लौकिकं. ख.

धेयद्वारैकार्थसमवायेन लक्षयन्तीत्यर्थः । यथा धवादीनामिति । जातिशब्दस्य समुदायलक्षकत्वे हि यथा वनशब्दस्य समुदायवाचकस्य सामानाधिकरण्येन वयैधिकरण्येन वा प्रयोगः, तथा वृक्षशब्दस्यापि समुदायलक्षकस्य वैयधिकरण्येन सामानाधिकरण्येन वा प्रयोगः स्यादिति । यथोक्तम्—

"निरूढा लक्षणाः काश्चित्सामर्थ्यादभिधानवत् ।
क्रियन्ते साम्प्रतं काश्चित् काश्चिन्नैव त्वशक्तितः ॥" इति ।

तत्रैतत्स्यात्—अभिधानशक्तिः स्वाभाविकी, लक्षणा तु न सम्बन्धादधिकं निमित्तमपेक्षत इति । उच्यते—सत्यमेवमेतत् ; दर्शनबलात्तु शब्दशक्तिमपि काञ्चिदपेक्षत इत्यास्थेयम् । तदुक्तम्—

"तस्माद्यथैव शब्दानां शक्तिभेदोऽभिधां प्रति ।
प्रत्येतव्यस्तथार्थानां लक्ष्यार्थान्तरगोचरः ॥" इति ।

अतो जातेरर्थस्य साक्षात्स्वसंबन्धिनमेव लक्षयितुं सामर्थ्यम्, न परम्परयापि संम्बन्धिनमिति दर्शनबलादङ्गीक्रियत इति । इदानीं 'जातिमाचक्षते' इत्येतद्दृष्टान्तार्थम् ; यथा जातिशब्दानामभिधानं जातिविषयम् ; तद्वदेव लक्षणा व्यक्त्येकगोचरेत्यभिप्रायः । अत्र चोदयति—ननु दृष्टः समुदायानुपाती जातिशब्दः सहकारा वनमिति सामानाधिकरण्यदर्शनादिति । मा भूत् धवादीनां वृक्ष इत्यादिदर्शनात् समुदायवाचकत्वम् ; नैतावतापि जातिशब्दस्य समुदायवाचकता नेक्षितेति वक्तुं शक्यते, धवादिवनमित्यत्रैवेक्षणात् सहकारा वनमित्यत्र वा ; सहकारशब्दो हि जातिशब्दः । स च वनशब्देन सामानाधिकरण्यात् समुदायवाचकः । एकस्मिन्नर्थे वृत्तिर्हि सामानाधिकरण्यम् । तस्मात्तद्वदेव शब्दशब्दस्यापि समुदायवाचकत्वं न नोपपद्यत इत्यभिप्रायः ।

ननु दृष्टः समुदायानुपाती जातिशब्दः—सहकारा वनम्—इति सामानाधिकरण्यदर्शनात्। न; समूहिनीर्व्यक्तीराचक्षाणस्य समूहसमूहिनोरभेदविवक्षायां सामानाधिकरण्यम्; तथा च बहुवचनम्; अन्यथा तदनुपातिन एकवचनं स्यात्, वनशब्दवत्। न चेह तथा, समुदायशब्दा-

---

परिहरति—नेति। व्यक्तीरेव सहकारशब्दोऽभिधत्ते, न समुदायमित्यभिप्रायः। लक्षणापक्षेऽपि व्याख्यायते—ननु दृष्टः समुदायानुपाती समुदायलक्षको जातिशब्दः; सहकारा वनमिति सहकारवनशब्दयोर्मिथः सामानाधिकरण्यदर्शनात् सहकारशब्दस्यं वनशब्दसामानाधिकरण्यं वनार्थसमुदायलक्षकत्वमन्तरेण नोपपद्यत इति। परिहरति—नेति। न दृष्टः समुदायानुपाती जातिशब्द इत्यर्थः। कारणमाह—समूहिनीर्व्यक्तीराचक्षाणस्य समूहसमूहिनोरभेदविवक्षायां सामानाधिकरण्यमिति। व्यक्तीराचक्षस्येति। अभिदधानस्येति प्रथमे व्याख्याने, लक्षयत इत्युत्तरत्र। सहकारशब्दस्येति सिध्यति। व्यक्तीरिति। न तु समुदायमित्यर्थः। व्यक्तारीचक्षाणस्य सहकारशब्दस्य वनशब्देन सामानाधिकरण्यम्। कथं व्यक्त्याख्यायकेन समुदायवाचिनः सामानाधिकरण्यम्। अत उक्तम्—समूहिनीरिति। सन्तु सहकारशब्दस्यार्था व्यक्तयः समूहिन्यः, वनशब्दस्यार्थः समूहोऽप्यस्तु; तथापि कथं सामानाधिकरण्यम्; अत उक्तम्—समूहसमूहिनोरभेदविवक्षायामिति। अभेदविवक्षायां चापृथक्सिद्धिर्बीजमिति विपरीतं किं न स्यात्; अत आह—तथा च बहुवचनमिति। व्यक्त्याख्याने च सति सहकारा इति बहुवचनं समञ्जसं भवतीत्यर्थः। अन्यथा तदनुपातिन एकवचनं स्यादिति। व्यक्त्याख्यानमभेदविवक्षां च विहाय साक्षात्समुदायानुपातिनः सहकारशब्दात् परत एकवचनं स्यात्। प्राप्नुयादित्यर्थः। वनशब्दवदिति। यः प्रतिसंबन्धी वनशब्दस्तद्वदिति। "काश्चिन्नैव त्वशक्तितः"

भावात्, गौः—इति गकारादीनां विभक्तैरात्मभिरुपादानात्, बहुवचना-

---

इति। रूपरसादिशब्दानां द्रव्यलक्षणायामशक्तिरुक्ता; पुनस्तत्र द्रव्यवाचकशब्दसामानाधिकरण्येन लक्षणाशक्तिरुक्ता विनापि चानुगमनात्। सम्बन्ध्यन्तरवशेन सा कदाचिदुपलभ्यते। तद्यथा—मधुरो रसः स्निग्धः शीतो गुरुश्चेति। स्निग्धत्वशीतत्वादीनां गुणान्तराविशेषणत्वात्, न रसेन सम्बन्धोऽस्तीति रसलक्षितेन द्रव्येण संबध्यत इति वार्तिके तद्वदेव समुदायवाचकशब्दसामानाधिकरण्येऽपि न जातिशब्दानां समुदायलक्षकत्वमित्यनेन दर्शितमिति वेदितव्यम्। अस्तु वा समुदायशब्दसामानाधिकरण्ये जातिशब्दानां समुदायलक्षकत्वं समुदायवाचकत्वं वा, तथापि किं तवेह सिध्यति। न किमपीत्यभिप्रायेणाह—न चेह तथेति। इह 'गोशब्दादर्थं प्रतिपद्यामहे' इति वाक्ये। तथा समूहिनीर्व्यक्तीराचक्षाणस्य समूहसमूहिनोरभेदविवक्षायां सामानाधिकरण्यम्—इत्येतदपि न संभवतीत्यर्थः। कारणमाह—समुदायशब्दाभावादिति। न हि 'सहकारा वनम्' इत्यत्रेव 'शब्दादर्थं प्रतिपद्यामहे' इत्यत्र कश्चित्समुदायशब्दोऽस्ति अनुपलम्भादिति। ननु 'गौरित्येकं पदम्' इत्यत्र गौरिति समुदायशब्दो भविष्यति। अत आह—गकारादीनां विभक्तैरात्मभिरुपादानादिति। गौरित्येवं गकारादीनां विभक्तैरसंहतैरात्मभी रूपैरुपादानादिति। न हि सङ्घातवाचकः कश्चिदत्रास्तीति भावः। यद्यपि गौरिति समुदायशब्दः, तथापि नोपपद्यत इत्याह—बहुवचनाभावाच्चेति। 'गौरित्येकं पदम्' इत्यत्र—बहूनि पदानि इति 'गौरिति शब्दात्' इत्यत्र शब्देभ्यः इति 'सहकाराः' इतिवत् बहुवचनं प्रसज्येत, न चेह तथेत्यर्थः। परमार्थतस्तु न 'गौः' इत्यस्य समुदायशब्दता। ननु गौरिति समाहारद्वन्द्वः, तथा च पञ्चपूली इतिवत् समुदायवाचकता; अत आह—अत एव च न समाहारनिर्देश इति। बहुवचनाभावादेवेत्यर्थः। समाहारनिर्देश एकवचनान्तत्वेऽपि विशेष्याज्जातिशब्दाद्बहुवचनमेव स्यात्; न चेह तथेति भावः। एतदेव स्फोरयति—

भावाच्च । अत एव च न समाहारनिर्देशः[1] ; न हि भवति—धवखदिरं वृक्षमानय—इति, अपि तु—धवखदिरं वृक्षौ—इति, समूहसमूहिनोरभेदोपचारात् । नाप्यन्त्यवर्णाभिप्रायम् , पूर्ववर्णपरामर्शनात्[2] । तस्मान्नैक शब्दात्मानमन्तरेण लौकिकवचनोपपत्तिः ।

---

न हि भवति—धवखदिरं वृक्षमानयेति , अपि तु—धवखदिरं वृक्षावितीति । न क्वचिद्धवखदिरं वृक्षमानयेत्येवं प्रयोगोऽस्ति, किं तु धवखदिरं वृक्षावानयेत्येव प्रयोगो भवतीत्यर्थः । किं पुनर्धवखदिरं वृक्षाविति प्रयोगे कारणम् । तदाह—समूहसमूहिनोरभेदोपचारादिति । धवखदिरमिति समाहारापरनामधेयस्य समूहस्य वाचकम् ; अत एकवचनान्तम् ; वृक्षशब्दस्तु व्यक्तिवाचकतया समूहिपर इति द्विवचनान्त एव ; न त्वेकवचनान्त., समुदायानुपाताभावात् । सामानाधिकरण्यं तु पूर्ववदभेदोपचारादेवेति । एवं तावत्—

"तदारूढास्तदा वर्णा न दूरेऽर्थावबोधनम् ।
शब्दादर्थमतिस्तेन लौकिकैरभिधीयते ॥" इत्येतत्प्रतिक्षिप्तम् ।

सम्प्रति—

"यदि वा पूर्वसंस्कार इतिकर्तव्यतेष्यते ।
वर्णोऽन्त्यो गमकस्तस्य शब्दत्वान्मुख्यता भवेत् ॥"

इत्येतन्निराकुर्वन्नाह— नाप्यन्त्यवर्णाभिप्रायमिति । लौकिकं वचनमित्येवं सिध्यति । कारणमाह—पूर्ववर्णपरामर्शनादिति । लौकिको हि पूर्ववर्णानपि परामृश्य ब्रवीति । अत एव क्वचित् 'गौरिति शब्दात्' इत्याह । अतो नान्त्यवर्णाभिप्रायमेतदित्युन्नीयते । वर्णापरामर्शनादिति नञ्युक्तपाठे प्रसङ्गाभिप्रायं व्याख्येयम् । श्लोकस्य प्रकृतोपयोगं दर्शयन्नाह—तस्मान्नैकं शब्दात्मानमन्तरेण लौकिक-

---

१. निर्देशो न भवति–मूलम्. २. परामर्शात्–मूलम्.

स्यान्मतम्—मोपपादि, लौकिकवचनानामुभयथापि दर्शनादुपपन्नार्थानामनुपपन्नार्थानां च; न हि वचनानुपपत्तिमात्रेण प्रमाणरहितोऽर्थः शक्योऽवगन्तुमिति[1]।

तदसत्[2], अनुपपन्नार्थत्वाप्रतीतेः; भवति हि जरद्गवादिवाक्येष्वनुपपन्नार्थप्रतीतिः, न त्विह तथा; न हि सार्वलौकिकमवि-[3]

---

वचननोपपत्तिरिति। यस्मादेवं वर्णेषु कथंचिदपि न सम्भवः तस्मादित्यर्थः। लौकिकस्य वचनस्योपपत्तिः।

सम्प्रति श्लोकस्यैवानवतारमाशङ्कते—**स्यान्मतम् .... ... शक्यतेऽवगन्तुमिति**। अस्यार्थः—मोपपादीति। लौकिकं वचनमिति सिध्यति। कारणमाह—लौकिकवचनानामिति। कर्मधारयः षष्ठीसमासो वा लौकिकानां वचनानामिति। उभयथापीत्येतद्विवृतम्—उपपन्नार्थानामनुपपन्नार्थानां चेति। ननु उपपत्तिसंभवे नानुपपन्नमिति कल्पना युक्ता। अत आह—न हि वचनानुपपत्तिमात्रेणेति। मात्रशब्देन प्रमाणमूलतां व्यवच्छिनत्ति। अत एवाह—प्रमाणरहितोऽर्थः शक्यतेऽवगन्तुमिति। प्रत्यक्षादिभिरनवगम्यमान इत्यर्थः। अनेन चानुपलब्धिनिरस्तत्वं दर्शितम्। यथोक्तम्—"अथाप्रत्ययितात् पुरुषादनिन्द्रियविषयं वा तत्पुरुषबुद्धिप्रभवमप्रमाणम्" इति। स्यान्मतमित्यादिना भाष्यमेवार्थतः पठितमिति द्रष्टव्यम्।

तदेतद्दूषयति—**तदसत् .... .... .... .... अर्थप्रत्यय इति**। अस्यार्थः—तदसदिति। यदेतन्मतं तदसदेवेत्यर्थः। कारणमाह—अनुपपन्नार्थत्वाप्रतीतेरिति। अनुपपन्नोऽर्थो यस्य तदनुपपन्नार्थं, तस्य भावस्तत्त्वम्।

---

१. अवधातुम्—मूलम्.
२. तदेतदसत्—मूलम्.
३. सर्वात्मना—मूलम्.

गानेन प्रयोगपथमवतरत्यनुपपत्तिरुपपत्तिमती; विप्रतिपद्यमाना अपि हि शब्दे नैनं प्रयोगं नानुमन्यन्ते । न चाप्रमाणकत्वम्; नूनमुपलभन्ते

---

लौकिकवचनस्य केनचिदपि प्रमाणेनानुपपन्नार्थत्वं यतो न प्रतीयते तस्मादित्यर्थः । एतदेव व्याचष्टे—भवति हीति । जरद्गवादिवाक्येष्विति—

"जरद्गवः कम्बलपादुकाभ्यां
द्वारि स्थितो गायति मद्रकाणि ।
तं ब्राह्मणी पृच्छति पुत्रकामा
राजन् रुमायां लशुनस्य कोऽर्थः ॥"

इति । "दश दाडिमानि षडपूपाः" "कुण्डमजाजिनम्" इत्यादिष्वित्यर्थः । अनुपपन्नार्थप्रतीतिरिति । प्रमाणबाधितार्थप्रतीतिरित्यर्थः । न त्विह तथेति । यथा जरद्गवादिषु भवति तथा 'शब्दादर्थं प्रतिपद्यामहे' इत्यत्रानुपपन्नार्थप्रतीतिर्न त्वेव भवतीत्यर्थः । इहेति । लौकिके वचन इत्यर्थः । एतदेव व्याचष्टे—न हीति । अनुपपत्तिरुपपत्तिमतीत्यनेनान्वयः । लौकिके वचने यानुपपत्तिः सा नोपपत्तिमतीत्यर्थः । वचनविशेषणं प्रयोगपथमवतरतीति । अवतरदित्यस्य सप्तमी अवतरतीति । प्रयोगस्य पन्थाः प्रयोगपथः । प्रयोगपथं विशिनष्टि—सार्वलौकिकमिति । अनेन शशिचन्द्रनिषेधवल्लोकविरुद्धतां दर्शयति । अविगानेनेति । अवतरतीत्यन्वयः । अनेन च द्रढिमानं दर्शयति । अविगानमेव दर्शयति—विप्रतिपद्यमाना अपि हि शब्दे नैनं प्रयोगं नानुमन्यन्त इति । शब्दे स्फोटात्मनि विप्रतिपद्यमाना इत्यन्वयः । एनं प्रयोगं 'शब्दादर्थं प्रतिपद्यामहे' इत्यादिकं नानुमन्यन्त इति न; किं तु अनुमन्यन्त एवेत्यर्थः । यत्पुनः प्रमाणरहित इत्युक्तं तत्राह—न चाप्रमाणकत्वमिति । लौकिकवाक्यार्थस्यैकस्य शब्दात्मन इति सिध्यति । कारणमाह—नूनमुपलभन्ते प्रमाणेम

**प्रमाणेन शब्दात्मानमेकम् ; यत एवमपहस्तितविप्रतिपत्तयः प्रयुञ्जते । तस्मान्न पश्चात्तनज्ञाननिवेशिभ्यो वर्णेभ्यो॑ऽर्थप्रत्ययः ॥**

---

शब्दात्मानमेकमिति । उपलभन्ते लौकिका इति सिध्यति । प्रमाणेनोपलभन्त इत्यन्वयः । नूनं ध्रुवमित्यर्थः । हेतुमाह —यत एवमपहस्तितविप्रतिपत्तयः प्रयुञ्जत इति । अपहस्तिता अपाकृता विप्रतिपत्तिर्विगानं यैरिति विग्रहः । अतो नूनमुपलभन्त इति समाप्तिः । प्रघट्टकार्थमुपसंहरन्नाह—तस्मान्न पश्चात्तन-ज्ञाननिवेशिभ्यो वर्णेभ्योऽर्थप्रत्यय इति । पश्चात्तने ज्ञाने चित्ररूपे केवलस्मरणरूपे वा ये निविशन्ते वर्णाः तेभ्यो नायमर्थप्रत्यय उत्पद्यत इति सिद्धमिति । एतच्चोत्तरकथाप्रस्तावनायोक्तमिति वेदितव्यम् ॥

इति स्फोटसिद्धिटीकायां

नवमः श्लोकः

---

१. Omitted वर्णेभ्यः क, ख.

अस्तु तर्हि "पूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णो वाचकः" इत्येव; मा भूदेष ज्ञानप्रसवः स्मरणनिमित्तं संस्कारः ; अपि तु यागादिकर्मभेदोपपादित इव स्वर्गादिनिमित्तमपूर्वाभिधानोऽन्य एव नियतक्रमकर्तृभेदप्रयुक्त-

---

एवं व्याख्यातॄणां मतं निरस्तम् । सम्प्रति भाष्योक्तमेव प्रकारं दूषयिष्यन्नादौ तमेवावतारयति—अस्तु तर्हि....अर्थबुद्धिषु । अस्यार्थः—अस्तु तर्हीति । यदि पश्चात्तनज्ञाननिवेशिभ्योऽर्थप्रत्ययो नोपपद्यते तर्हीत्यर्थः । "पूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णो वाचकः" इत्येवेत्येवकारेण यदेकज्ञाननिवेशिवर्णवादिनोपेक्षितं तदेवेति दर्शयति । अथवा एवकारेण भाष्यकारीयत्वेन मुख्यत्वमस्य पक्षस्य दर्शयति । नन्वेष संस्कारः स्मृतिहेतुः अन्यो वा । तत्र स्मृतिहेतोः 'शक्तेः शक्त्यन्तरायोगः' इत्यादि रेव दूषणम्, अन्यत्वे धर्मिकल्पनैव दोष इति । तत्राद्यमनङ्गीकरणेन परिहरन्नाह—मा भूदेष ज्ञानप्रसवः स्मरणनिमित्तं संस्कारः इति । एष भाष्यस्थः संस्कारो ज्ञानजन्यः स्मृतिहेतुर्यः संस्कारः स मा भूदित्यर्थः । अथवा य एषोऽन्त्यवर्णसहकारी पूर्ववर्णानुभवजन्यः संस्कारः स स्मृतिहेतुः संस्कारो मा भूदित्यर्थः । ज्ञानप्रसव इति । ज्ञानमनुभवः प्रसवः प्रभवो यस्येति बहुव्रीहिः । ज्ञानस्य जन्य इति वा तत्पुरुषः । स्मरणनिमित्तमिति । स्मरणस्य निमित्तमिति । द्वितीयं पक्षमवलम्बते । तत्र—

"प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि ।"

इति कृत्वा संस्कारान्तरपक्षं प्रमाणवत्त्वप्रदर्शनपूर्वकमाह—अपि त्विति । अन्य एवेत्यन्वयः । किं तु स्मरणहेतोरन्य एवैष संस्कार इत्यर्थः । ननु संस्कारो यद्विषयज्ञानजन्मा तत्रैव धियमादधीत ; एष तु वर्णज्ञानजन्मा कथमर्थविषयं ज्ञानं कार्यान्तरं जनयेत् ? अत उक्तम्—यागादिकर्मभेदोपपादित इव स्वर्गादिनिमित्तमपूर्वाभिधान इति । अपूर्वाभिधानः सस्कार इव-

---

१. Omitted भेद—मूलम्.

वर्णविज्ञानोपाहितोऽर्थाधिगमफलः, यथा चापूर्वाभिधानभावनोपजने कर्तृ-

स्मृतिहेतोर्विलक्षणस्वभावोऽन्य इति । न हि तस्य—

"यज्जातीयसमुत्पाद्यस्तज्जातीयस्य कारणम् ।"

इति लक्षणमस्तीति दर्शितम्—यागादिकर्मभेदोपपादित इति स्वर्गादिनिमित्त-मिति च । ननु तस्मिन् वेदः प्रमाणमस्ति ; अस्मिंस्तु संस्कारे किं प्रमाणम् ? अत उक्तम्—नियतक्रमकर्तृभेदप्रयुक्तवर्णविज्ञानोपाहित इति । नियतः क्रमः कर्ता च येषां ते नियतक्रमकर्तृकाः ; तेषां भेदप्रयुक्तानां पृथगुच्चारितानां वर्णानां विज्ञानानि यानि तैरुप समीपे स्वाश्रय एवाहितो निक्षिप्त इति विग्रहः । अर्थाधिगमफल इति । अर्थज्ञानं फलं यस्येति । यदि प्रयुक्तवर्णविज्ञानोपाहितः तर्हि व्युत्क्रमोच्चारणेऽनेक-वक्तृकत्वेऽपि प्रसज्येत । अत उक्तम्—नियतक्रमकर्तृकेति । क्रमकर्त्रोः क्रमस्या-भ्यर्हितत्वमत्र विवक्ष्यते, तेन पूर्वनिपातः । केचित्तु नियतक्रमाणां कर्तृभेदप्रयुक्तानां कर्तृविशेषेणैकेन वक्त्रा प्रयुक्तानामिति विगृह्णन्ति । कर्तृकभेदेति पाठे पूर्वव्याख्या, उत्तरा कर्तृभेदेति पाठे । नन्वपूर्वे क्रमादि-नियमश्चोदनाप्रमाणकः, अत्र पुनस्तदुपयोगे किं प्रमाणम् ? अत आह—यथा चापूर्वाभिधानभावनोपजने कर्तृक्रमनियमोपयोगावगमः शास्त्रसामर्थ्यात् तथ इहापि कार्यव्यवस्थादर्शनसामर्थ्यात् कर्तृक्रमनियमोपयोगावगम इति । अपूर्वाभिधान-भावनोपजन इति । अपूर्वमित्यभिधानं यस्याः सा अपूर्वाभिधाना, तस्या भावनायाः संस्कारस्योपजन इति विग्रहः । कर्तृक्रमनियमोपयोगावगम इति । अभ्यर्हितत्वं कर्तुरेव विवक्षित्वा पूर्वनिपातः । कर्तुः क्रमस्य च नियमः कर्तृक्रमनियमः, तस्य वर्णैरर्थाभिधाने उपयोगस्यावगम इति । शास्त्रसामर्थ्यादिति । यजेतेत्येकवचना-सामर्थ्यात् कर्तृनियमः, दर्शादीनां क्रमाम्नानसामर्थ्यात् क्रमनियम इति । दार्ष्टान्तिके

१. उपहितः—मूलम्.

क्रमनियमोपयोगावगमः शास्त्रसामर्थ्यात्, तथेहापि कार्यव्यवस्थादर्शन-सामर्थ्यात् कर्तृक्रमनियमोपयोगावगमः । संस्कारापेक्षिणश्चान्त्यवर्णस्य प्रत्यायकत्वान्न शब्दस्याप्रत्यायकत्वम्, येन शब्दार्थसम्बन्धहानिः स्यात्; न

---

योजयति—तथेहापीति । वर्णेषु यः संस्कारोपजनस्तस्मिन्नपीत्यर्थः । कार्यव्यवस्था-दर्शनसामर्थ्यादिति । कार्यमर्थाधिगमः, तस्य या व्यवस्था तस्या दर्शनस्य सामर्थ्यादिति षष्ठीसमासत्रयम् । व्यवस्था च 'यथा तत्र कैवल्ये यौगपद्येऽभिमतानु-पूर्व्यभेदे कर्तृभेदे च न फलोपजनः' इत्यादिनोक्तानुसन्धातव्या । कर्तृक्रमनियमो-पयोगावगम इति । एतच्च द्वन्द्वपूर्वकं षष्ठीसमासत्रयम् । इदमाकूतम्—यथा हि दर्शादिषु क्रमाम्नानसामर्थ्यादवान्तरापूर्वाण्यापरमापूर्वनिष्पत्तेः स्थायीनि कल्प्यन्ते, तद्वद्वर्णेष्वपि नियतक्रमोच्चरितवर्णसमनन्तरमर्थधियमुदीक्षमाणाः तदन्यथानुपपत्त्यैव कमपि प्रत्येकवर्णजनितमतिशयं कल्पयिष्यामः ; तद्वशेन स्वरूपतः सहासम्भवन्तोऽपि वर्णाः संहत्य क्रियायै घटिष्यन्त इति । नन्वेवं संस्कारस्यार्थप्रत्यायकत्वे शब्दार्थसम्बन्धग्रहणव्याकोप इत्यत्राह—संस्कारापेक्षिणश्चान्त्यवर्णस्य प्रत्यायकत्वात् न शब्दस्याप्रत्यायकत्वम्, येन शब्दार्थसम्बन्धहानिः स्यादिति । यदि वयं वर्णविज्ञानजनिताः संस्कारा वाचका इत्यवोचाम तत एवमुपालभ्येमहि ; वयं तु पूर्ववर्णजनितसंस्कारोपकृतमन्त्यवर्णं वाचकमाचक्ष्महे इति कुतः शब्दस्याप्रत्यायकत्वं सम्बन्धग्रहणहानिर्वेति । ननु संस्कारापेक्षित्वेऽन्वयव्यतिरेकाभ्यां संस्काराणामेव वाचकत्वं स्यात् 'अश्वः' इत्यत्र विसर्जनीयसद्भावेऽपि गोत्वाप्रत्ययात् 'गौः' इत्यत्र संस्कारसद्भावे गोत्वप्रत्ययदर्शनाच्च ; अत आह—न हीतिकर्तव्यतापेक्षित्वं कारकाणां

---

१. व्यवस्थान--मूलम्.

**हीतिकर्तव्यतापेक्षित्वं कारकाणां कारकतां विहन्ति, सर्वत्र व्याहतिप्रसङ्गात्; पूर्वेऽपि च वर्णाः संस्काराभिधानव्यापारोपाया यथास्वमभिधेयप्रत्ययमुपाद-**

---

कारकतां विहन्तीति । कारकाणामित्युभयत्र संबध्यते । कारकाणामिति-कर्तव्यतापेक्षित्वं न कारकाणां कारकतां विहन्तीति । सर्वत्र व्याहतिप्रसङ्गादिति । यावन्ति कारकाणि तेषु सर्वेष्वपि कारकत्वव्याहतिः प्रसज्येत, इतिकर्तव्यता-मन्तरेण कारकत्वाभावात् । यथाहुः—

"न हि तत्करणं लोके वेदे वा किञ्चिदीदृशम् ।
इतिकर्तव्यतासाध्ये यस्य नानुग्रहेऽर्थिता ॥" इति ।

ननु व्युत्पत्तिकाले वर्णसमुदायस्यार्थेन सम्बन्धो गृहीतः, नान्त्यवर्णमात्रस्य; अतोऽन्त्यवर्णस्य वाचकत्वे पूर्वेषामप्रत्यायकत्वं सम्बन्धग्रहणबाधश्च स्यात्; अत आह—पूर्वेऽपि च वर्णाः संस्काराभिधानव्यापारोपाया यथास्वमभिधेय-प्रत्ययमुपादधाना नाप्रत्यायका इति । पूर्वेऽपि च वर्णा नाप्रत्यायका इति सम्बन्धः । प्रत्यायका एवेत्यर्थः । क्वचित्तु प्रत्यायका इति पाठः । कथमित्यत उक्तम्—यथास्वमभिधेयप्रत्ययमिति । यस्य पदस्य यत्र सम्बन्धो गृहीतः तत्र पूर्वेऽपि वर्णा व्याप्रियन्त एव अन्त्यवर्णवदेव तस्यार्थस्य प्रतिपत्ताविति । ननु "पूर्ववर्णजनितसंस्कारसहितः" इत्युक्तम्, अत पूर्वेषां संस्कारजनन-मन्त्यस्यैव वाचकत्वमिति कथं पूर्वेऽर्थप्रत्ययमुत्पादयन्ति ? अत उक्तम्—संस्काराभिधानव्यापारोपाया इति । संस्कार इत्यभिधानं यस्यावान्तरव्यापारस्य स तथोक्तः, तादृग्व्यापार उपायो येषां ते तथोक्ताः । अथवा अभिधानं नाम व्यापारः शब्दानामर्थप्रत्यायनोपाय इति विज्ञातमेव । कः पुनरसौ व्यापारोऽन्यः संभवति । अतः संस्कारादिति । संस्कार एवाभिधानव्यापार उपायो येषामिति

धाना नाप्रत्यायकाः[1] ; न हि स्वव्यापारव्यवायः कारकाणां कारकतां[2] विहन्ति, मोपघानि सर्वत्रेति । न च संस्कारोपजनार्थं शब्दोच्चारणम्, अपि

---

विग्रहः । एतदेव स्फोरयति—न हि स्वव्यापारव्यवायः कारकाणां कारकतामुपहन्ति मोपघानि सर्वत्रेति । यथा किलेतिकर्तव्यतापेक्षा कारकाणामवश्यंभाविनी तथा स्वव्यापारव्यवायोऽप्यवश्यंभाव्येव । न खलु स्वव्यापारव्यवायः कारकाणां कारकत्वमुपहन्ति । अत्रापि पूर्ववत्कारकाणामित्युभयत्रापि संबध्यते । मोपघानि सर्वत्रेति हेतोः । यथोक्तम्—

"स्वव्यापारव्यवायोऽपि सर्वस्मिन्नेव कारके ।
दृष्टो व्यापार ईदृक् च शब्दस्येत्यव्यवेतता ॥
तस्माद्यस्य विवक्ष्येत प्रधानं धातुभिः क्रिया ।
स कर्ता गुणभूतान्यव्यापारे करणादिता ॥
इतिकर्तव्यतात्वेन सर्वेषां तेन सङ्गतिः ।
अवान्तरक्रियायोगात्प्रधानक्रियया सह ॥" इति ।

परिहारान्तरमाह—न च संस्कारोपजनार्थं शब्दोच्चारणम् । अपि त्वर्थप्रतिपत्त्युद्देशेनेति । संस्कारोपजनार्थमिति संस्कारोपजनोद्देशेनेत्यर्थः । अर्थप्रतिपत्त्युद्देशेनेति । यथोक्तम्—"दर्शनस्य परार्थत्वात्" इति । यथा किलाभिहितान्वयनये वाक्यार्थस्य शाब्दत्वमुद्देशात्, यथा च यागस्य स्वर्गसाधनत्वम्, एवं पदार्थस्यापि उद्देशादेव पूर्ववर्णविषये शाब्दत्वमिति । यथोक्तम्—

"संस्कारजननार्थं च न शब्दोच्चारणं मतम् ।
अर्थप्रतीतिमुद्दिश्य प्रयुक्तस्य क्रमस्त्वयम् ॥
तस्मात्तादर्थ्यतः शब्दः फलेन व्यपदिश्यते ।" इति ।

---

१. प्रत्यायकाः. मूलम् । २. कारकत्वम्. मूलम् ।

त्वर्थप्रतीत्युद्देशेन । न चेदं चतुरश्रम्—तुल्यायामदृष्टकल्पनायां कः संस्कारेऽनुरोधः–इति, संस्कारकल्पनाया अवश्यंभाविनीत्वात् । तथा हि—यस्याप्यनवयवः शब्दात्मार्थप्रतीतिनिमित्तं ध्वनितो वर्णतो वा प्रतिलब्धाभिव्यक्त्यनुग्रहः प्रकाशते, तस्यापि नानपेक्षितेतरेतरा वर्णा ध्वनयो वा तम-

---

किं पुनरिदं भवतो व्यवसितम् ? यतः प्रयस्यता संस्कारपक्षः स्थाप्यते , एकश्च शब्दात्मा निषिध्यते । शब्दकल्पने ह्यदृष्टकल्पना स्यादिति चेत् हन्तैषा संस्कारकल्पनेऽपि तुल्यैव । अत आह—न चेदं चतुरश्रं तुल्यायामदृष्टकल्पनायां कः संस्कारेऽनुरोध इतीति । न चेदं वक्ष्यमाणं चतुरश्रं सुन्दरम् । इदंशब्दनिर्दिष्टमेव दर्शयति—तुल्यायामदृष्टकल्पनायां यथैकः शब्दात्मा न भवन्मते दृष्टः किं तु कल्प्य एव तथा संस्कारोऽपि न दृष्ट इति तुल्यायामदृष्टकल्पनायां सत्यां कस्तव संस्कारेऽनुरोधः संस्कार एव केवलेऽनुसारः, न त्वेकस्मिन् शब्दात्मनीतीदमपि स्फोटवादिनोच्यमानं न चतुरश्रमिति । क इति निष्प्रमाणक इत्यर्थः । कारणमाह—संस्कारकल्पनाया अवश्यंभाविनीत्वादिति । शब्दकल्पनेऽपि पुनः संस्कारकल्पनावश्यंभाविन्येवेति कृत्वा संस्कारकल्पनैवानुरुध्यत इति नाप्रमाणकत्वमिति । एतदेव व्याचष्टे—तथा हीति । यस्यापीति । वादिन इति सिध्यति । अनवयवः शब्दात्मेति । एकः पदात्मेति यावत् । अर्थप्रतीतिनिमित्तमिति । अर्थस्य या प्रतीतिः तस्या निमित्तमिति । अनेन तत्र प्रमाणमुपन्यस्तं निमित्तत्वसम्भवादेकवचनोपपत्तेश्चेति । ध्वनितो वर्णतो वा प्रतिलब्धाभिव्यक्त्यनुग्रहः प्रकाशत इति । ध्वनितो वर्णतो वेति मतभेदात् अनास्थया वा वर्णग्रहणम् । प्रतिलब्धाभिव्यक्त्यनुग्रह इति । प्रतिलब्धोऽभिव्यक्तिरेवानुग्रहो येनेति । तस्यापीति । यच्छब्दप्रतिसंबन्धीति । नानपेक्षितेतरेतरा वर्णा ध्वनयो वा तमवद्योतयन्तीति । नेति । अवद्योतयन्तीत्यन्वयः । अनपेक्षितेतरेतरा

---

१. प्रतिपत्ति-मूलम् ।

२. शब्दोऽर्थ, मूलम् ।

३. तरवर्णाः. मूलम् ।

व्द्योतयन्ति ; तस्यार्थस्येवाप्रकाशनात् ; अवयवशस्त्ववद्योतनमनाशङ्कनीय-मेव, तदभावादप्रत्ययाच्च; नापि संहताः, नियतक्रमवृत्तित्वाद्दृष्टप्रकारविपर्यये

---

इति । अनपेक्षितमितरेतरमन्योन्यं यैरिति विग्रहः । वर्णा वा ध्वनयो वेति पूर्ववत् । तमेकं शब्दात्मानम् । कारणमाह—तस्यार्थस्येवाप्रकाशनादिति । तस्यैकस्य शब्दात्मनोऽर्थस्येवेति यथार्थस्यैकैकस्मान्न प्रकाशनं तथैकस्य शब्दात्मनोऽपि नैकैकस्मात्प्रकाशनमिति । नन्वेकः शब्दात्मा वर्णध्वनिभ्यां प्रत्येकमवयवशः प्रकाश्यताम् , अत आह—अवयवशस्त्ववद्योतनमनाशङ्कनीयमेवेति । कारणमाह—तदभावादिति । न हि निरवयवस्य पदस्यावयवाः सन्ति । हेत्वन्तरमाह—अप्रत्ययाच्चेति । अनुपलब्धिनिरस्तत्वाच्चेत्यर्थः । नापि संहता इति । ध्वनयो वा वर्णा वा तमभिव्यञ्जयन्तीत्यन्वयः । हेतुमाह—नियतक्रमत्वादिति । नियतः क्रमो येषामिति । नियतक्रमवृत्तित्वादिति पाठे नियतक्रमा वृत्ति-र्व्यापारो येषामिति विग्रहः । हेत्वन्तरमाह—दृष्टप्रकारविपर्यये चेति । ये प्रकारा व्युत्पत्तौ ध्वनीनां वर्णानां वा स्फोटाभिव्यक्तौ दृष्टास्तेषां प्रकाराणामन्यथात्वेऽपि वर्णा वा ध्वनयो वा तमवद्योतयेयुरित्यर्थः । इति तुल्यः पर्यनुयोग इति । तस्यापीत्येष तुल्यः पर्यनुयोग इति सम्बन्धः । तदुक्तम्—

"यस्यानवयवस्फोटो व्यज्यते वर्णबुद्धिभिः ।
सोऽपि पर्यनुयोगेन नैवानेन विमुच्यते ॥

तत्रापि प्रतिवर्णं हि पदस्फोटो न गम्यते ।
न चावयवशो व्यक्तिस्तदा भवान्न चात्र धीः ॥

प्रत्येकं चाप्यशक्तानां समुदायेऽप्यशक्तता ।
तत्र यः परिहारस्ते स नोऽत्रापि भविष्यति ॥" इति ।

---

१. अभिव्यञ्जन्ति. मूलम् । २. क्रमत्वात्. मूलम् ।

चेति तुल्यः पर्यनुयोगः। तदनेनापि विशिष्टः संस्कारोऽवश्याभ्युपेयः स्फोटाभिव्यक्तिसिद्धये ; तथा च तत एवार्थाधिगमः सेत्स्यतीति न स्फोटकल्पनाबीजमस्तीति । तदुक्तम्—"शब्दकल्पनायां सा च शब्दकल्पना च" इति ।

तथा—

"सद्भावव्यतिरेकौ च तथावयववर्जनम् ।
तवाधिकं भवेत्तस्माद्यत्नोऽसावर्थबुद्धिषु ॥" इति ।

---

अस्तु तुल्यत्वं तथापि किं ते भविष्यत्यत आह—तदनेनापि विशिष्टः संस्कारोऽवश्याभ्युपेयः स्फोटाभिव्यक्तिसिद्धय इति । तत्तस्मादित्यर्थः । अनेनापि । स्फोटत्वादिनापि । विशिष्टः संस्कार इति । संस्कारविशेष इत्यर्थः अपूर्वसधर्मेति यावत् । अवश्याभ्युपेयो निर्वाहान्तराभावात् । किमर्थमित्यत उक्तम्—स्फोटाभिव्यक्तिसिद्धय इति । अन्यथा न तल्लाभ इति भावः । अनेनापि किं तवेत्यत आह—तथा चेति । संस्कारेऽवगत इत्यर्थः । तत एवेति । संस्कारादेवेत्यर्थः । अर्थाधिगम इति । स ह्युद्दिष्ट इति भावः । सेत्स्यतीति । तदर्थो ह्ययं प्रयत्न इति सूचयति । ततः किमित्याह--इति न स्फोटकल्पनाबीजमस्तीति । अर्थप्रतीत्यनुपपत्तिर्हि तद्बीजम् , सा चान्यथाप्युपपन्नेति । इत्यापद्यतेति शेषः यदि अस्तीत्यनन्तरमितिशब्द. पठ्यते । तदेवं नास्माकमुत्प्रेक्षामात्रमित्याह—तदुक्तम् "शब्दकल्पनायां सा च शब्दकल्पना च" इतीति । अनेन च भाष्यमुपात्तम् । भाष्ये च तच्छब्देन संस्कारकल्पना परामृश्यते । वार्तिकमप्युपादत्ते—तथेति । स्फोटस्य हि सद्भावस्तावद्वर्णेभ्यश्च व्यतिरेकः सावयवे च पदे गम्यमाने तदवयवभूतवर्णापह्नवेन दृष्टविपरीतनिरवयवत्वं कल्पनीयम् । तस्माद्योऽवश्याश्रयणीयः संस्कारादिकल्पनाक्लेशः सोऽर्थबुद्धावेवाश्रयितव्यः । न स्फोटाभिव्यक्ताविति ।

---

१. विशिष्टसंस्कारः. मूलम् । ३. परिकल्पनी मूलम् ।
२. –व्यक्तये. मूलम् ।

अत्रोच्यते—

अपूर्वमिव नैवान्यः संस्कारः स्फोटवादिनः ।
प्रक्लृप्तवासनारूपाद्यथा स्याद्वर्णवादिनः ॥ १० ॥

वर्णवादी हि कर्मभेदजन्यमपूर्वमिवात्यन्तापरिदृष्टमर्थसमधिगमनिमित्तं वर्णविज्ञानजन्मानं संस्कारं परिकल्पयति, न तु प्रक्लृप्तवासनाभिधान-

---

अत्र प्रतिविधत्ते—अत्रोच्यते ...... सन्निधिमात्रानुमानमिति । अपूर्वमिवेति दशमः श्लोकः ।

अन्य इत्यस्य साधर्म्यदृष्टान्तोऽपूर्वमिवेति । नैवेत्यत्र वैधर्म्यदृष्टान्तस्तुरीयः पादः । उत्तरार्धादिपादरूपस्य पदस्य संस्कार इति विशेष्यम् । अन्ययोगे च पञ्चमी । अतो यथा वर्णवादिनः प्रक्लृप्तवासनारूपात् संस्कारादन्योऽपूर्वमिव संस्कारः स्यात् तथा स्फोटवादिनः प्रक्लृप्तवासनारूपात् संस्कारादन्योऽपूर्वमिव संस्कारो नैव स्यात् । अपि तु प्रक्लृप्तवासनारूप एव संस्कारोऽस्येति च योजनेति कृत्वा कारिकां व्याचष्टे । तत्र चतुर्थपादं तावत्पुरस्करोति—वर्णवादी हीति । संस्कारं परिकल्पयतीत्यन्वयः । कर्मभेदजन्यमपूर्वमिवात्यन्तापरिदृष्टमिति । अनेनापूर्वे साधर्म्यं दर्शितम् । क्वचित्तु कर्मभेदापूर्वजन्यमिति समासः । वासनारूपस्तु स्मृतौ दृष्ट एव । एव तु पश्चादन्यत्र न क्वचिद्दृष्ट इत्यत्यन्तग्रहणम् । अपूर्वमपि न वेदादन्यत्र दृश्यते । अर्थसमधिगमनिमित्तमिति । अर्थस्य यः समधिगमः तस्य निमित्तमिति । एतदत्यन्तापरिदृष्टसंस्कारकल्पने बीजम् । वर्णविज्ञानजन्मानमिति । वर्णविज्ञानतो जन्म यस्येति बहुव्रीहिः । किमर्थमसावत्यन्तापरिदृष्टं कल्पयति, न वासनामेवावलम्बते ; अत आह—न त्विति । प्रक्लृप्तवासनाभिधानसंस्कारनिबन्धन इति । वासनेत्यभिधानं यस्येति बहुव्रीहिः ।

---

१. कर्मजन्यापूर्वम् . मूलम् ।

संस्कारनिबन्धनोऽर्थप्रत्ययोऽस्य सिध्यति ; अन्योपलब्धिप्रतिलब्धजन्मनो भावनाया अन्यत्र ज्ञानहेतुत्वायोगात् अतिप्रसङ्गादित्युक्तम्, कार्यभेदे कारणैकत्वायोगात् ; स्फोटोपलब्धिनिबन्धनस्तु भावनाभिधान एव संस्कार

---

स्मृतौ प्रक्लृप्तो वासनाभिधानः संस्कारो निबन्धनं यस्येति विग्रहः । अर्थप्रत्ययोऽस्य सिध्यतीति । यथा स्फोटवादिनस्तन्निबन्धनः शब्दप्रत्ययः सिध्यति नैवमस्य वर्णवादिनस्तन्निबन्धनोऽर्थप्रत्ययः सिध्यतीति । कारणमाह—अन्योपलब्धिप्रतिलब्धजन्मन इति । अन्यस्योपलब्धिरन्योपलब्धिः तस्याः प्रतिलब्धं जन्म यया सा तथोक्ता । भावनायाः संस्कारस्य अन्यत्र पूर्वोपलब्धिविषयादन्यस्मिन्नित्यर्थः । ज्ञानहेतुत्वायोगादिति । ज्ञानोत्पत्तिनिमित्तत्वानुपपत्तेः । कथमयोगः , अत उक्तम्—अतिप्रसङ्गादिति । तथा सत्येकेन संस्कारेण सर्वं जानीयादिति । अनेन श्लोके कारणानुक्तौ कारणं दर्शितम् । कुत्रोक्तमित्यपेक्षायामाह—कार्यभेदे कारणैकत्वायोगादिति ।

"विलक्षणस्योपजनो नाविशेषाच्च कारणात् ।"

इत्यत्रेत्यर्थः । कार्यभेदे कारणैकत्वायोगादित्यत्र हेतुस्वरूपप्रदर्शनार्थं विलक्षणयोः कार्ययोरविलक्षणस्यैकस्य हेतुत्वायोगादित्यर्थः । अनुभवो हि स्वविषयगोचरविज्ञानजनकं संस्कारमुत्पादयति ; अतो वर्णानुभवोऽपि तादृशमेव जनयेत् । न च वर्णानुभवस्य कश्चिद्विशेषोऽस्तीत्युक्तम् । एवं यथेति दृष्टान्तांशं व्याख्याय दार्ष्टान्तिकमनुसन्धत्ते—स्फोटोपलब्धिनिबन्धनस्तु भावनाभिधान एव संस्कार इति वक्ष्यत इति । स्फोटस्योपलब्धिः स्फोटोपलब्धिः, तस्या निबन्धनं हेतुः । तुशब्दो वैपरीत्यद्योतनार्थः । भावनेत्यभिधानं यस्य स तथोक्तः । भावनाभिधान एव , नापूर्वसधर्मेत्यर्थः । अवधारणे कोऽभिप्रायः,

**एव संस्कार इति वक्ष्यते । अतो नास्यात्यन्तादृष्टपरिकल्पनादोषः ; दृष्टस्यैव सन्निधिमात्रानुमानमिति ॥**

---

श्लोके च नैवेत्यस्य ? अत उक्तमिति वक्ष्यत इति । प्रयत्नभेदतो भिन्ना इत्यत्र । एवं च तुल्यायामदृष्टकल्पनायामित्याद्यसिद्धमित्याह—अत इति । यत एवं वैषम्यमत इत्यर्थः । नास्यात्यन्तादृष्टपरिकल्पनादोष इति । अत्यन्तादृष्टस्य संस्कारस्य परिकल्पनात्मा यो दोषः स नास्य स्फोटवादिनः, किं तु वर्णवादिन एव । ननु यद्यपि वासनान्यत्र दृष्टा, तथाप्यत्र तत्सद्भावोऽनुमेय एव ; अतः को भेदः ? अत आह—दृष्टस्यैवेति । प्रदेशान्तरे दृष्टस्यैवेत्यर्थः । सन्निधिमात्रानुमानमिति । सन्निधिमात्रस्यानुमानमित्यर्थः । यथा हि धूमदर्शनाद्वह्नेः सन्निधिमात्रमनुमीयते तथा पटोरनुभवस्य दर्शनात्तज्जन्यसंस्कारसन्निधिमात्रमनुमीयते । तत्र सन्निधीति पाठे तत्रेत्यनेन पक्षो निर्दिश्यते ।

इति स्फोटसिद्धिटीकायां

दशमः श्लोकः

---

अपि च—

कर्तृक्रमादिनियमात्तत्रादृष्टस्य भूयसः ।
कल्पनाम्नानसामर्थ्यादिह तस्यास्तु हीयते ॥ ११ ॥

दर्शाद्यपूर्वविषये हि कर्तृक्रमादिनियमनिमित्तं बहुतरमदृष्टमगत्या शास्त्रसामर्थ्यात् कल्प्यते ; न त्विह तथा, गत्यन्तरसम्भवात् ; प्रत्यक्षप्रयत्नभेदसाध्यध्वनिभेदप्रकाशितशब्दविशेषलभ्यत्वादर्थप्रत्ययस्य । तथा हि—

---

अत्रैवोपपत्त्यन्तरमाह—अपि च....इत्युक्तमिति । उपस्कारमाह—अपि चेति । एकादशः श्लोकः कर्तृक्रमेति । तत्रेत्येतद्व्याख्यातं दर्शाद्यपूर्वविषये हीति । कर्तृक्रमादिनियमनिमित्तमिति । कर्तृक्रमादिनियमः उत्पत्तौ निमित्तं कारणं यस्यादृष्टस्य तत्तथोक्तम् । अनेन च श्लोके कर्तृक्रमादिनियमाज्जन्यस्यादृष्टस्येत्यन्वय इति सूचितम् । बहुतरमदृष्टमिति सुगमम् । अगत्येत्युपस्कारः । आम्नानसामर्थ्यादित्येतद्व्याचष्टे—शास्त्रसामर्थ्यादिति । आम्नानमपि शास्त्रमेव । यथोक्तम्—"उपदेश इति विशिष्टस्य शब्दस्योच्चारणम्" इति । कल्प्यते—

"प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि ।" इति न्यायात् ।

चतुर्थपादं व्याचष्टे—न त्विति । इहेति शब्दविषय इत्यर्थः । तथेति बहुतरमदृष्टं कल्प्यत इति । गत्यन्तरसम्भवादित्युपस्कारः । श्लोके च 'तस्यास्तु हीयते' इत्यत्र तदा कल्पना परामृश्यते । पञ्चमी चेयम् । हीयत इति भावे लकारः । इह कल्पनातो हानिर्भवतीत्यर्थः । गत्यन्तरसम्भवमेव दर्शयति—प्रत्यक्षेति । प्रत्यक्षैः प्रयत्नभेदैः साध्या ये ध्वनिभेदास्तैः प्रकाशिताच्छब्दविशेषाल्लभ्यत्वादर्थप्रत्ययस्येत्यर्थः । अनेन शब्दादर्थप्रत्ययौचित्यमपि सूचितम् । एतदेव व्याचष्टे—तथा हीति । ननु भवताऽदृष्टकल्पनां परिजिहीर्षता प्रथमं प्रयत्नः, ततस्तद्भेदः, पुनस्तत्साध्यो ध्वनिः,

**प्रत्यक्षः प्रयत्नभेदः ; कारणभेदानुविधायी च कार्यभेदः प्रतीयत एव ; वर्णवाद्यपि च नैव व्यञ्जकध्वनिभेदमपह्नुते, वर्णभेदसिद्धेस्तदधीनत्वात् ; शब्दभेदमात्रं तु कल्प्यम् ; न वा तदपि, तस्य प्रत्यक्षत्वादित्युपपादयिष्यामः।**

---

पुनस्तद्भेदः, पुनस्तदभिव्यङ्ग्यः शब्दविशेष इति बहुतरमदृष्टं कल्प्यत एव ; अत आह—प्रत्यक्षः प्रयत्नभेद इति। प्रयत्नस्तद्भेदश्च प्रत्यक्षत्वान्न कल्प्यत इत्यर्थः। ध्वनिस्तद्भेदः प्रयत्नसाध्यत्वं च कल्प्यत इति चेत्, तत्राह—कारणभेदानुविधायी च कार्यभेदः प्रतीयत एवेति। अतः प्रयत्नभेदाद्ध्वनिभेदो नानुपपन्न इति भावः। सत्यम्, तथापि प्रयत्नसाध्यो ध्वनिस्तावत् कल्पनीय एव। अत आह—वर्णवाद्यपि चेति।

"यत्रोभयोः समो दोषः परिहारोऽपि वा समः।
नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे॥" इति सिद्धमिति भावः।

नैव व्यञ्जकध्वनिभेदमपह्नुत इति। ध्वनिं तद्भेदं तद्व्यञ्जकत्वं च नापह्नुत इत्यर्थः। कारणं दर्शितं वर्णभेदसिद्धेस्तदधीनत्वादिति। नादातिरिक्तवर्णसिद्धिस्तथा तद्भेदगकारादिसिद्धिरित्यादि सर्वं व्यञ्जकध्वनिभेदाधीनमित्यभ्युपगतमेव वर्णवादिनापि। यथाहुः—

"ममापि व्यञ्जकैर्नादैर्भेदबुद्धिर्भविष्यति।" इति।

शब्दभेदमात्रं तु कल्प्यमिति। वर्णातिरिक्तशब्दविशेषमात्रमनवयवः शब्दः केवल इति। न वा तदपीति। कल्प्यमित्यनुषङ्गः। अथवा शब्दभेदमात्रमपि न कल्प्यमित्यर्थः। कुतः पुनस्तस्य सिद्धिरित्यत आह—तस्य प्रत्यक्षत्वादिति। शब्दभेदस्य श्रोत्रप्रत्यक्षत्वादित्यर्थः। भेददर्शनाभावादिति वदतां तस्य प्रत्यक्षत्वादित्यसिद्धमेवेति चेत् तत्राह—इत्युपपादयिष्याम इति। तस्य प्रत्यक्षत्वमित्येतदुपपादयिष्याम इत्यर्थः। आरूपालोचितेष्वित्यादिना। अस्तु शब्दभेदमात्रं कल्प्यमेव, तथापि तन्मात्रमस्माकं कल्प्यम्; भवतां तु बहुतरमदृष्टं कल्प्यमित्य-

**अपि च अनेकादृष्टकल्पनायास्त्रस्यता नैकः शब्दोऽभ्युपेयते, तत्र कर्तृक्रमादिनियमगतमदृष्टमपरं बहु कल्पयता किं तत्[1]परिहृतं भवति? यदि परं लौकिकी प्रतीतिः— शब्दादर्थं प्रतिपद्यामहे[2], "सिद्धे शब्दार्थसम्बन्धे"**

---

भिप्रायेणाह—अपि चेति। गत्यन्तरसंभवादित्येतदपेक्षया अपि चेति निर्देशः। अनेकादृष्टकल्पनायास्त्रस्यतेति। वर्णवादिनेति सिध्यति। नैकः शब्दोऽभ्युपेयत इति। नैको निरवयवः पदात्मा शब्दोऽभ्युपेयत इति। यथोक्तम्—"सद्भावव्यतिरेकौ च" इति। अतः किमित्याह—तत्रेति। वर्णपक्ष इत्यर्थः। कर्तृक्रमादिनियमगतमदृष्टमपरं बहु कल्पयता किं तत्परिहृतं भवतीति। कर्तृनियमः क्रमनियमः आदिशब्दोपात्तसाहित्यान्यूनाधिकत्वनियमश्च यस्तद्गतमदृष्टमिति। नियमस्यादृष्टमन्तरेणानुपपत्तेरिति। अपरं बह्विति। मम तु शब्दभेदः कल्प्यः, तव तु शब्दादपरम्; मम च शब्दभेदमात्रम्, तव तु बहु कल्पनीयमिति किं तत्परिहृतं भवतीति। एवमदृष्टमपरं बहु कल्पयतानेन वर्णवादिना किंस्वित्तदनेकमदृष्टं परिहृतं भवति? न खलु परिहृतम्, किं तु अङ्गीकृतमेवेति प्रतीयते। अनेकादृष्टकल्पनायास्त्रस्यता शब्दकल्पनां विहायैवमदृष्टमपरं बहु कल्पयता किमनेकादृष्टं परिहृतं भवति? ननु परिहृतमेव, अन्यथा कथं प्रेक्षापूर्वकार्येवं प्रवर्तेतेत्यपहासः। अपहासान्तरमाह—यदि परं लौकिकी प्रतीतिः 'शब्दादर्थं प्रतिपद्यामहे' इति। यदि परमिति। केवलमित्यर्थः। लौकिकी प्रतीतिरिति। परिहृतेति विपरिणम्यानुषज्यते। तामेव दर्शयति—शब्दादर्थं प्रतिपद्यामह इति। उपरितन इति शब्दोऽत्रापि तत्रत्यचकारबलात्संबध्यते। क्वचित्पाठः तद्विना किं परिहृतं भवतीति। कर्तृक्रमादिनियमगतमदृष्टमपरं बहु कल्पयता किं परिहृतं भवति? न तावदनेकमदृष्टमिति पांसुलपादकेन हालिकेनापि शक्यं ज्ञातुम्; अतोऽनेकादृष्टकल्पना-

---

१. Omitted. तत्. मूलम्. २. Added. इति. मूलम्.

इति च शास्त्रप्रतीतिः संस्कारस्याशब्दत्वात्, अन्त्यवर्णस्य चाप्रत्यायकवात्[1], समुदायस्याशब्दत्वात्, अप्रत्यायकत्वाच्चेत्युक्तम्—इति[2] ॥

---

परिहारच्छलेन गूढमन्यदस्ति परिजिहीर्षितम्; किं नु खलु तत्परिहृतमित्यर्थः। हन्त ज्ञातम्! किं मनःखेदेनेत्याह—यदि परमिति। स एवार्थः। अहो नैतावदेवेत्याह—"सिद्धे शब्दार्थसम्बन्धे" इति च शास्त्रप्रतीतिरिति। अत्रापि परिहृतेत्यनुषज्यते—

"अनन्तरेण सम्बद्धः स्यात् परस्याप्यनन्तरः।" इति न्यायात्।

शास्त्रस्य प्रतीतिः शास्त्रप्रतीतिः। शास्त्रविषया प्रतीतिरित्यर्थः। अथवा शास्त्रे प्रतीतिः, शास्त्रस्था प्रतीतिरित्यर्थः; शास्त्रकृता प्रतीतिरिति यावत्। उभयविधप्रतीतिनिराकरणेऽपि कारणमाह—संस्कारस्याशब्दत्वादिति। संस्कारो हि तस्य वाचकः; स च न शब्दः, शब्दशक्तित्वात् पुरुषशक्तित्वाद्वा; अतः संस्कारात्प्रतिपत्तौ शब्दादिति परिहृतम्। तथा संस्कारार्थयोः सम्बन्धे शब्दार्थयोः सम्बन्ध इत्यपि त्यक्तमिति भावः। नन्वन्त्यस्य वर्णस्य वाचकत्वे सति न तयोः परिहारः। अत आह—अन्त्यवर्णस्य चाप्रत्यायकत्वादिति। ननु वर्णसमुदायो वाचक इति न दोषः, अत आह—समुदायस्याशब्दत्वादप्रत्यायकत्वाच्चेति। संस्कारान्त्यवर्णयोर्यौ दोषौ तावुभावपि समुदाये स्त इत्यर्थः। ननु संस्कारस्याशब्दत्वमन्त्यवर्णस्याप्रत्यायकत्वं समुदायस्याशब्दत्वं च सिद्धमेव; समुदायस्याप्रत्यायकत्वे को हेतुः? अत आह—इत्युक्तमिति। पूर्वोपलब्धिभेदेऽपीत्यत्रोक्तिः॥

इति स्फोटसिद्धिव्याख्यायाम्
एकादशः श्लोकः

---

१. Omitted. च. मूलम्. २. Omitted. इति. मूलम्.

**न संस्कारविशेषश्च[1] युक्तो हेत्वविशेषतः ।**
**अन्यसन्निधितो भेदो नास्य नापि स्वरूपतः ॥ १२ ॥**

**द्विविधा[2] हि हेतवः कार्यातिशयमुपकल्पयितुं क्षमन्ते—स्वरूपतो**

---

यत्पूर्वमुक्तम् 'तदनेनापि विशिष्टसंस्कारोऽवश्याभ्युपेयः स्फोटाभिव्यक्तिसिद्धये' इति, तदसिद्धमित्युक्तमपूर्वमिवेति श्लोकेन, न पुनरपूर्वमिवेति दृष्टान्तादैषम्यमत्र दर्शितं कर्तृक्रमादिनियमादिति श्लोकेन; सम्प्रत्यपूर्वसधर्मणः संस्कारस्य वर्णज्ञानेभ्यो जन्मापि न संभवतीत्याह—न........**उपयन्ति इति** । न संस्कार इति द्वादशः श्लोकः । कर्तृक्रमादिनियमादिति श्लोके चकाराभावात् अपि चेत्युपस्कृतम् । इह तु श्लोक एव चकारस्य सद्भावान्नोपस्कारः कृत इत्यनुसन्धेयम् । अस्यार्थः—अपि च यः पुनर्विशिष्टः संस्कारोऽन्त्यवर्णसहकारितयाभिमतः सोऽपि न युक्तः । कुतः? हेत्वविशेषात् । हेतुर्हि वर्णः संस्कारस्य । स चाभिमतक्रमे विपरीतक्रमे च तुल्यः । न च विपरीतक्रमे संस्कारोऽस्ति कर्यादर्शनात् ; अतोऽभिमतक्रमेऽपि नोत्पत्तुमर्हति । तथा हि—स विशेषः स्वभावाद्वा तस्य कारणाद्वा संभवति । तत्रान्यकारणसन्निधेर्नास्य हेतोर्भेदः ; नापि स्वरूपतोऽस्तीति । अत्रोत्तरार्धे प्रतिषेधद्वयं विद्यते ; तस्य च प्राप्तिपूर्वकत्वमस्तीति प्राप्तिं तावदाह—द्विविधा हि हेतव इति । कार्यातिशयमिति । कार्यविशेषं विशिष्टं कार्यमित्यर्थः । सामान्यसाध्यात्कार्यादतिशयितं कार्यमिति यावत् । एकैकवर्णज्ञाने व्युत्क्रमेण वचने स्मृतिबीजसंस्कारमात्रजननम् ; अभिमतक्रमोच्चारणे त्वपूर्वसदृशसंस्कारजननं प्रकृते कार्यातिशयः । उपकल्पयितुमिति । उत्पादयितुमिति यावत् । उत्सहन्ते पर्याप्नुवन्तीति । क्षमन्त इति वा पाठः । द्वैविध्यमेव दर्श-

---

१. अपि. मूलम्. २. द्विधा. मूलम्.

वातिशयशालिनः, सहकारिसमवधानप्रक्लृप्तातिशया वा। तत्र न स्वरूपभेद एषामुपेयते। नाप्यपरसमवधाननिबन्धनः, नियतक्रमवृत्तितयानापन्नयौगपद्यत्वेन। यद्यपि च पूर्वोपहितात्मनः संस्कारस्य स्थेम्ना तत्सन्निधिरुत्तर-

---

यति—स्वरूपतो वातिशयशालिन इति। वाशब्द उत्तरोपक्षया। यथा अग्निर्दाहकः। सहकारिसमवधानप्रक्लृप्तातिशया वति। वाशब्दः पूर्वापेक्षया। सहकारिणां समवधानेन सन्निधानेन प्रक्लृप्तोऽतिशयो येषामिति विग्रहः। यथा ग्रावाण उखाधारणे, बीजं वा मृत्सलिलप्रच्छन्नमिति। एवं प्राप्तिं दर्शयित्वा प्रतिषेधमनुसन्धत्ते। तत्र प्रथमं नापि स्वरूपत इत्येतद्व्याचष्टे—तत्र न स्वरूपभेद एषामुपेयत इति। तत्रेति। स्वतोभेदान्यतोभेदयोर्मध्य इत्यर्थः। एषां वर्णानाम्। उपेयत इति। भवद्भिरेवेति सिध्यति। "पूर्ववर्णजनितसंस्कारसहितः" इत्यभ्युपगमात्।

"तेषां च गुणभूतानामर्थप्रत्यायनं प्रति"। इति च।

अन्यसन्निधितो भेदो नास्त्येत्येतद्व्याचष्टे—नाप्यपरसमवधाननिबन्धन इति। एषां भेदः समस्तीति शेषः। अपरेषां समवधानं निबन्धनं यस्येति विग्रहः। कारणमाह—नियतक्रमवृत्तितयानापन्नयौगपद्यत्वेनेति। नियतः क्रमो यस्याः सा नियतक्रमा, नियतक्रमा वृत्तिर्व्याप्तिर्येषां वर्णानां तेषां भावो नियतक्रमवृत्तिता, क्रमश्चापि विवक्षित इत्यभ्युपगमात्; तया कारणेन अनापन्नं यौगपद्यं यैर्वर्णैस्तेषां भावोऽनापन्नयौगपद्यत्वम्; तेन हेतुनेति। ननु संस्कारद्वारा गकारादीनां परस्परसमवधानं भविष्यति; अत आह—यद्यपि च पूर्वोपहितात्मनः संस्कारस्य स्थेम्ना

---

१. सरूपतः. मूलम्. २. समवधानम्. मूलम्.

मतिशाययेत्; प्राचीनस्य तु नापरसमवधाननिबन्धनः, नाप्यात्मना भेद इति कथमिव सोऽर्थप्रत्ययानुगुणं संस्कारमादधीत?

येऽपि [१]स्वरूपभेदमेव वर्णानां प्रतिपदमास्थिषत, तेषामसौ सन्नपि

---

तत्सान्निधिरुत्तरमतिशाययेदिति। पूर्वेण वर्णेनोपहित आत्मा रूपं यस्येति विग्रहः। संस्कारस्य अपूर्वसधर्मणः संस्कारविशेषस्य स्थेम्ना स्थित्या तत्सान्निधिः तस्य पूर्ववर्णस्य संस्कारद्वारा सन्निधिः उत्तरं वर्णमतिशाययेत् अतिशयवन्तं कुर्यादिति। तथापि किमित्यपेक्षायामाह—प्राचीनस्य तु नापरसमवधाननिबन्धन इति। प्राचीनस्य तु आदिमस्य वर्णस्य तु नापर-समवधाननिबन्धनो भेद इत्युत्तरेण सम्बन्धः। अपरस्य वर्णस्य समवधानं निबन्धनं यस्येति। न हि पूर्वस्य वर्णस्यापरवर्णसन्निधानमस्ति, तस्य तदानीमनिष्पत्तेः; तज्जन्यस्य संस्कारस्य सुतरामनिष्पत्तेः। न च स्वरूप-तोऽपि भेद इत्याह—नाप्यात्मना भेद इति। तदुक्तम् 'न स्वरूपतो भेद एषामुपेयते' इति। ततः किमित्याह—इति कथमिव सोऽर्थप्रत्ययानु-गुणं संस्कारमादधीतेति। इति तस्मात् कथमिव स प्राचीनवर्णः। अर्थप्रत्ययानुगुणमर्थप्रत्ययं प्रत्यनुकूलं संस्कारमादधीत? न कथञ्चिदप्याधातुं शक्नोतीति।

नन्वनित्यशब्दवादिनां तार्किकाणां गत्वादिसद्भावेऽपि व्यक्तय-स्तावत् प्रत्युच्चारणं विलक्षणाः; व्यतिरेकप्रधानवादिनां बौद्धानां गत्वादि-कमपि नास्ति; अतो विलक्षणरूपा एव वर्णाः स्वरूपत एवेति विशिष्ट-संस्कारारम्भाविरोध इत्याशङ्क्याह—येऽपि स्वरूपभेदमेव वर्णानां प्रतिपद-मास्थिषत, तेषामसौ सन्नपि नोपकारक इति। येऽपीति वर्णवादिनामेव केचिदित्यर्थः। स्वरूपभेदमेवेति। स्वरूपतो भेदमेव, नौपाधिकमित्यर्थः;

---

१. Omitted. स्व. मूलम्.

नोपकारकः, प्रज्ञानपरामर्शविकलस्य भेदस्य[1] ज्ञापनायोगात्; न हि सत्तामात्रेण श्रुतयोऽर्थप्रत्यायनाङ्गतामुपयन्ति ॥

---

प्रत्युच्चारणमन्यान्यव्यक्त्युपजननादिति भावः । प्रतिपदमिति । गत्वादिजातीनां वस्तुरूपाणामन्यनिवृत्तिरूपाणां वाङ्गीकरणादन्यैश्च गोशब्दावयविनो गोशब्दत्वजातेश्चाङ्गीकरणात् पदस्य न वैलक्षण्यम् । यद्यपि गकारादिव्यक्तीनामनित्यत्वं चास्तीति भावः । आस्थिषत आस्थितवन्तः । तेषामिति । अनित्यवर्णवादिनामित्यर्थः । असौ प्रतिपदं वर्णानां भेदः । सन्नपीति । नित्यवादिषु जीवत्सु नैतद्वक्तुं शक्यम्; अथ कथञ्चिच्छक्यते, तथापीत्यपिशब्दाभिप्रायः । नोपकारक इति । नार्थप्रत्ययोपकारक इत्यर्थः । कुत इत्यपेक्षायामाह—प्रज्ञानपरामर्शविकलस्य भेदस्य ज्ञापनायोगादिति । प्रकृष्टं प्रमाणभूतं ज्ञानं प्रज्ञानम् । तेन यः परामर्शोऽनुसन्धानम् तेन विकलस्य रहितस्य स्वरूपभेदस्यार्थज्ञापनायोगात् अर्थज्ञापनेऽर्थज्ञापनायां वा अयोगादनुपपत्तेः अशक्तेरित्यर्थः । न च रूपभेदः प्रज्ञायते, 'स एवायं गकारः' इति प्रत्यभिज्ञानात् । यथोक्तम्—

"न तु द्रुतादिभेदेऽपि निष्पन्ना संप्रतीयते ।
गव्यक्त्यन्तरविच्छिन्ना गव्यक्तिरपरा स्फुटा ॥" इति ।

ननु सत्तामात्रेण चक्षुरादिवज्ज्ञापको भवतु, अत आह—न हि सत्तामात्रेण श्रुतयोऽर्थप्रत्ययाङ्गतामुपयन्तीति । श्रुतयः शब्दाः । न हि शाब्दज्ञाने करणमितिकर्तव्यता वा नाज्ञातमुपकरोतीति भावः । उपयन्तीति वर्तमाननिर्देशेन प्रतीतिरेवात्र प्रमाणमिति दर्शयति ॥

इति स्फोटसिद्धिव्याख्यायां
द्वादशः श्लोकः

---

१. Omitted. स्य. मूलम् .

न चान्त्यवर्णमात्रस्य पुरःसम्बन्धवेदनम् ।
अक्षवर्त्मातिवृत्तत्वात् संस्कारस्य न तद्वतः ॥ १३ ॥

विदितसङ्गतयो हि शब्दा यथास्वमर्थान् प्रकाशयन्ति । न चान्त्यवर्णमात्रमर्थसम्बन्धितया प्रतिपद्यन्ते पुरस्तात्, मा भूत् केवलादर्थ-

---

अत्रैव दूषणान्तरमाह—न चान्त्यवर्ण.........उपन्यस्यते इति । न चान्त्यवर्णेति त्रयोदशः श्लोकः । मात्रशब्दः पूर्ववर्णव्यावर्तकः । पुरःसम्बन्धवेदनमिति । सम्बन्धसंवेदनसमय इत्यर्थः । न तद्वत इति । न च संस्कारवतोऽन्त्यवर्णस्य पुरःसम्बन्धवेदनम् । कुतः ? संस्कारस्याक्षवर्त्मातिवृत्तत्वादित्यन्वयः । कारिकां व्याचष्टे—विदितसङ्गतयो हि शब्दा यथास्वमर्थान् प्रकाशयन्तीति । विदिता अर्थेन सङ्गतिः सम्बन्धो वाच्यवाचकभावो येषामिति विग्रहः । शब्दा इति स्फोटवर्णसाधारणो निर्देशः । शब्दानुबन्ध्ययं स्वभावः, यद्विदितसङ्गतिकमेवार्थमभिधत्त इति । "सर्वत्र नो दर्शनं प्रमाणम् ; प्रत्यायक इति प्रत्ययं दृष्ट्वावगच्छामः, न प्रथमश्रवण इति, प्रथमश्रवणे प्रत्ययमदृष्ट्वा" इति न्यायात् । यथास्वमर्थान् प्रकाशयन्तीति । येनार्थेन यस्य शब्दस्य सम्बन्धसंवेदनम्, स तं पश्चादुच्चरितः प्रकाशयतीति । एवं प्राप्तिं दर्शयित्वा श्लोकं व्याचष्टे—न चान्त्यवर्णमात्रमर्थसम्बन्धितया प्रतिपद्यन्ते पुरस्तादिति । प्रतिपद्यन्ते लौकिका इति सिध्यति । प्रतिपद्यत इत्येकवचनान्तत्वे व्युत्पित्सुरिति सिध्यति । अथवा अन्त्यवर्णमात्रमिति प्रथमामाश्रित्य कर्मणि लकारोत्पत्तिः । 'प्रवेद्यते' इति चेत्पाठः, तदा ज्ञाप्यत उपदिश्यत इत्यर्थः । श्लोके च वेदनमित्यस्य णिजन्तोत्पत्तिर्द्रष्टव्या । अर्थसम्बन्धितयेति । वाच्यस्यार्थस्य सम्बन्धितया वाचक-

---

१. प्रवेद्यते. मूलम्.

विज्ञानमिति । नापि संस्कारविशेषणम्, तस्यातिपतितेन्द्रियविषयसीम्नः साक्षाद्वेदनात्; अर्थप्रकाशलक्षणस्य च फलस्य तदानीमसत्त्वादनुमाना-

---

तयेति । पुरस्तादिति पूर्ववत् । कुतो ज्ञातमिति चेत्तत्राह—मा भूत् केवला-दर्थविज्ञानमितीति । यद्यन्त्यवर्णमात्रस्य सङ्गतिग्रहणम्, ततो विदितसङ्गतेः केवलादन्त्यवर्णादर्थप्रत्ययः स्यात्, स मा भूदिति हेतोर्न पूर्ववर्णरहितस्यान्त्य-वर्णमात्रस्य सङ्गतिग्रहणमित्यर्थः । ननु नेतिकर्तव्यतारहितं कारणतामश्नुते इति पूर्ववर्णापेक्षा तत्साध्यसंस्कारानुग्रहापेक्षित्वादन्त्यस्य करणभूतस्य वर्णस्य स्यादित्यत आह—नापि संस्कारविशेषणमिति । अथवा "पूर्ववर्णजनितसंस्कार-सहितोऽन्त्यो वर्णो वाचकः" इत्यत्र विकल्प्यते—किमन्त्यवर्णमात्रमर्थसम्बन्धि-तया गृह्यते, उत संस्कारविशिष्टोऽन्त्यो वर्ण इति । तत्राद्यं कल्पं दूषयति—चान्त्यवर्णमात्रस्येति । मात्रशब्देन संस्कारं व्यावर्तयति । द्वितीयस्य दूषणम्—न अक्षेत्यादि । एवं विवरणमपि योज्यम् । उत्तरार्धं व्याचष्टे—नापि संस्कार-विशेषणमिति । संस्कारो विशेषणं यस्येति बहुव्रीहिः । अन्त्यवर्णमिति विशेष्यं द्रष्टव्यम् । अपिशब्देन अर्थसम्बन्धितया प्रतिपद्यन्ते पुरस्तादित्यनुषज्यते तथैक-वचनान्तत्वेऽप्यनुषङ्गः । कर्मणि चेल्लकारः, तदान्त्यवर्णस्य संस्कारेण विशे-षणमिति भावे ल्युट् द्रष्टव्यः । नाप्यर्थसम्बन्धितया गृह्यमाणस्यान्त्यवर्णस्य संस्कारेण विशेषणं प्रतीयत इति । क्वचित् पाठः संस्कारो विशेषणमिति । तत्र कर्मणि चेल्लकारः, तदा सम्बन्धः सुकरः । कर्तरि चेत् इतिशब्द-मध्याहृत्य सम्बन्धः कर्तव्यः । नापि पुरस्तादर्थसम्बन्धितया गृह्यमाणस्यान्त्य-वर्णस्य संस्कारो विशेषणं भवतीति वा योजना । कारणमाह—तस्यातिपति-तेन्द्रियविषयसीम्नः साक्षादवेदनादिति । इन्द्रियस्य विषय इन्द्रियविषयः, तस्य सीमा मर्यादा, अतिपतिता अतिक्रान्ता इन्द्रियविषयसीमा येन संस्का-रेण, ततोऽपि दूरगतत्वात् स तथोक्तः । साक्षादवेदनादिति । शब्दवत्

प्रवृत्तेः; अपरिगते विशेषणे च विशिष्टप्रतीतेरप्रवृत्तेः, अप्रत्ययविपरिवर्तिनश्च

---

प्रत्यक्षेणावेदनादित्यर्थः । अनेन च अक्षवर्त्मातिवृत्तत्वादित्येतदक्षवर्त्माप्यतिक्रम्य ततो दूरे वृत्तत्वादिति व्याख्यातम् । सत्यं संस्कारो न प्रत्यक्षः, तथापि कार्यानुमानतः प्रत्येष्यते; अत आह—अर्थप्रकाशलक्षणस्य च फलस्य तदानीमसत्त्वादनुमानाप्रवृत्तेरिति । इदमाकूतम् । द्वेधा हि बालानां शब्दार्थसम्बन्धव्युत्पत्तिः—तद्विदामुपदेशेन वा, स्वयमेव वृद्धव्यवहारदर्शनात् । यथोक्तम्—

"कथयन्ति क्वचित्तावद्बोद्धव्योऽस्मादयं त्विति ।
क्वचिद्वाचक इत्येवं वाच्योऽयमिति चोच्यते ॥
क्वचिदुच्चरिताच्छब्दाद्दृष्ट्वार्थविषयां क्रियाम् ।
केषांचित्तत्र बोद्धृत्वमनुमानात्प्रकल्प्यते ॥
एतेनास्माद्यतः शब्दादर्थोऽयमवधारितः ।
तेन नूनमिमौ सिद्धौ वाच्यवाचकशक्तिकौ ॥" इति ।

तत्र यदा तावच्छब्दार्थं विद्वानविदुष आचष्टे—गौरिति पदं सास्नादिमतो वाचकमिति, तदा नान्त्यवर्णमात्रमर्थसम्बन्धितया गृह्यते; किं तु गकारौकारविसर्जनीयात्मकं पदमेव, तस्यैव प्रत्यक्षत्वात् । न क्वचिदपि पूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णः सास्नादिमतो वाचकः—इत्येवोपदिशन्ति । न च श्रोत्रजन्यायां बुद्धौ वर्णवत्तत्संस्कारा अपि निर्भासन्ते, संस्काराणां परमाण्वादिवत् स्वभावतोऽक्षातिवृत्तत्वात् कार्यानुमानैकगम्यत्वाच्च । न चाख्यात्रानुपात्तमेवाप्रत्यक्षमेव च संस्कारं बालः स्वयमेव कार्यानुमानेन कारणकोटौ निवेशयतीति साम्प्रतम्; कार्यं ह्यर्थज्ञानम्; न चार्थज्ञानं तदानीमस्ति; सम्बन्धग्रहणोत्तरकालमेव हि शब्दादर्थप्रतिपत्तिः, न सम्बन्धग्रहणसमय एवेति । तदुक्तम्—अर्थप्रकाशलक्षणस्य च फलस्य तदानीमसत्त्वात् इति । तदानीं

सम्बन्धबोधवैधुर्यादतिप्रसङ्गाच्च[1] । नन्वेष शब्देऽपि तुल्यप्रसङ्गः । न;

---

सम्बन्धग्रहणसमय इत्यर्थः । असत्त्वादिति । अनिष्पत्तेरिति भावः । अनुमाना-प्रवृत्तेरिति । अनुमानस्यानुदयादित्यर्थः । अर्थप्रकाशलक्षणं च फलं लिङ्ग-मभिप्रेतम्, लिङ्गाभावे च नानुमानोदयः; लिङ्गजनितं हि ज्ञानमनुमानम् । यथोक्तम्——"अनुमानं ज्ञातसम्बन्धस्यैकदेशदर्शनादेकदेशान्तरेऽसन्निकृष्टेऽर्थे बुद्धिः" इति । तत्कथं लिङ्गाभावे प्रवर्तेत? अथार्थप्रकाशलक्षणं फलमनु-पपद्यमानमभिप्रेतम्, तथा सत्यनुमानशब्देनार्थापत्तिरुच्यताम्——"अपि वा कर्तृसामान्यात् प्रमाणमनुमानं स्यात्" इतिवत्; अनुपपद्यमानार्थदर्शनप्रभवा हि बुद्धिरर्थापत्तिः । यथोक्तम्——"अर्थापत्तिरपि दृष्टः श्रुतो वार्थोऽन्यथा नोपपद्यते इत्यर्थकल्पना" इति; सा कथमनुपपद्यमानाभावे स्यात्? उपमानं तु सादृश्य-मात्रगोचरं न वस्त्वन्तरप्रतीत्यै प्रभवतीति । अपरिगते विशेषणे चेति । भाव-प्रमाणैः पञ्चभिरप्यपरिगते संस्कारात्मनि विशेषणे चेत्यर्थः । विशिष्टप्रतीतेर-प्रवृत्तेरिति । विशिष्टस्य संस्कारविशिष्टस्यान्त्यवर्णस्य या प्रतीतिः तस्या अप्रवृत्ते-रनुदयादिति । अप्रत्ययविपरिवर्तिनश्च सम्बन्धबोधवैधुर्यादिति । प्रत्यये यो विपरिवर्तते स प्रत्ययविपरिवर्ती, तस्मादन्योऽप्रत्ययविपरिवर्ती, तस्याप्रत्यय-विपरिवर्तिनश्च विशिष्टस्य संस्कारवतोऽन्त्यवर्णस्येति । सम्बन्धबोधवैधुर्यादिति । सम्बन्धबोधेन राहित्यात्; न ह्यगृहीते सम्बन्धिनि सम्बन्धग्रहणसम्भव इति भावः । अतिप्रसङ्गादिति । यद्यगृहीतेऽपि सम्बन्धिनि सम्बन्धो गृह्येत, सर्वैः सम्बन्धिभिः सर्वदा सर्वस्य सम्बन्धस्य प्रतीतिः प्रसज्येतेत्यर्थः । 'अक्षवर्त्मातिवृत्तत्वा-त्संस्कारस्य' इति श्लोके प्रत्यक्षमात्रनिषेधः प्रमाणान्तरनिषेधमप्यभिप्रेत्येति दर्शितम्——अर्थप्रकाशलक्षणस्य च फलस्य तदानीमसत्त्वादनुमानाप्रवृत्तेरिति ।

---

१. Omitted. च. मूलम्.

तस्यैन्द्रियकत्वादित्युपपादयिष्यते । किमर्थस्तर्ह्यनुमानपरिश्रमः? यः खलु

कथं संस्कारस्याक्षवर्त्मातिवृत्तत्वात् तद्गतः सम्बन्धसंवेदनाभावः, तद्दर्शितम्—अपरिगते विशेषण इत्यादिना । अपरिगत इत्यादिर्वैधुर्यादित्यन्तः सम्भूयैको हेतुः । अप्रत्ययविपरिवर्तिनश्च सम्बन्धवैधुर्यादित्येतत्समर्थनार्थोऽतिप्रसङ्गादिति हेतुः । एवं वृद्धव्यवहारदर्शनात् स्वयमेव व्युत्पत्तिरपि शब्दार्थगोचरैव । तथा हि—'माणवक समिधमाहर' इत्याचार्यवाक्यश्रवणानन्तरं प्रवर्तमानं समिदाहरणे माणवकमुपलभ्य पार्श्वस्थो व्युत्पित्सुरवधारयति—बुद्धिपूर्वेयमस्य प्रवृत्तिः, स्वतन्त्रप्रवृत्तित्वात्, मदीयप्रवृत्तिवत् । यच्चाहं बुद्ध्वा प्रवृत्तः, तथैवायमपि, मदविशेषात्; अहं च कर्तव्यतावगमात्प्रवृत्त इति माणवकोऽपि तदवबोधादेव प्रवृत्त इति निश्चिनोति । तदवबोधश्चास्याचार्यवचनानन्तरमुपजायमानस्तन्निबन्धन एवेति कार्याभिधायितां शब्दस्य कल्पयति । क्वचिच्च 'काष्ठैः स्थाल्यामोदनं पचति' इत्यादिवर्तमानापदेशेष्वपि प्रसिद्धतृतीयाद्यर्थानामप्रसिद्धकाष्ठाद्यर्थानां च पुरुषाणां काष्ठाद्यर्थे व्युत्पत्तिर्दृश्यते, सापि शब्दगोचरैव 'काष्ठशब्देनेदमभिधीयते' इति । एवमेव सिद्धव्युत्पत्तावपि 'पुत्रस्ते जातः' इत्येवमुक्तस्य कस्यचिन्मुखविकासं पार्श्वस्थः पश्यति, तदा 'हर्षहेतुरनेन शब्देन प्रतिपादितः' इति हर्षहेतुभूतसिद्धार्थप्रतिपादने शब्दस्य सामर्थ्यं कल्पयति । यद्यपि तदानीमर्थविशेषो न ज्ञायते हर्षहेतूनां बहूनां सम्भवात्, तथापि सिद्धार्थता तावदवगता; तावता च कार्यव्यभिचारः सिद्धः । किञ्च बहुशः पुत्रजनने सत्येवंविधशब्दप्रयोगादन्येषु हर्षहेतुष्वप्रयोगात् पुत्रजननरूपोऽर्थविशेषोऽपि सुज्ञान एवेति शब्दगोचरत्वमेव, न क्वचिदपि संस्कारविषयता । एवं स्वयं व्युत्पत्तावपि नान्त्यवर्णमात्रमर्थसम्बन्धितया प्रतिपद्यन्ते पुरस्तात्, मा भूत्केवलादर्थविज्ञानमिति । नापि

१. किमर्थम्. मूलम्.

कुतश्चिद्भ्रमनिबन्धनात् संवेदनमप्यवजानीते, तं प्रत्यनुमानं साक्षिस्थानीयमुपन्यस्यते ॥

---

संस्कारविशेषणम्, तस्यातिपतितेन्द्रियविषयसीम्नः साक्षादेवदनात्, साक्षाद्दृष्टस्य च शब्दपिण्डस्य वाचकत्वाध्यवसानात्; न तु संस्कारविशिष्टतां तदानीमध्यवस्यन्ति । सत्यं शब्दपिण्डस्य वाचकता गृह्यते, सा चान्वयव्यतिरेकाभ्यामन्त्यवर्णमात्रगोचरैव; पूर्वेषां तु संस्कारद्वारा तत्सहकारिता कल्प्यत इति चेत्, अत आह—अर्थप्रकाशलक्षणस्य च फलस्य तदानीमसत्त्वादनुमानाप्रवृत्तेरिति । व्युत्पत्त्यनन्तरमेव हि शब्दो बोधयति; अतो न व्युत्पत्तावेव संस्कारफलस्यार्थप्रकाशस्य दर्शनमुपपद्यते ; तदेकानुमेयश्च संस्कार इति कथं तदानीं तस्यान्तर्भावः शक्यते कर्तुमिति । ननु कथमर्थप्रत्ययलक्षणस्य फलस्य तदानीमसत्त्वमित्युच्यते । उक्तं हि—

"श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया ।" इति ।

ननु तदानीमसदपि स्वात्मनि प्रकाशलक्षणं फलं तत्कार्याद्व्यवहारान्माणवकादावनुमीयते, अनुमिताच्च प्रकाशात् संस्कारोऽनुमीयते, तेन च विशेषणमन्त्यवर्णस्य कल्प्यत इति । उच्यते—नैवं तावत् कश्चित् व्युत्पद्यते, 'अस्य शब्दस्यायमर्थः' इत्येवं व्युत्पत्तिदर्शनात् । न चार्थप्रकाशात् संस्कारः कल्पयितुं शक्यते, तस्य प्रत्यक्षेणैकशब्देनैवोपपत्तेर्वक्ष्यमाणत्वात् ; संस्कारहेतुकत्वस्य च निराकृतत्वादिति भावः । शेषं सुगमम् । शङ्कते—नन्वेष शब्देऽपि तुल्यप्रसङ्ग इति ।

---

१. निमित्तात्. मूलम्.

"न विशिष्टस्य शब्दस्य पुरःसम्बन्धवेदनम् ।
अक्षवर्त्मातिवृत्तत्वात्तस्य वर्णातिरेकिणः ॥" इति ।

दूषयति—नेति । कारणमाह—तस्यैन्द्रियकत्वादिति । कथमित्याह—इत्युपपादयिष्यत इति । स्थानं तु पूर्ववत् । ननु किमिदं प्रयस्यता आदित एवारभ्य पारिशेष्यानुमानमुपन्यस्यते ? यदि प्रत्यक्षो निरवयवः शब्दः, तर्हि प्रत्यक्षमेवास्तु ; न च प्रत्यक्षे शब्देऽनुमानसम्भवः, सान्निकृष्टत्वात्। यथोक्तम्—

"न हि हस्तिनि दृष्टेऽपि तत्पदेनानुमेष्यते ।"

इत्यभिप्रायेण चोदयति—किमर्थं तर्ह्यनुमानपरिश्रम इति । 'धीर्हेत्वन्तर सूचनी' इत्यादिकः। परिहरति—यः खल्विति। वादीति सिध्यति। कुतश्चिद्भ्रमनिमित्तादिति। यथोक्तम्—"वर्णा एवावबुध्यन्ते" इति, "भेददर्शनाभावादभेददर्शनाच्च" इति। संवेदनमप्यवजानीत इति। संवेदनं निरवयवशब्दविषयम्—'एकमिदं पदम्' इत्यादिकं सकललोकसिद्धमप्यवजानीत इति अवजानीते तावत्, यत एतत्संवेदनं न वचनमात्रम्, किं तु सम्यग्ज्ञानं प्रमाणमेवेति दर्शितं संवेदनमिति। तत्र कारणं भ्रम एवेति च सिद्धमेव । भ्रमे च किञ्चित्कारणमस्ति, किं नो विदितेन तेनेत्युक्तम्—कुतश्चिदिति । तं प्रत्यनुमानं साक्षिस्थानीयमुपन्यस्यत इति । यथार्थिप्रत्यर्थिनोर्विवादे साक्षिभ्यो निर्णयः, एवमत्र वादिप्रतिवादिनोर्गौरिति प्रत्ययस्य वर्णसमुदायविषयत्वे निरवयवपदविषयत्वे च वर्णा वाचकाः स्फोट एव वाचक इति वा विवादेऽनुमानं साक्षित्वेनोपन्यस्तमिति ।

इति स्फोटसिद्धिव्याख्यायां
त्रयोदशः श्लोकः

निरुद्धबुद्धयो नैव पूर्वे वर्णा विशेषकाः।
एकबुद्धावुपारोहे क्रमाद्यस्तमुपागतम् ॥ १४ ॥

अथापि स्यात्—पूर्वे वर्णा भेत्तार इति, न; तदैवास्तमितोपलब्धित्वात्, सत्तामात्रेण चाभेदकत्वात्, सकलसद्भावाविशेषादैकपद्यप्रसङ्गात्;

---

अपरं प्रकारमाशङ्क्य परिहरति--निरुद्ध····इत्युक्तम् इति । चतुर्दशः श्लोकः निरुद्धबुद्धय इति । श्लोकव्यावर्त्यामाशङ्कामाह—अथापि स्यात् पूर्वे वर्णा भेत्तार इति। अन्त्यवर्णस्येति सिध्यति। एषा च 'पूर्वे वर्णा विशेषकाः' इत्यस्य व्याख्या। अतः सकलवर्णविषयः सम्बन्धग्रहः, नान्त्यवर्णमात्रविषयम् ; न च संस्कारवद्वर्णविषयः, किं तु वर्णसमुदायविषयमेव सम्बन्धग्रहणमिति। दूषयति—नेति। कारणमाह—तदैवास्तमितोपलब्धित्वादिति । यदा तेषामुपलब्धिस्तदेवेत्यर्थः । एतच्च 'निरुद्धबुद्धयः' इत्यस्य व्याख्या। यद्यप्यस्तमितोपलब्धिः, तथापि वर्णास्तावत्सन्त्येव; अतस्तेषामन्त्यवर्णभेदकत्वमिति; तत्राह—सत्तामात्रेण चाभेदकत्वादिति। अत्रैव कारणमाह—सकलसद्भावाविशेषादैकपद्यप्रसङ्गादिति। सम्बन्धग्रहणे ह्यन्त्यवर्णस्य सत्तया विशेषणे द्वाभ्यामिवेतरैरपि विशेषणप्रसङ्गात् सकलानां सद्भावस्याविशिष्टत्वात् पञ्चाशतोऽपि वर्णानामेकत्र सान्नादिमति सम्बन्धग्रहात् पञ्चाशदपि वर्णाः संभूयैकं पदं स्युरित्यर्थः । ततश्च 'त्र्यक्षरं गौरिति पदम्' इत्यादिलोकप्रसिद्धिविरोधः । एवं पूर्वार्धो व्याख्यातः। सत्यमेवमेतत्; अत एवाचार्यैः पक्षान्तरं दर्शितम्—

"अन्त्यवर्णे च विज्ञाते सर्वसंस्कारकारितम्।
स्मरणं यौगपद्येन सर्वेष्वन्ये प्रचक्षते ॥" इति ।

---

१. Omitted. च. मूलम्.

सकलोपलम्भप्रभावितभावनाबीज[1]जन्मनि चरमे प्रत्यये स्यात् सहभावा-द्विशेषकत्वम्; तत्र तु क्रमादिभेदप्रत्यस्तमयात् अस्त[2]मितक्रमादिभेदानां च सामर्थ्याख्यापनात् यथाकथञ्चिदपि पुरःपरिगतरूपेभ्य एकोपलब्धि-प्र[3]काशिभ्यः स्यादर्थप्रत्यय इत्युक्तम् इति ॥

---

अत आह —सकलोपलम्भप्रभावितभावनाबीजजन्मनीति । सकलानां वर्णानामुप-लम्भैः प्रभावितानि यानि भावनाबीजानि तेभ्यो जन्म यस्य तस्मिन्निति । चरमे प्रत्यय इति । केवलस्मरणरूप इति । स्यात् संभवेत् । सहभावाद्विशेषकत्वमिति । सहभावात् पूर्वेषामन्त्यवर्णविशेषकत्वं व्युत्पत्तौ विवक्षितमित्यर्थः । अस्तु सम्प्रति-पत्तिरेवोत्तरमिति चेत् तत्राह—तत्र त्विति । स्मृतिसमारूढा वर्णा वाचका इत्यस्मिन् पक्ष इत्यर्थः । इत्युक्तमित्यनेनान्वयः । क्रमादिभेदप्रत्यस्तमयादिति । चरमे विज्ञाने क्रमादीनां भेदानां प्रत्यस्तमयात् । आदिशब्देन साहित्यान्यू-नत्वादेरुपादानम् । सत्यमस्तु क्रमादिविशेषाणां तत्र प्रत्यस्तमयः, ततः किमि-त्याह—अस्तमितक्रमादिभेदानां च सामर्थ्याख्यापनादिति । अस्तमिताः क्रमादि-भेदा येषामिति विग्रहः । समाथ्याख्यापनात्, सामर्थ्यं वाच्यवाचकयोः शक्तिः, तस्य अख्यापनात् ज्ञापनाभावादित्यर्थः । वृद्धो हि विशिष्टक्रमादिभेदानामेव वर्णानां सामर्थ्यं बालायाचष्टे, न जातु तद्रहितानामिति । यथोक्तम्—

"यावन्तो यादृशा ये च यदर्थप्रतिपादने ।" इति ।

सन्तु क्रमादिविशिष्टा एव वर्णा वाचकाः । सामर्थ्याख्यापनादिति आख्यापनादिति वा छेदः । वृद्धो हि विशिष्टक्रमादिभेदानां सामर्थ्यमाख्याति;

---

१. Omitted बीज. मूलम् ३. प्रतिभासिभ्यः. मूलम्.
२. तत्क्रमादि. मूलम्.

तत्तु त्वयास्तमितक्रमादिभेदानामाख्यापयितव्यम् , न विशिष्टानाम ; सम्बन्धग्रहश्च तेषामेवास्तु ; चरमज्ञानवर्तिनां सामर्थ्यस्वीकारादिति णिजभिप्रायः । को दोषः? अत आह—यथाकथञ्चिदपि पुरःपरिगतरूपेभ्य इति । एक-वक्तृत्वादिविपर्ययेऽपि पुरः चरमविज्ञानस्य पूर्वक्षणे परिगतं रूपं येषामिति विग्रहः । एकोपलब्धिप्रकाशिभ्य इति सुगमम् । स्यादर्थप्रत्यय इति । प्रसज्येतार्थप्रत्यय इति । इत्युक्तमिति । 'पूर्वोपलब्धिभेदेऽपि भवेत्' इत्यत्र । एवमुत्तरार्धो व्याख्यातः । एकस्यां बुद्धौ वर्णानामुपारोहे क्रमादिविशेषण-मस्तमुपागतमिति ॥

इति स्फोटसिद्धिव्याख्यायां

चतुर्दशः श्लोकः

**न प्रत्ययः स्यादेकत्वे प्रयोक्तुरविभाविते ।**

**न च तस्य परिज्ञानमकस्मादवकल्पते ॥ १५ ॥**

**इदं चैष वर्णवादी प्रष्टव्यः–किमियमनानाप्रयोक्तृकतार्थज्ञानाङ्गम्,**

---

"प्रत्येकं दूषिताः पक्षाः पुरस्ताद्वर्णवादिनाम् ।

इदानीं तेषु सर्वेषु समं दूषणमुच्यते ॥" इत्यभिप्रायेणाह—

**न प्रत्यय.....उपारोहात्** इति । न प्रत्ययः स्यादिति पञ्चदशः श्लोकः । विकल्पमन्तर्भाव्यास्य श्लोकस्य प्रवृत्तिरिति दर्शयन्नाह—इदं चैष वर्णवादी प्रष्टव्य इति । सर्वपक्षसाधारण्यं दर्शयतोक्तमेष वर्णवादीति । इदंशब्दनिर्दिष्टमेव दर्शयति—किमियमनानाप्रयोक्तृकतार्थज्ञानाङ्गं न वेतीति । नाना भिन्नाः प्रयोक्तारो येषां वर्णानां ते नानाप्रयोक्तृकाः तेषां भावो नानाप्रयोक्तृकता तदभावस्त्वनानाप्रयोक्तृकता । अथवा नञो नानाशब्देन सम्बन्धः, अनानाभूतः एकः कर्ता येषां तेषां भावोऽनानाप्रयोक्तृकता एककर्तृकतेति यावत् । अर्थज्ञानाङ्गमिति । अर्थज्ञानस्य कारणं वर्णाः, वक्त्रेकत्वं तदुपकारकमङ्गम् । यथोक्तम्—

"प्रधानं फलसम्बन्धि तत्सम्बन्ध्यङ्गमिष्यते ।" इति ।

येयमनानाप्रयोक्तृकता सा किमर्थज्ञानं प्रत्यङ्गम्, न वा तदङ्गमिति । इतिशब्द इदंशब्देनानुसन्धातव्यः । तत्र तावत् द्वितीयपक्षदूषणं श्लोकाभिप्रेतं पुरस्कुर्वन्नाह—तत्रानङ्गत्व इति । तयोरनङ्गत्वाङ्गत्वयोर्मध्ये यदनङ्गत्वं तस्मिन्नाश्रीयमाण इत्यर्थः । वक्तृभेदेऽपि तत्स्यादिति । नानावक्तृत्वे सत्यपि वर्णेभ्योऽर्थज्ञानं स्यादित्यर्थः । अस्तु को दोषः, अत आह—न चेष्यत इति । न च वक्तृभेदेऽर्थज्ञानं वर्णवादि-

न वेति । तत्रानङ्गत्वे वक्तृभेदेऽपि तत्स्यात्; न चेष्यते, दृश्यते वा । एवं ह्युक्तम्—

"तेषां तु गुणभूतानामर्थप्रत्यायनं प्रति ।
साहित्यमेककर्त्रादि क्रमश्चापि विवक्षितः ॥

वक्त्रेकत्वनिमित्ते च क्रमे सति नियामकम् ।
प्रयुञ्जानस्य यत्पूर्वं वृद्धेभ्यः क्रमदर्शनम् ॥

यौगपद्यं त्वशक्यत्वान्न[2] च तेषामिहाश्रितम् ।
कर्तृभेदश्च तत्र स्यान्न चैवं दृश्यतेऽभिधा ॥" इति ।

---

भिरपीष्यत इति । दृश्यते वेति । वाशब्देन नञ आकर्षः । वक्तृभेदे वर्णेभ्योऽर्थज्ञानं न वा दृश्यत इति । कुत इत्यपेक्षायामाह—एवं ह्युक्तमिति । वार्तिक इति सिध्यति । वार्तिकत्रयमुपादत्ते—तेषां त्वित्यादिना । "यावन्तो यादृशाः" इत्यतीतं वार्तिकम् । तत्र पुनः कीदृशानां सामर्थ्यं दृष्टं तद्दर्शयति—तेषामिति । गुणभूता ह्यर्थप्रत्यायने वर्णाः, दर्शनस्य परार्थत्वादिति न्यायात् । तेनैषां साहित्यमेकवक्तृत्वमादिशब्दोपात्तं चान्यूनानधिकत्वं क्रमविशेष इति सर्वं विशेषणं विवक्षितं पश्वेकत्वादिवदिति । किं पुनः क्रमविवक्षायां तद्विशेषे वा प्रमाणं तद्दर्शयति—वक्त्रेकत्वनिमित्त इति । वक्तुरेकत्वं निमित्तं यस्येति बहुव्रीहिः । वक्त्रेकत्वेन चैकान्तादिति वा पाठः । न ह्येको वक्ता युगपदनेकवर्णोच्चारणक्षम इत्यवश्यंभावी तावत् क्रमः । स च य एव वृद्धव्यवहारदृष्टः स एव नियम्यते, तस्यैवार्थप्रतीतावङ्गत्वावगमादिति । ननु साहित्यं क्रमश्चोभयं परस्परविरुद्धम्, अतः साहित्यसिद्ध्यर्थं यौगपद्यमाश्रीयतामत आह—यौगपद्यं त्विति । सत्यमेवमेतत् । यौगपद्यं

---

१. कर्त्रेकत्वे. चौ. मुद्रिते. २. नैव. मूलम्.

**अङ्गत्वे तु ज्ञापकानुप्रवेशान्नानवधारितोऽर्थप्रतीतिसिद्धौ हेतुः । दृश्यते च व्यवहिततिरोहितोदीरितेभ्यो वर्णेभ्योऽर्थज्ञानम्; न च व्यवहिततिरोहित-**

---

त्वशक्यमित्युक्तम्—

"समुदायोऽपि तेभ्योऽन्यो वारणीयोऽनया दिशा ।" इति ।

शक्यत्वे वा कर्तृभेदः स्यादित्याह—कर्तृभेदश्च तत्र स्यादिति । ततः को दोषः? अत आह—न चैवं दृश्यतेऽभिधेति । एकस्तावद्बहून् वर्णान् युगपदुच्चारयितु न शक्तः; बहुषु तूच्चारयत्सु स एव दोषः बहुप्रयुक्तत्वमेव दोषः, एककर्तृकत्वस्यार्थज्ञानाङ्गत्वात्; अतोऽङ्गवैकल्यादेवाभिधा न दृश्यते इति । इदानीं प्रथम पक्षं श्लोकव्याख्यया दूषयति—अङ्गत्वे त्विति । अनानाप्रयोक्तृकताया इति सिध्यति । ज्ञापकानुप्रवेशादिति । ज्ञापकेष्वनुप्रवेशादिति विग्रहः; ज्ञापकवर्गान्तर्भूतत्वादित्यर्थः । नानवधारितार्थप्रतीतिसिद्धौ हेतुरिति । अनवधारिता अनानाप्रयोक्तृकतेति सिध्यति । पुँल्लिङ्गपाठे त्वनानाप्रयोक्तृकताज्ञापकहेतुरिति विशेष्यं सिध्यति । अर्थप्रतीतेः सिद्धौ निष्पत्तौ हेतुरङ्गमिति । नेयमर्थसिद्धौ हेतुः, अनवधारितत्वात्; अतो व्यापकविरुद्धोपलब्ध्या व्याप्यस्य ज्ञापकत्वस्यापि निवृत्तेरर्थसिद्धावहेतुत्वम् । अनेन च 'न प्रत्ययः स्यादेकत्वे प्रयोक्तुरविभाविते ।' इत्येतद्व्याख्यातम् । अत एवावधार्यतामिषेति चेत्, अत आह—दृश्यते चेति । वर्णेभ्योऽर्थज्ञानमिति सम्बन्धः । कथंभूतेभ्यः? अत उक्तम्—व्यवहिततिरोहितोदीरितेभ्य इति । व्यवहितेन तिरोहितेन वा वक्त्रोदीरितेभ्य उच्चारितेभ्य

---

१. नानावधारितोऽर्थ. मूलम्.

**योरकस्मादेकत्वज्ञानं वक्त्रोः संभवति; संभवति हि स्वरसादृश्ये निरन्तरो-**

---

इति । व्यवहितः कुड्यादिना विदूरवर्ती । तिरोहितोऽन्धस्य समीपस्थितस्तमसा, अनन्धस्य पिशाचादयो वा तिरस्करणीविद्यातिरोहिता इति । 'न च तस्य परिज्ञानमकस्मादवकल्पते ।' इत्येतद्व्याचष्टे—न च व्यवहिततिरोहितयोरिति । अकस्माद्धेतुं विनेत्यर्थः । एकत्वज्ञानं वक्त्रोः संभवतीति । व्यवहिततिरोहितयोर्वक्त्रोर्यदेकत्वं तद्विषयं श्रोतुर्ज्ञानम् अकस्मा-दुत्पत्तुं न संभवतीति योजना । तिरोहितशब्दस्य वा पूर्वनिपातः । ननु तिरोहितादिप्रयुक्तेभ्योऽर्थप्रत्यय उदेति वा न वा? यद्युदेति, ततो वक्तुरेकत्वं श्रोत्रा निश्चितम्; अथ नोदेति, अतो नानावक्तृकतेति निश्चयः, वक्तु-रेकार्थप्रत्ययैकत्व एवार्थप्रत्ययदर्शनात् । न च ज्ञापकानुप्रवेशः; तस्य ज्ञापकौ तु नैरन्तर्यस्वरविशेषौ; तयोरुत्पादकं वक्त्रेकत्वम्; तदज्ञातमेव नैरन्तर्यस्वर-विशेषावुत्पादयति; एकत्र वक्तरि प्रयुञ्जाने हि नैरन्तर्यस्वरविशेषवशेन कोऽपि नामातिशयविशेषः सर्वस्वसंवेद्यः प्रकाशते, येनैकपदबुद्धिगोचरतां प्रतिपद्यन्ते वर्णा इत्याशङ्क्याह—संभवति हि स्वरसादृश्ये निरन्तरोच्चारणे वक्तृभेदेऽपि कलकलश्रुतौ चार्थज्ञानमिति । संभवति हि व्यवधाने तिरोधाने च वक्तृभेदेऽप्यर्थज्ञानमित्यन्वयोपस्कारौ । ननु नैरन्तर्यस्वरविशेषार्थं वक्त्रेकत्वमर्थ्यत इत्युक्तम्; अत उक्तम्—स्वरसादृश्ये निरन्तरोच्चारण इति । स्वरसादृश्ये निरन्तरोच्चारणे च सतीत्यर्थः । स्वरसादृश्यनिरन्तरोच्चारण इति पाठे समाहारद्वन्द्वः । अत्यन्तविलक्षणा हि वक्तारः संभूयात्यन्तसदृशस्वरा भूत्वा वर्णानां तादृप्यमारोपयन्त एकवक्तृप्रयुक्त-

---

१. वक्तुः. मूलम्.
२. -रेकत्व एवार्थ. ख.
३. कलशब्दश्रुतौ वार्थ. मूलम्.

च्चारणे वक्तृभेदेऽपि कलकलशब्दश्रुतौ चार्थज्ञानम्; कस्तत्र वक्तुरेकत्वनानात्वे विवेक्तुं क्षमः ? न च ध्वनिमात्रश्रवणं तत्र, वर्णपदवाक्यपरिच्छेदानामपि केषांचिद्बुद्धावुपारोहात् इति ॥

---

वर्णवत्स्वरविशेषनैरन्तर्याभ्यामर्थप्रत्ययं श्रोतॄणामुत्पादयन्तः कथमिवाश्चर्यभाजनं नाम स्युरिति । कलकलश्रुतौ चेति । संभवत्यर्थज्ञानमित्यन्वयः । ततः किमित्याह—कस्तत्र वक्तुरेकत्वनानात्वे विवेक्तुं क्षम इति । कः श्रोता तत्र व्यवधानतिरोधानयोः कलकले च वक्तुरेकत्वनानात्वे एकत्वं नानात्वं च परस्परतो विवेक्तुं शक्नोति? न कोऽपीत्यर्थः । न हि प्रत्यक्षतस्ते दृश्येते ; न चानुमातुं शक्येते, एकप्रतिबद्धलिङ्गाभावात् ; न चार्थापत्तितः, अन्यथानुपपद्यमानस्यादर्शनात् ; न च शब्दः, तस्यादर्शनात् ; न चोपमानम् , तस्य सादृश्यादन्यत्रासम्भवात् । ननु ध्वनिमात्रं कलकले श्रूयते, न वर्णा एव परिच्छिद्यन्ते ; कुतः पदानि, कुतस्तरां वाक्यानि, कुतस्तमां तेभ्योऽर्थप्रत्यय इत्यत आह— न च ध्वनिमात्रश्रवणं तत्रेति । कलकल इत्यर्थः । न हि कलकले सर्वेषामेव श्रोतॄणां ध्वनिमात्रश्रवणमेवास्तीति नियमः समस्तीत्यर्थः । कुत इत्यत्राह—वर्णपदवाक्यपरिच्छेदानामपि केषाञ्चिद्बुद्धावुपारोहादिति । केषाञ्चिच्छ्रोतॄणां बुद्धौ वर्णपरिच्छेदस्य पदपरिच्छेदस्य वाक्यपरिच्छदस्ये चोपारोहात् तदनुगुणकायवचनचेष्टानुमानादुपारोहनिश्चयादिति । बुद्धिर्ज्ञानं तस्या विषये प्रकाशजननं परिच्छेद इति ॥

इति स्फोटसिद्धिव्याख्यायां

पञ्चदशः श्लोकः

---

**सम्बन्धज्ञानसमये ज्ञायते न नियोगतः ।**
**तिरोहितव्यवहितप्रयुक्तौ वक्तुरेकता ॥ १६ ॥**

आवृतविदूरवर्तिवक्तृप्रयुक्तेष्वपि वर्णेष्वविदुषे विद्वानर्थमाचष्टे; न च तत्र वक्तुरेकतामाश्रयति प्रतिपदकः, नापि तदनुपात्तां प्रतिपाद्यः

---

पूर्वं वक्त्रेकत्वस्याङ्गत्वमभ्युपगम्य कथा वृत्ता, सम्प्रत्यङ्गत्वेऽपि न प्रमाणमित्याह - **सम्बन्धज्ञान.....इत्युक्तम्** इति । सम्बन्धज्ञानसमय इति षोडशः श्लोकः । सम्बन्धज्ञानसमये सम्बन्धं प्रतिपद्यमानेन नियोगतो नियमेन न ज्ञायते वक्तुरेकनेति वक्ष्यमाणेन सम्बन्धः । कथमित्याह— 'तिरोहितव्यवहितप्रयुक्तौ वक्तुरेकता ।' इति । न ज्ञायत इत्यनुषङ्गः । कारिकां व्याचष्टे—आवृतविदूरवर्तिवक्तृप्रयुक्तेष्वपि वर्णेष्विति । आवृतेन तिरोहितेन विदूरवर्तिना व्यवहितापरनामधेयेन वक्त्रा प्रयुक्तेष्वपि वर्णेषु सत्स्वित्यर्थः । एवं तिरोहितव्यवहितप्रयुक्ताविति व्याख्यातम् । सम्बन्धज्ञान-समय इत्येतद्याचष्टे—अविदुषे विद्वानर्थमाचष्ट इति । अत्र च तिरोहित-व्यवहितोदीरणान्न प्रत्यक्षावगतं वक्तुरेकत्वमिति सूचितम् । न चानुमानाव-गम्यत्वम्, व्याप्त्यभावात् । तदुक्तम्—'सम्भवति हि स्वरसादृश्ये निरन्तरो-च्चारणे' इति । अत एवानर्थापत्तिगम्यत्वम् ; न चोपमानगम्यत्वम्, तस्य सादृश्यमात्रविषयत्वात् इति । न चाप्यागमगम्यत्वमप्यस्तीति दर्शयन् 'ज्ञायते न नियोगतो वक्तुरेकता' इत्येतद्याचष्टे -न च तत्र वक्तुरेकतामाश्रयति प्रतिपादक इति । इदमाकूतम्—यदा हि तिरोधाने व्यवधाने वा किञ्चिद्वाक्य-मुच्चरति, तत्राविद्वान् बालः कश्चन विद्वांसं पृच्छति—आयुष्मन् किमेतदुच्च-रितमिति । ततो विद्वानाह 'वाक्यम्' इति । तत इतरः पृच्छति 'किं पुन-

**स्वयमेव प्रतिपद्यते, यथोपलब्धस्य सम्बन्धाख्यानात्; वक्तुरेकताया निमित्तमन्तरेण प्रतिपत्तुमविभवादित्युक्तम् ॥**

---

वाक्यं नाम' इति। ततोऽन्यो वक्ष्यति—'संहत्यार्थमभिदधति पदानि वाक्यम्' इति। ततः पूर्वः पृच्छति—'किं पुनः पदं नाम' इति। तत उत्तरो वदेत्—

"यावन्तो यादृशा ये च यदर्थप्रतिपादने।
वर्णाः प्रज्ञातसामर्थ्यास्ते तथैव" सन्त एकं पदम्—इति।

ननु वर्णसमुदायस्य पदत्वे कथमेतावतां पदत्वमिति निर्णयः सेत्स्यति?—इति पृष्टे विद्वानविदुषे क्रमादिसप्तकमेवोपायतयाचष्टे, न वक्तुरेकत्वम्। यथोक्तम्—

"पदावधारणोपायान् बहूनिच्छन्ति सूरयः।
क्रमन्यूनातिरिक्तत्वस्वरवाक्यस्मृतिश्रुतीः॥" इति।

पुनश्च 'कः पदार्थः वाक्यार्थश्च' इति पृष्टः पदार्थं वाक्यार्थं चाचष्टे, न पुनस्तदौपयिकपदावधारणाय वक्तुरेकत्वमाश्रयतीति। यद्यपि सम्बन्धस्य वक्त्रा प्रयोक्तुरेकत्वं नोपात्तं पदावधारणोपायतया, तथापि श्रोतैवान्यथानुपपत्त्या वक्त्रेकत्वमप्युपादास्यते "साहित्यमेकवक्त्रादि" इति न्यायादित्यत आह—नापि तदनुपात्तां प्रतिपाद्यः स्वयमेव प्रतिपद्यत इति। प्रतिपादकेनानुपात्तामेव वक्तुरेकतां प्रतिपाद्यः स्वयमेव बालः प्रतिपादकोपादानमन्तरेणैव पदावधारणोपायतया न प्रतिपद्यत इत्यर्थः। न च तत्र वक्तुरेकतामाश्रयति प्रतिपादक इत्यत्र कारणमाह—यथोपलब्धस्य सम्बन्धाख्यानादिति। वृद्धेन पूर्ववृद्धेभ्यो यादृशं पदमुपलब्धम्, तस्यार्थेन सम्बन्धः प्रतिपादकेनाख्यायते, न ततोऽन्यादृशस्य। न च तत्र वक्तुरेकता वृद्धैराश्रिता, न च स्वयं प्रतिपन्नेति यथोपलब्धस्यैव सम्बन्धाख्यानसम्भवादित्यर्थः। नापि तदनुपात्तां प्रतिपाद्यः स्वयमेव प्रतिपद्यत इत्यत्रापि कारणमाह—वक्तुरेकताया यन्निमित्तं प्रतिपादकं प्रमाणं तदन्तरेण वक्तुरेकतामर्थज्ञानाङ्गतया प्रतिपत्तुं स्वयं प्रतिपाद्यस्याविभवात् अशक्तेरित्यर्थः। कथमित्याह—इत्युक्तमिति। पूर्वस्मिन्नेव श्लोक उक्तिः॥

इति स्फोटसिद्धिव्याख्यायां षोडशः श्लोकः

---

तस्मात्—

अनङ्गे वक्तुरेकत्वे वक्तृभेदे निरुद्भवा ।
संस्कारादावभिन्नेऽपि धीर्हेत्वन्तरसूचनी ॥ १७ ॥

तदित्थं सम्बन्धकालेऽनाश्रयणात् प्रत्ययकाले चानावेदनात् अनङ्गे

---

अस्त्वेवं भवतस्तु किमायातम् । अत आह—तस्मात्····अनुपलब्धेः इति । पूर्वश्लोकोक्तमुत्तरत्र हेतूकरोति—तस्मादिति । अनङ्ग इति सप्तदशः श्लोकः । तस्मादनङ्ग इत्येवान्वयः । तस्मादनङ्ग इत्येतद्व्याचष्टे—तदित्थं सम्बन्धकालेऽनाश्रयणात् प्रत्ययकाले चानावेदनादनङ्ग इति । तदित्थमित्येको निर्देशः । तेनानेन प्रकारेणेत्यर्थः । तदेवमुक्तेन प्रकारेण सम्बन्धकाले सम्बन्धाख्यानकाले प्रतिपादकेनानाश्रयणात् प्रत्ययकाले च सम्बन्धसंवेदनकाले च प्रतिपाद्येनानावेदनादिति तस्मादित्यस्य व्याख्या । ननु तस्मादित्यनेन पूर्वश्लोकोक्तोऽर्थो निर्देष्टव्यः । पूर्वश्लोके च प्रतिपाद्येनानावेदनादिति चोक्तम् । एवं ह्युक्तम्—

'सम्बन्धज्ञानसमये ज्ञायते न नियोगतः' । इति ।

सत्यमेवमेतत् । विवरणे तूक्तं प्रतिपादकेनानाश्रयणम् 'न च तत्र वक्तुरेकतामाश्रयति प्रतिपादकः' इति । अतः श्लोकेऽपि श्रुत्यर्थाभ्यामुभयमुक्तमित्यदोषः । अथवेह सम्बन्धकालेऽनाश्रयणात् प्रत्ययकाले चानावेदनादिति दर्शनात् पूर्वत्रापि सम्बन्धज्ञानसमय इति सम्बन्धसमये ज्ञानसमये चेति विग्रह उन्नीयते । ज्ञायत इत्येतदपि स्मरणानुभवयोः साधारणं वचनम्; सम्बन्धकाले आख्यात्रा वक्तुरेकता न स्मर्यते नाश्रीयत इति यावत्; प्रतिपाद्येन च वक्तुरेकता प्रत्ययकाले नानुभूयत इति । अनङ्ग इत्येतदेव साध्यमिति दर्शयतोक्तम्—

**वक्तुरेकत्वे वक्तृभेदेऽपि वर्णोपलब्धिसंस्काराद्यविशेषादुत्पत्तुमर्हत्यर्थज्ञानम् ; अनुत्पद्यमानं तु निमित्तान्तराधीनजन्मानमात्मानमावेदयति । न चैष निमित्तान्तरेऽपि तुल्यः प्रसङ्गः, तस्य भिन्नवक्तृप्रयोगे स्फोटस्यानुपलब्धेः ॥**

---

अनङ्गे वक्तुरेकत्वे इति । 'वक्तृभेदे निरुद्भवा' इत्युद्भवप्रतिषेधः तत्प्राप्तौ सत्यामेवोपपद्यत इति प्राप्तिं तावदाह—वक्तृभेदेऽपि वर्णोपलब्धिसंस्काराद्यविशेषादुत्पत्तुमर्हत्यर्थज्ञानमिति । श्लोके संस्कारग्रहणेनैव शृङ्गग्राहिकया तद्धेतुरुपलब्धिरप्युपात्तेति दर्शितम्—वर्णोपलब्धिसंस्कारेति । क्वचित्तु वर्णोपलब्धिग्रहणं नास्त्येव । संस्कार उभयविधोऽपि । आदिशब्देन चित्तबुद्धिस्फुरणं[2] च क्रमादि च गृह्यत इति वेदितव्यम् । उत्पत्तुमर्हत्यर्थज्ञानमिति । कारणपौष्कल्याद्भवन्मत इति भावः । एवं प्राप्तिं दर्शयित्वा निषेधमनुसन्धत्ते — अनुत्पद्यमानं त्विति । अर्थज्ञानमिति सिध्यति । निमित्तान्तराधीनजन्मानमात्मानमावेदयतीति । अनेन 'धांर्हेत्वन्तरसूचनी' इत्यत्रात्मन इत्युपस्कारः ; अर्थश्च विषय इति व्याख्यातम् । क्वचित्पुनरर्हदिति शत्रन्ततया पठ्यते, अनुत्पद्यमानमित्यत्र तुशब्दश्च नास्ति; तत्रैकग्रन्थता श्लोकवदेव द्रष्टव्या । ननु "यत्रोभयोः समो दोषः" इति न्यायादचोद्यमेतदिति चोद्यं परिहरन्नाह— न चैष निमित्तान्तरेऽपि तुल्यः प्रसङ्ग इति । अनङ्गे वक्तुरेकत्व इत्यादिकः । कारणमाह—तस्य भिन्नवक्तृप्रयोगे स्फोटस्यानुपलब्धेरिति । तस्येति निमित्तान्तरस्येति । हेत्वन्तरशब्देन निमित्तान्तरशब्देन वा किं विवक्षितमित्यत उक्तम्—स्फोटस्येति । अथवा तस्येति प्रकृतत्वादर्थतश्च स्फोटवादिनो निर्देश इति तस्य मत इत्यर्थः ॥

इति स्फोटसिद्धिव्याख्यायां सप्तदशः श्लोकः

---

१. Omitted वर्णोपलब्धि- क　　२. स्मरणं. ख.

**नन्वर्थाभिव्यक्ताविव शब्दाभिव्यक्तावपि तुल्यः प्रसङ्गः सर्वः। तदुक्तम्—**

**"यस्यानवयवः स्फोटो व्यज्यते वर्णबुद्धिभिः।**
**सोऽपि पर्यनुयोगेन नैवानेन विमुच्यते ॥"**

---

एदतेव विवृणोति—**नन्वर्थाभिव्यक्ताविव······नानात्वदोषः** इति। 'न चैष निमित्तान्तरेऽपि तुल्यः प्रसङ्गः' इत्युक्तम्; तत्र यथा तुल्यत्वाशङ्का भवति, तथा दर्शयन्नाह। यावान् प्रसङ्गोऽर्थाभिव्यक्तौ वर्णेषु स्फोटवादिना दर्शितः, स सर्वो ध्वनिषु तद्वदेव स्फोटाभिव्यक्तावपि तुल्यः प्रसङ्ग इत्यर्थः। कथमित्यपेक्षायामाह—तदुक्तमिति। वार्तिककारेणैव। वार्तिकमुपादत्ते—यस्यानवयव इति। प्रसङ्गः सर्व इति। न केवलमनङ्गे वक्तुरेकत्व इति, किन्तु पूर्वोक्तः सर्वोऽपीत्यर्थः। यच्च वर्णानामर्थप्रत्यायने प्रत्येकाशक्तेः संहतानामप्यशक्तिरिति चोद्यम्, तत्सर्वं स्फोटवादिनोऽपि ध्वनीनां वर्णानां वा तदभिव्यक्तौ तुल्यमेवेत्याह– यस्येति। "वर्णग्रहणमनास्थयोक्तम्, ध्वनीनामेवाभिव्यञ्जकत्वस्य परैरिष्टत्वात्" इति रत्नाकरे व्याख्या। "अपि च स्फोटवादिनोऽपि पूर्वपूर्ववर्णबुद्धिजननद्वारेण ध्वनिभिः स्फोटोऽभिव्यज्यत इति मतम्; अतस्तस्यापि तुल्योऽयं पर्यनुयोगः। कः? प्रत्येकमनभिव्यक्तौ मिलितानामप्यनभिव्यञ्जकत्वमिति। यश्चोभयोर्दोषः न तमेकः पर्यनुयोज्यो भवतीत्याह—यस्येति"। एवं काशिकायां व्याख्या। तुल्यत्वमेव दर्शितमनन्तरेण वार्तिकद्वयेन—

"तत्रापि प्रतिवर्णं हि पदस्फोटो न गम्यते।
न चावयवशो व्यक्तिस्तदभावान्न चात्र धीः ॥

---

१. इत्युक्तम्. मूलम्. २. नैव तेन. मूलम्.

अत्रोच्यते—

प्रयत्नभेदतो भिन्ना ध्वनयोऽस्य प्रकाशकाः ।
प्रत्येकमनुपाख्येयज्ञानतद्भावनाक्रमात् ॥ १८ ॥

न तावत्कैवल्ये यौगपद्येऽभिमतानुपूर्व्यभेदे वक्तृभेदे वाविशेषा-

---

प्रत्येकं चाप्यशक्तानां समुदायेऽप्यशक्तता ।
तत्र यः परिहारस्ते स नोऽत्रापि भविष्यति ॥" इति ।

अस्ति तावदेष प्रसङ्गः—कर्तृभेदे स्फोटाभिव्यक्तिरापद्यत इति पूर्वपूर्ववर्णपदविपर्यासक्रमेण ध्वनिभिः स्फोटाभिव्यक्तिमेवासान्निच्छति । वक्तृभेदेऽपि पूर्ववर्णभ्रमपरम्परा क्रमोच्चारणेऽप्यविशिष्टैवेति । तथान्येऽपि दोषाः क्रमवैपरीत्यादिविषया द्रष्टव्याः । यद्यप्युत्तरस्मिन् वार्तिकद्वये प्रत्येकाशक्तौ समुदायेऽप्यशक्तिरिति चोद्यं तुल्यमित्युच्यते, तथापि "यस्यानवयवः स्फोटः" इति वार्तिकं सर्वप्रसङ्गसाधारणमेवेत्यभिप्रायः । अत्रोच्यत इति परिहारत्वेन श्लोकोऽवतारितः ।

प्रयत्नभेदत इत्यष्टादशः श्लोकः । श्लोकस्य हेतुत्वं विवक्षन् प्रतिज्ञामुपस्करोति—न तावदिति । पर्यनुयोगतुल्यता प्रथमं परिह्रियते, परस्तात्त्वसाधारणो दोषः परिहरिष्यते इति तावच्छब्देन दर्शयति । कैवल्य इति । एकैकोच्चारण इत्यर्थः । यौगपद्य इति । समुदाय इत्यर्थः । अभिमातानुपूर्व्यभेद इति । यस्तु क्रमनियमोऽभिमतः, तदन्यथात्व इति । वक्तृभेद इति । भिन्नवक्तृत्वे । अविशेषादिति । वर्णानामविशेषादिति । अर्थाभिव्यक्ताविव शब्दाभिव्यक्तावपि तुल्यः प्रसङ्ग इति । यथा ह्येकैकाक्षरविज्ञानेनार्थ उपलभ्यत इति वर्णवादिनं प्रत्युच्यते, नैवमेकैकाक्षरविज्ञानेन स्फोटोऽभिव्यज्यत इति स्फोटवादिनं प्रति वक्तुं

---

१. नैतत् सारम्, यतः. मूलम् ।
२. खलु. मूलम्
३. Omitted वक्तृभेदे. मूलम्.

दर्थाभिव्यक्ताविव शब्दाभिव्यक्तावपि तुल्यः प्रसङ्गः । तथा हि— सर्वत्र शब्दसमुत्थापकप्रयत्ननिरूपणचित्तवृत्त्याध्यक्षमुपलभ्यमानरूपभेदाः प्रयत्नाः स्वात्मन्यायतमनाः स्वभावभेदहेतुतयाध्वनीन् व्यावर्तयन्ति,

---

शक्यम् । न चाक्षरव्यतिरिक्तोऽस्ति समुदायो नाम—इत्येतदपि न वक्तुं [1]नैयुक्तम् । एवमभिमतानुपूर्व्यभेद इत्येतदपि । वक्तृभेदे च इत्येनदपि न तुल्यतया वक्तव्यम् । अत्र हेतुः श्लोक इत्याह—तथा हीति । क्वचित्तु तत्सारं यतः' इति श्लोकमवतार्य 'न खलु कैवल्य' इति पाठः । अत्र नैत्सारमित्यस्य व्याख्यानं न खल्वित्यादि, यत इत्यस्य व्याख्या तथा हीति योजना । सर्वत्रेति । वर्णवादिपक्षे स्फोटवादिपक्षे चेत्यर्थः । अथ वा सर्वत्र सर्वेषु देशेषु काले वा । अथवा सर्वेषु पुरुषेषु सर्वत्र शब्दोच्चारणे वा । अथवा कैवल्ये यौगपद्येऽभिमतानुपूर्व्यभेदे कर्तृभेदे च सर्वत्रेत्यर्थः । प्रयत्ना ध्वनीन् व्यावर्तयन्तीत्यन्वयः । भिन्दन्तीत्यर्थः । अध्यक्षमुपलभ्यमानरूपभेदा इति । अध्यक्षमित्युपलम्भक्रियाविशेषणम् । अक्षं चात्र मन एवाभिप्रेतमिति दर्शयतोक्तम्—शब्दसमुत्थापकप्रयत्ननिरूपणाचित्तवृत्त्येति । शब्दस्य समुत्थापको यः प्रयत्नः तन्निरूपणात्मिका या चित्तस्य वृत्तिस्तयेति । प्रयत्नस्वरूपनिरूपणचित्तवृत्त्या तद्भेदोऽपि गृह्यत इति दर्शितम्—प्रयत्ननिरूपणेति । कथं पुना रूपभेदः, तद्दर्शितम्—शब्दसमुत्थापकेति । प्रयत्नस्य पुनः किं कारणम्, कश्च मनसा सन्निकर्षः, तद्दर्शितम्—स्वात्मन्यायतमानाः स्वभावभेदहेतुतयेति । स्वस्यात्मनो भावभेदोऽभिप्रायभेदः इच्छाविशेषः स एव हेतुर्येषां प्रयत्नानां तेषां भावः सा तया । स्वात्मन्यायतमानाः स्वात्म्यन्यायत्ता भवन्तः स्वात्माधीना इत्यर्थः । आत्मसमवायिनी हीच्छा, सा स्वाश्रय एवात्मनि प्रयत्नं प्रसूते ; गुणश्च गुणि-

---

१. Omitted अपि. मूलम्. २. गृह्यमाण. मूलम्.

तँतो नियतनादनिबन्धनोपव्यञ्जनाः न सर्वत्र शब्दभेदाः प्रकाशन्ते ।

---

परतन्त्र इति गुणत्वात्प्रयत्नस्य संयुक्तसमवायः सम्बन्धो दर्शितो वेदितव्यः । अथवा प्रयत्नस्य पुनः किं कारणम्; अत उक्तम्—स्वात्मन्यायतमाना इति । प्रयत्नोत्पादने नास्य परापेक्षेत्यर्थः । कथं पुनर्गुणिभूते स्वात्मन्यायत्तेति चेत्, अत उक्तम्—स्वभावहेतुतयेति । स्वात्मनो यः स्वीयो भावः क्रिया वाभिप्रायो वेच्छात्मा तस्य हेतुतया हेतुत्वादिति पूर्ववत् । अथवा प्रयत्नानां ध्वनिव्यावर्तकत्वे को हेतुः अत उक्तम्—स्वात्मन्यायतमाना इति । प्रयत्नाः खलु स्वात्मनि स्वरूप एवायतमानाः, नान्यपरतन्त्रा इत्यर्थः । कथमित्याह—स्वभावहेतुतयेति । स्वीयस्य भावस्य जन्मनो ध्वनि प्रति हेतुत्वादिति । कथं पुनः प्रँयत्नानामेतादृशो महिमेति चेत्, तद्दर्शितम्—स्वभावहेतुतयेति । एष हि प्रयत्नस्य स्वभावः, यज्जन्मसमय एव ध्वनिभेदं प्रसूत इति । तथा च व्यावर्तयन्तीत्यनेनान्वयः । अथवा ननु कथमेकप्रयत्नजातीयानां ध्वनिव्यावर्तकत्वमित्यत उक्तम्—स्वभावभेदहेतुतयेति । स्वीयस्य स्वभावभेदस्य हेतुतयेति, स्वीयस्वभावभेदो हेतुः सहकारी येषां तेषां भावस्तत्ता तया वेति । 'रूपभेदाः' इत्यत्र पक्षधर्मता दर्शिता, अत्र हेतुवचनमिति द्रष्टव्यम् । अथवा कीदृश्या व्यावृत्त्या ध्वनीन् विषयीकुर्वन्तीति तद्दर्शयति—स्वभावहेतुतयेति । प्रयत्नभेदकृता व्यावृत्तिर्नौपाधिकभेदमात्रहेतुः, किं तु स्वभावभेदस्यैव हेतुरित्यर्थः । एवं तावत् 'प्रयत्नभेदता भिन्ना ध्वनयः' इत्ययमंशो व्याख्यातः । श्लोकशेषमनुसन्धत्ते—तत इति । ध्वनिस्वभावभेदादित्यर्थः । नियतनादनिबन्धनोपव्यञ्जना इति । नादो ध्वनिरित्यनर्थान्तरम् । विलक्षणप्रत्ययवेद्याः शब्दभेदास्तावद्विलक्षणा इत्यविवादम् । तेषां च प्रतिस्वं भिन्नजातीयाः प्रतिनियता ध्वनयोऽभिव्यक्तिहेतव इति स्थितम् । तेनायमर्थः—नियता नादा निबन्धनं यस्य व्यञ्जनस्य

---

१. Omitted ततः. मूलम्. २. Omitted प्रयत्नानाम्. ख.

नापि प्रत्येकमनवद्योतनात्, उत्तरनादवैयर्थ्यप्रसङ्गात्, अवयवशो व्यक्त्यनुपपत्तेस्तदभावात्, प्रत्येकमशक्तौ समुदायेऽप्यशक्तेः, क्रम-

---

तन्नियतनादनिबन्धनम्, तादृशं व्यञ्जनं येषां ते तथोक्ताः। 'न शब्दभेदाः प्रकाशन्ते' इति वक्ष्यमाणेन सम्बन्धः। यदैव स्वीया नादाः सन्ति, तदैव शब्द-भेदा गवादिस्फोटात्मानः प्रकाशन्त इति। एतच्च 'ध्वनयोऽस्य प्रकाशकाः' इत्यस्य व्याख्यानम्। इदमा स्फोटात्मानं परामृशति। एवं च पर्यनुयोगतुल्यत्वं परिहृतमित्याह—न सर्वत्रेति। कैवल्ये यौगपद्येऽभिमतानुपूर्व्यभेदे वक्तृभेदे च न सर्वत्र शब्दभेदाः प्रकाशन्ते; किं तु स्वव्यञ्जकध्वनिसद्भाव एव; स चाभिमतानुपूर्व्यसत्तायामेवेति कार्यदर्शनान्यथानुपपत्तिप्रमाणकम्। तत इत्यादे-रेकवाक्यता वा। नियतनादनिबन्धनव्यञ्जनत्वान्न सर्वत्र शब्दभेदाः प्रकाशन्ते, अभिमतानुपूर्व्यामेव; तत्रैव प्रतिनियतध्वनिसद्भावादिति। सम्प्रति प्रत्येक-मिति पदमनुसन्धत्ते—नापीति। साम्प्रतमित्यन्वयः। प्रत्येकमनवद्योत-नादिति। यथा वर्णाः प्रत्येकमर्थं नावद्योतयन्ति, एवं ध्वनयोऽपि न प्रत्येकं पदात्मानमवद्योतयन्ति, अप्रकाशादिति भावः। अथावद्योतयन्तीत्युच्यते तत्राह—उत्तरनादवैयर्थ्यप्रसङ्गादिति। यदि प्रत्येकमवद्योतनम्, ततः पूर्वे-णैवावद्योतनादुत्तरनादवैयर्थ्यं प्रसज्येतेति नन्ववयवशोऽवद्योतयन्तु, न कस्यचि-दप्यानर्थक्यमित्यत आह—अवयवशो व्यक्त्यनुपपत्तेरिति। कुत इत्यत्राह—तदभावादिति। अवयवाभावान्निरवयवस्य पदात्मन इत्यर्थः। प्रत्येकमशक्तौ समुदायेऽप्यशक्तेरिति। प्रत्येकं तावन्नादानां पदाभिव्यक्तौ नास्ति शक्तिः; संहता अपि त एवेति कथं शक्ता भवन्ति? न हि तदा तेषां रूपान्तरोदय इत्यर्थः।

---

१. गवादिवत्. ख. २. Omitted न. ख.

जन्[1]मनामनवाप्तयौगपद्यानां समुदायाभावात्, पदाभिव्यक्तिरपि दुर्लभेति साम्प्रतम्; यतः प्रत्येकमपि तेऽविकलं स्फोटात्मानमभिव्यञ्जन्ति। न चेतरनादवैयर्थ्यम्, अभिव्यक्तिभेदात्। तथा हि—पूर्वे ध्वनयोऽनुपजातभावनाविशेषमनसः प्रतिपत्तुरव्यक्तरूपोपग्राहिणी-

---

खुररवमात्रेण चेदमुपन्यस्तम्, परमार्थतस्तु समुदायोऽप्यसम्भव्येवेत्याह—क्रमजन्मनामनवाप्तयौगपद्यानां समुदायाभावादिति। क्रमेण जन्म येषामिति बहुव्रीहिः। अनवाप्तं यौगपद्यं यैरिति विग्रहः। क्षणिकत्वादिति भावः। क्रमजन्मत्वं च तत्स्वभावादिति द्रष्टव्यम्। तथा दर्शनात्; एकदेशकालसमन्वयं विना समुदायाभावादित्यभिप्रायः। पदाभिव्यक्तिरपीति। अर्थाभिव्यक्तिवदेवेति भावः। तदसाम्प्रतत्वे हेतुः प्रत्येकमित्येतदिति दर्शयतोक्तम्—यत इति। व्याचष्टे—प्रत्येकमपि तेऽविकलं स्फोटात्मानमभिव्यञ्जन्तीति। प्रत्येकं ध्वनयोऽस्य प्रकाशका इति सम्बन्धः। अस्येत्येकवचनं विवक्षितम्, ध्वनय इति बहुवचनं चेति भावः। प्रत्येकमपीत्यपिशब्देन 'प्रत्येकमनवद्योतनात्' इति परोक्तासम्भावनाशङ्कानूदिता। ते ध्वनयः। न चावयवशो व्यक्तिरङ्गीक्रियत इत्याह—अविकलमिति। श्लोकशेषमनुसन्धत्ते—न चेति। इतरनादवैयर्थ्यमिति। पूर्वं क्रमजन्[2]मनां प्रत्येकमभिव्यञ्जकत्वे पूर्वस्यावश्यंभावित्वात्तेनैव कृतकरमुत्तरमनर्थकं स्यात् इत्युक्तम्—उत्तरनाद इति; सम्प्रति सर्वेषामविकलतयाभिव्यञ्जकत्वे पूर्ववदुत्तरनादानर्थक्यम्; अथ पूर्वेणास्पष्टाभिव्यक्तिरुत्तरेण स्फुटाभिव्यक्तिः, ततः पूर्वानर्थक्यमित्यभिप्रायेणेतरग्रहणमिति वेदितव्यम्। कारणमाह—अभिव्यक्तिभेदादिति। अभिव्यक्तिभेदसाधनाय श्लोकशेष इत्याह—तथा हीति। पूर्वे ध्वनय इति। सर्वान्तिमात् प्रागभाविन इत्यर्थः। अनुपजातभावनाविशेष-

---

१. जन्यानाम्. मूलम्. २. Added च. मूलम्.

रुत्तरव्यक्त¹परिच्छेदोत्पादानुगुणभावनाबीजवापिनीः प्रख्याः प्रादुर्भावयन्ति ; पश्चिमस्तु पुरस्तनध्वनिनिबन्धनाव्यक्तपरिच्छेद²प्रभावितसकलभावनाबीजसहकारि स्फुटतरविनिविष्टस्फोटबिम्बमिव प्रत्ययमतिव्यक्त-

---

मनस इति। भावना संस्कारः, तस्या विशेषः, नोपजातो भावनाविशेषो यस्मिन् तदनुपजातभावनाविशेषम्, तादृशं मनो यस्य स तथोक्तः। एतच्च मनोधर्माः संस्कारादय इत्यभिमानवतां मतेनोपन्यस्तमिति वेदितव्यम्। प्रतिपत्तुः श्रोतुः। अव्यक्तरूपोपग्राहिणीरिति। अव्यक्तं रूपं स्वरूपं यस्य पदस्य तदव्यक्तरूपं तस्योपग्रहणशीलेति। उपशब्देन सामीप्यवाचिना अस्ति ग्रहणस्य तद्विषयत्वमिति दर्शितम्। तर्हि किमाभिः प्रयोजनमत आह—उत्तरव्यक्तपरिच्छेदोत्पादानुगुणभावनाबीजवापिनीरिति। उत्तरः सर्वान्तिमध्वनिना जनिष्यमाणो योऽस्य व्यक्ततया परिच्छेदः तस्य य उत्पादः तं प्रत्यनुगुणस्य भावनाबीजस्य वापिनीरिति। प्रख्या इति प्रत्यक्षज्ञानानि। प्रादुर्भावयन्ति जनयन्ति ; नित्यबुद्धिवादिनामभिव्यञ्जन्तीति। पश्चिमस्त्विति। सर्वान्तिम इत्यर्थः। पुरस्तनध्वनिनिबन्धनाव्यक्तपरिच्छेदप्रभावितसकलभावनाबीजसहकारीति। पुरस्तना ध्वनयो निबन्धनानि येषां ते पुरस्तनध्वनिनिबन्धनाः। तादृशैरव्यक्तपरिच्छेदैः प्रभावितानि सकलानि यनि भावनाबीजानि तानि सहकारीणि कारणानि यस्येति बहुव्रीहिः। स्फुटतरविनिविष्टस्फोटबिम्बमिवेति। स्फुटतरतया विनिविष्टः स्फोटात्मा बिम्बो यस्मिन् स तथोक्तः। स्फोटस्य बिम्बस्य प्रतिबिम्बरूपा वर्णा इति दर्शयितुं बिम्बग्रहणम्। इवशब्देन विनिवेशस्यौपचारिकत्वं दर्शयति। यथा किल मुखादेर्बिम्बस्य विवर्ताः कृपाणादिगता दृश्यन्ते, एवमेकस्य स्फोटात्मानो विवर्ता वर्णा इति भावः। प्रत्ययं प्रत्यक्षज्ञानम्।

---

१. व्यक्ततर. मूलम्. २. Omitted प्र. मूलम्.

तैरमुद्भावयन्ति ; यथा रत्नपरीक्षिणः परीक्षमाणस्य प्रथमसमधिगमा[1]नुपाख्यातमनुपाख्येयरूपप्रत्ययोपाहितसंस्काररूपा[3]हितविशेषायां बुद्धौ क्रमेण चरमे चेतसि चकास्ति रत्नतत्त्वम् ; न ह्यन्यथा स्फुटप्रकाश

---

अतिव्यक्ततरमिति । विषयाभिव्यक्तिद्वारिका ज्ञानस्याभिव्यक्ततेति । उद्भावयतीति पूर्ववत् । अनुपाख्येयमुपाख्यातुमशक्यमव्यक्तं ज्ञानं यत्, या च तस्य ज्ञानस्य जन्या भावना तयोः क्रमादितरेतरं पौर्वापर्यात् पूर्वे ध्वनयः प्रकाशका इति श्लोकशेषयोजना । एतच्चान्यत्र दृष्टमेवेत्याह—यथेति । रत्नपरीक्षिण इति । रत्नपरीक्षाशीलशालिनो विपणिवर्तिनो वणिग्वरस्येत्यर्थः । परीक्षमाणस्येति । रत्नानीति सिध्यति । प्रथमसमधिगमानुपाख्यातमिति । प्रथमेन समधिगमेन विज्ञानेनानुपाख्यातमव्यक्तम् । प्रथमसमधिगमादनुपाख्यातमिति व्यासेन क्वचित्पाठः । एतच्च रत्नतत्त्वविशेषणम् । अनुपाख्येयरूपप्रत्ययोपाहितसंस्काररूपाहितविशेषायां बुद्धाविति । अनुपाख्येयरूपैः प्रत्ययैः उपाहितानि यानि संस्कारात्मकानि प्रत्ययानामेव सूक्ष्मरूपाणि तैराहितो विशेषो यस्यां तस्यां बुद्धौ मनस्यन्तःकरण इत्यर्थः । क्वचित्पाठः अनुपाख्येयरूपप्रत्ययोपाहितसंस्कारविशेषायामिति । तत्र संस्कारस्य तज्जन्यस्य चातिशयस्य भेदमविवक्षित्वा संस्कार एव विशेष इत्युक्तमिति वेदितव्यम् । क्रमेण परम्परया । चरमे चेतसि अन्त्यध्वनिजनिते विज्ञाने । चकास्ति प्रकाशते । रत्नतत्त्वं रत्नस्य पारमार्थिकं रूपम् । बुद्धिरित्यन्तःकरणं साङ्ख्या मन्यन्ते, तद्धर्मं च संस्कारम् । चेतःशब्दोऽप्यत्र ज्ञानमात्रवचनो विवक्षितः, न ज्ञानकरणवचनः । ननु प्रथमप्रत्ययैः संस्काराधान एव किं प्रमाणमत आह—न ह्यन्यथा स्फुटप्रकाश उपपद्यते पुर इव पश्चादपीति । यदि प्रथमज्ञानैः

---

१. तरपरिच्छेद . मूलम् । ३. Omitted रूपाहित. मूलम्.

२. गमादनु. मूलम्.

उपपद्यते पुर इव पश्चादपि, विशेषाभावात् । तदिदमुक्तम्—

"यथानुवाकः श्लोको वा सोढत्वमुपगच्छति ।
आवृत्त्या न तु स ग्रन्थः प्रत्यावृत्ति निरूप्यते ॥
प्रत्ययैरनुपाख्येयैर्ग्रहणानुगुणैस्तथा ।
ध्वनिप्राकशिते शब्दे स्वरूपमवधार्यते ॥
नादैराहितबीजायामन्त्येन ध्वनिना सह ।
आवृत्तपरिपाकायां बुद्धौ शब्दोऽवधार्यते ॥"

---

संस्काराधानं न कृतं स्यात्, तदा पुर इव पूर्वज्ञानेष्विव पश्चादप्यन्त्यज्ञानेऽपि स्फुटप्रकाशो नोपपद्यते यत इति । कुत इत्यपेक्षायामाह—विशेषाभावादिति । न हि तदान्त्यज्ञानस्य पूर्वज्ञानेभ्यः कश्चिद्विशेषोऽस्तीति । एतच्च दृष्टान्तदार्ष्टान्तिकयोः साधारण्येनोक्तमिति वेदितव्यम् । अनेन च 'प्रत्येकमनुपाख्येये' इति हेतुः साधितो वेदितव्यः । तदिदमुक्तमिति । हरिभिरिति सिध्यति । यथेति उत्तरश्लोकगतेन तथाशब्देन सम्बन्धः । अनुवाकः श्लोको वेति । अनुवाको वैदिकः, श्लोकस्तु लौकिकः । सोढत्वं जितत्वं वशतामिति यावत् । आवृत्त्योपगच्छतीत्यन्वयः । न तु स ग्रन्थः अनुवाकः श्लोको वा प्रत्यावृत्ति निरूप्यते स्वरूपतो ज्ञायते । यथैतत्तथा प्रत्ययैरनुपाख्येयैः पूर्वध्वनिजनितैरन्त्यध्वनिजन्यव्यक्तग्रहणानुगुणैः स्वजन्यसंस्कारद्वारा करणभूतैः ध्वनिप्रकाशितेऽन्त्यध्वनिना प्रकाशिते शब्दे स्वरूपमवधार्यते स्वं रूपं स्वाभाविकं रूपमवधार्यते निश्चीयते । एतदेव विवृणोति—नादैर्ध्वनिभिराहितबीजायाम् आहितं भावनाबीजं यस्यां सा तथोक्ता । आवृत्तपरिपाकायामिति । आवृत्तोऽभ्यस्तः परिपाको यस्याः सा तथोक्ता । प्रथमेन ध्वनिना किञ्चिद्भावनाबीजमाहितं तेन च कश्चित्परिपाकः

---

१. आवृत्ति. मूलम् .

**अनुपाख्येयाकारस्फोटोपलब्धिजन्मानश्च संस्कारास्तत्रैव स्फुटतरपरिच्छेदां धियमुत्पादयन्तीति न वर्णवादिन इवार्थविषये नानात्वदोषः ॥**

कार्यजननशक्तिविशेषः ; एवं द्वितीयेनेति । यद्यपि परिपाका भिन्नाः , तथापि जातिमाश्रित्यावृत्तवाचोयुक्तिः अष्टकृत्वो ब्राह्मणा भुक्तवन्त इतिवत् । आवृत्ते-स्त्वस्यान्या व्याख्या—आवृत्तोऽवधारणविघ्नभूतस्य रागादिकषायस्य परिपाकः परिपाचनं यस्यामिति । आवृत्तेन वावृत्त्या कषायपरिपाको यस्यामिति । क्वचित्त्वावृत्तीति पाठः । बुद्धावन्तःकरणे शब्दोऽवधार्यतेऽन्त्येन ध्वनिना सह ; यदान्त्यो ध्वनिरवधार्यते, तदा 'गौः' इत्येवंशब्दोऽप्यवधार्यत इत्यर्थः । अवधारणापरपर्यायं ज्ञानमपि बुद्ध्याख्यान्तःकरणाधिकरणमिति साङ्ख्या मन्यन्ते । एतच्चावधारणं चित्राबुद्धिरिति वार्तिककारीया मन्यन्ते । अथवा अन्त्येन ध्वनिना सह पूर्वनादैराहितबीजायां बुद्धौ पश्चिमध्वन्यनन्तरं शब्दोऽ-वधार्यते 'गौः' इत्येकं पदम्—इति यदवधारणं समस्तवर्णविषयं स्मरण-मित्याचक्षते । परमार्थतस्तु प्रत्यक्षज्ञानमेवैतत् , ध्वनिसंस्कृतश्रोत्रेन्द्रिय-जनितत्वात् ; न ह्यन्यथा स्फुटप्रकाश उपपद्यत इत्यत्राप्यनुसन्धातव्यम् । 'संस्काराः खलु यद्वस्तुरूपप्रख्याप्रभाविताः' इति पर्यनुयोगस्य तुल्यत्वं परिहरन्नाह—अनुपाख्येयाकारस्फोटोपलब्धिजन्मानश्चेति । अनुपाख्येयाका-राभ्यः प्राक्तनीभ्यः स्फोटोपलब्धिभ्यो जन्म येषामिति विग्रहः । संस्कारास्तत्रैवेति । स्फोट एवेत्यर्थः । स्फुटतरपरिच्छेदामिति । स्फुटतरो विषय-परिच्छेदो यस्याः कार्यतयास्ति सा तथोक्ता । धियमुत्पादयन्तीति हेतोः । न वर्णवादिन इवार्थविषये नानात्वदोषः यथा वर्णवादिनो वर्णज्ञानजन्मानः संस्कारा अर्थविषयां धियं कुर्वन्तीति अर्थविषये नानात्वदोषो भवति, एवं स्फोटवादिनोऽपि नानुपाख्येयज्ञानजन्मनां संस्काराणां स्पष्टोपलब्धिजनकत्वे विषयनानात्वदोषोऽस्तीत्यर्थः । एतच्चोत्तरचोद्योत्थानायापीति द्रष्टव्यम् ॥

इति स्फोटसिद्धिव्याख्यायामष्टादशः श्लोकः

---

१. उपदधति. मूलम्. २.- विषयनानात्व. मूलम्.

**ननु शब्दान्तराण्येव वर्णाः प्राक्प्रकाशन्ते, न पदरूपमव्यक्तं व्यक्तं वा । न च तदेव तिरोहितात्मरूपं शब्दान्तरात्मना प्रकाशत इति साम्प्रतम् ; कथमन्यप्रकाशेऽन्यः प्रकाशेत, अतिप्रसङ्गात् ?**

---

अत्र परः प्रत्यवतिष्ठते, **ननु शब्दान्तराण्येव...भवति इति** । अयमर्थः—प्रागेकैकाक्षरविज्ञाने स्फोटात्मनः शब्दाच्छब्दान्तराण्येव वर्णाः प्रकाशन्ते, न पुनः स्फोटात्मकं पदरूपं पूर्वध्वनिष्वव्यक्तम्, अन्तिमे वा ध्वनौ व्यक्तं प्रकाशत इति विपरिणम्यानुषङ्गः । वर्णाकारानुविद्धबोधान्निरवयवपदाकाराप्रकाशाच्च । ननु यथा शुक्तिरेव तिरोहितात्मरूपा रजतात्मना प्रकाशते, एवं तदेव निरवयवं पदमविद्यातिरोहितात्मरूपं वर्णान्तरशब्दान्तरात्मना प्रकाशत इति शङ्कामपाकुर्वन्नाह—न च तदेव तिरोहितात्मरूपं शब्दान्तरात्मना प्रकाशत इति साम्प्रतमिति । कारणमाह—कथमन्यप्रकाशेऽन्यः प्रकाशेत, अतिप्रसङ्गादिति । अनेन 'इदं रजतम्' इत्यत्रापि न शुक्तिका विषय इति विवक्षितः, अन्याकारायाः संविदोऽन्यविषयत्वायोगात्; तद्योगे ह्यतिप्रसङ्गः स्यात् ; विषयत्वानियमाद्धि सर्वं विज्ञानं सर्वविषयं स्यादित्ययत्नसिद्धा सर्वसर्वज्ञाता स्यात्; सा च प्रमाणविरुद्धा । तस्माद्यदाकारं विज्ञानम् , स एवास्य विषय एषितव्यो नियमाय । रजताकारं चेदमिति तदेवास्य विषयः; न शुक्तिः, अवेदनात् । एवं च शब्दान्तराण्येव वर्णाः 'गौः' इति ज्ञानस्य विषयः, न स्फोटात्मेति सिद्धम् । अतिप्रसङ्गादित्यस्यान्या व्याख्या—यदि ह्यन्यप्रकाशेऽन्यः प्रकाशेत, ततः संविदः स्वार्थव्यभिचारात् सर्वत्रैवानाश्वासप्रसङ्ग इति न प्रेक्षावान् क्वचित् कुतश्चिद्वा प्रवर्तेत निवर्तेत वेति । अन्यप्रकाशेऽन्यः प्रतीयेतेत्यनेन

---

१. Omitted इति सांप्रतम्. मूलम्.

**अन्याकारप्रकाशोपहितं च भावनाबीजं कथमन्याकारप्रकाशप्रादुर्भावनिमित्तं स्यात्? तथा च तुल्यो दोषः। विपर्यासकप्राशनं च निमित्ता-**

---

प्रतीतिविरोधोऽपि सूचितः। तदुक्तम्—

"ननु नो विपरीतार्था धीः प्रतीतिविरोधतः।
अनाश्वासाच्च रजतप्रत्ययो रजते स्मृतिः॥" इति।

दूषणान्तरमारमाह—अन्याकारप्रकाशोपहितं च भावनाबीजं कथमन्याकारप्रकाशप्रादुर्भावनिमित्तं स्यादिति। अन्याकारप्रकाशेन वर्णाकारप्रकाशेनोपहितं च भावनाबीजं कथं स्फोटाकारप्रकाशप्रादुर्भावनिमित्तं स्यात्? तथा च तुल्यो दोष इति। यद्यन्याकारप्रकाशोपहितं भावनाबीजमन्याकारप्रकाशप्रादुर्भावनिमित्तं भवेत्, तथा च सति पर्यनुयोगस्तुल्यः स्यात्; शक्यते हि वक्तुम्—

"संस्काराः खलु यद्वस्तुरूपप्रख्याप्रभाविताः।
विज्ञानहेतवस्तत्र ततोऽर्थे धीर्न कल्पते॥"

इतिवत् संस्काराः खलु यद्वस्तुरूपाकारप्रख्याप्रभाविताः, तदाकारामेव धियं ते प्रादुर्भावयन्तीति। एवं चास्फुटप्रकाशोपहितं भावनाबीजमस्फुटप्रकाशामेव धियमाविर्भावयेदिति। तथा चाहुः—"मोहाभ्यासो मोहमेव दृढयेत्" इति।

दूषणान्तरमाह—विपर्यासप्रकाशनं च निमित्तापेक्षम्, न च तदिहास्तीति। विपर्यासोऽन्यथात्वं तस्य प्रकाशनं च निमित्तापेक्षम्; विज्ञाने हेतूनां हि याथार्थ्यप्रकाशनं स्वभाविकम्, विपर्यासप्रकाशनं तु स्वव्यतिरिक्तनिमित्तापेक्षम्, स्वतः प्रामाण्यात् परतश्चाप्रामाण्यात्; न च तदिह किञ्चित्

पेक्षम्; न च तदिहास्ति । न नादाः, तेषां तत्त्वपरिच्छेदहेतुत्वात्; न हि यदेवास्योपलब्धिनिमित्तम्, तदेव विपर्यासनिमित्तं भवितुमर्हति; विपर्यासनिमित्तत्वे वा न ततस्तद्रूपोपलब्धिरित्यनभिव्यक्तिप्रसङ्गः ।

---

संभवतीति । अनेन कारणाभावेन कार्याभावो दर्शितः । ननु श्रोत्रं तत्त्वप्रकाशकम्, नादास्तु विपर्यासहेतव इत्यत आह—न नादा इति । विपर्यासनिमित्तमित्यनुषङ्गः । कारणमाह—तेषां तत्त्वपरिच्छेदहेतुत्वादिति । तेषां नादानां श्रोत्रसंस्कारद्वारेण शब्दतत्त्वपरिच्छेदं प्रत्येव हेतुत्वात् श्रोत्रमात्रस्य संस्काररहितस्याशब्दबोधकत्वस्थितेः । ननु—

"उपलम्भकमेवेष्टं विपर्यासस्य कारणम्" । इत्याहुः ।

सत्यम्, अयुक्तं तु तदित्याह—न हि यदेवास्योपलब्धिनिमित्तम्, तदेव विपर्यासनिमित्तं भवितुमर्हतीति । अस्य शब्दस्य उपलब्धिनिमित्तं तत्त्वोपलब्धिनिमित्तं तदेव न विपर्यासनिमित्तम् । विरोधादिति भावः । एवं वा वक्तव्यमित्याह—विपर्यासनिमित्तत्वे वा न ततस्तद्रूपोपलब्धिरित्यनभिव्यक्तिप्रसङ्ग इति । अग्रहो हि विपर्यासः; यद्यग्रहरूपविपर्यासनिमित्तत्वं ध्वनीनाम्, ततो न ध्वनिभ्यस्तद्रूपोपलब्धिः शब्दरूपोपलब्धिरित्यनभिव्यक्तिप्रसङ्गः शब्दस्येति । अथवा 'न नादाः' इति प्रतिज्ञाय तेषां तत्त्वपरिच्छेदहेतुत्वं वाश्रीयते विपर्यासहेतुत्वं वा? उभयहेतुत्वस्य विरोधादसम्भवादिति विकल्प्य आद्यकल्पदूषणम्—तेषामित्यादिना; द्वितीयकल्पदूषणम्—विपर्यासनिमित्तत्वे वेति । उभयत्रापि समुच्चयस्य विरोधादसम्भवादिति भावः ।

---

१. Added किञ्चन निमित्तम्. मूलम्. २. यस्य. मूलम्.

नियमानुपपत्तिश्च । न खलु रज्ज्वादिषु सर्पादिविपर्यासा नियोगतो भवन्ति । नियोगतस्तु वर्णग्रहणसरूपाः पदपरिच्छेदात् पूर्वं बुद्धयो जायन्ते । न च सर्वप्रतिपत्तॄणामेकरूपो विपर्यासो युक्तिमान् ; रज्ज्वां हि कश्चित् सर्प इति विपर्यस्यति कश्चिद्धारेति । न च विपर्यासे

---

दूषणान्तरामाह—नियमानुपपत्तिश्चेति । एतदेव व्याचष्टे—न खलु रज्ज्वादिषु सर्पादिविपर्यासा नियोगतो भवन्तीति । न खलु रज्जुतत्त्वज्ञानात्पूर्वं रज्ज्वादिष्वारोपविषयेषु सर्पादिविपर्यासाः सर्पधारादिविभ्रमाः नियोगतो नियमेन भवन्ति उत्पद्यन्त इति । अनेन नियतभावित्वाभावेनास्य व्यापकत्वं विपर्यासत्वस्य व्याप्यत्वं च दर्शितमिति वेदितव्यम् । इह पुनर्व्यापकविरुद्धोपलब्धिरस्तीत्याह—नियोगतस्तु वर्णग्रहणसरूपाः पदपरिच्छेदात्पूर्वं बुद्धयो जायन्त इति । नियमेन तु वर्णग्रहणसरूपाः वर्णग्रहणानुरूपाः पदपरिच्छेदाद्वर्णातिरिक्तपदपरिच्छेदात् पूर्वं बुद्धयो जायन्ते । वर्णात्मकपदपरिच्छेदात् पदमात्रपरिच्छेदाद्वा पूर्वं बुद्धयो जायमाना दृश्यन्त इति ।

व्याख्यानान्तरमाह—न च सर्वप्रतिपत्तॄणामेकरूपो विपर्यासो युक्तिमानिति । विपर्यासत्वमनियतरूपत्वेन व्याप्तम् ; अतोऽत्र नियतरूपत्वं दृश्यमानं स्वविरुद्धानियतरूपत्वेन व्याप्तं विपर्यासत्वमपि निवर्तयति । अनियतरूपत्वेन व्याप्तिमेव स्फोरयन्नाह—रज्ज्वां हि कश्चित्सर्प इति विपर्यस्यति कश्चिद्धारेतीति ।

तृतीयं व्याख्यानमाह—न च विपर्यासे क्रमनियमः । एतदेव व्यनक्ति—कदाचिद्धारेति विपर्यस्य सर्प इति विपर्यस्यति, कदाचिद्विपरीतमिति । सर्प इति विपर्यस्य धारेति विपर्यस्यतीति । एवं हेतुं प्रसाध्य साध्येन सम्बन्धयति—इह तु नियतभावी नियतक्रमो नियतरूपश्च विपर्यास इति किमत्र कारणमिति । न किमपि कारणमित्यर्थः । अतो नायं विपर्यास इति

**क्रमनियमः; कदाचित् 'धारा' इति विपर्यस्य 'सर्पः' इति विपर्यस्यति, कदाचिद्विपरीतम् । इह तु नियतभावी नियतक्रमो नियतरूपश्च विपर्यास इति किमत्र कारणम्? विपर्यासत्वं च प्रत्ययविपर्यासाधीनम्; तदभावादिह कथ्यमानं बालोल्लापनायैव केवलं भवति ।**

---

भावः । दूषणान्तरमाह—विपर्यासत्वं च प्रत्ययविपर्यासाधीनम्; तदभावादिह कथ्यमानं बालोल्लापनायैव केवलं भवतीति । सर्वेषामेव च ज्ञानानां विपर्यासत्वं भ्रान्तित्वं प्रत्ययविपर्यासाधीनम्, पूर्वप्रत्ययस्य बाधकप्रत्ययेन यो विपर्यासोऽन्यथात्वं मिथ्यात्वमिति यावत्, तदधीनम् "यस्य च दुष्टं करणं यत्र च मिथ्येति प्रत्ययः" इति न्यायात्; तदभावात् प्रत्ययविपर्यासाभावात्; न हि देशान्तरे कालान्तरे पुरुषान्तरेऽवस्थान्तरे वा वर्णज्ञानं विपर्येति; इह वर्णविषये कथ्यमानं बालोल्लापनायैव केवलं भवति । यदि स्वयं कथ्यमानमेतदन्येनाप्युल्लापयितुं वाञ्छा तदा बालेनोल्लापनायैव केवलं भवति प्रभवति । तथैव वा पाठः । न प्राज्ञोल्लापनायैव भवति; न हि प्राज्ञ एतदनुमन्यते अङ्कुरमिवाबीजजन्मानमिति । अथवा अत्यन्तबालानामुल्लापनाय मुखाच्छब्दोद्भावनाय केवलं भवति । मात्रादयो हि निरर्थकमेव वचनं बालोल्लापनाय कथयन्ति तादृगेतत्त्वदीयं वचनम्, प्रयोजनान्तराभावात् । अथ वा बालानामुल्लापो बालोल्लापः, बालोल्लापशब्दाच्च "तत्करोति तदाचष्टे" इति णिचमुत्पाद्य भावे च ल्युडुत्पत्तिः कर्तव्या; बालोल्लापनाय बालोन्मत्तादीनामीदृश उल्लाप इति दर्शनाय केवलं भवति, प्रयोजनान्तराभावात् । अथवा काका वर्णनमुल्लापः; यथा बालान् प्रति बुद्धिपरीक्षार्थमन्यथास्थितमर्थमन्यथास्थितेन शब्देन काका वर्णयन्ति यथा स्खलने 'गमनपटुरसि' इति, एवमभ्रान्तमेव वर्णविज्ञानं भ्रान्तमिव काका कथयसि बालान् प्रत्युल्लाप ईदृश इति प्रदर्शनायेति । पूर्ववच्च णिजुत्पत्तिः ल्युडन्तता च द्रष्टव्येति ।

उच्यते—

आरूपालोचितेऽप्यस्ति ह्यन्यथात्वप्रकाशनम् ।
तत्संस्कारक्रमाच्चापि व्यक्तं तत्त्वं प्रकाशते ॥ १९ ॥

दृष्टमिदमारूपालोचिताः पदार्थाः क्वचिदन्यथा प्रकाशन्ते यथा दूराद्वनस्पतयो हस्त्यादिरूपप्रख्यानाः, बहुतरालोकाच्च देशान्मन्दतरालोक-गर्भगृहादिषु प्रविष्टस्य रज्ज्वादिषु व्यक्तमप्रकाशमानेषु सर्पाद्याकारप्रकाशो-

परिहरति उच्यते........प्रवर्तते इति । अस्यार्थः—अत्र परिहार उत्तरश्लोक इति दर्शितमुच्यत इति । आरूपालोचितेष्वित्येकोनविंशः श्लोकः । 'कथमन्यप्रकाशेऽन्यः प्रकाशेत' इत्यस्य प्रतिक्षेपः पूर्वार्धेन क्रियते, 'अन्याकारप्रकाशोपहितं च भावनाबीज कथम्' इत्यस्य प्रतिक्षेप उत्तरार्धेनेति द्रष्टव्यम् । एतदेवोदाहरणेन प्रतिपादयन्नाह—दृष्टमिदमिति । श्लोकोक्तार्थद्वयमित्यर्थः । एतदेव विवृणोति—आरूपालोचिताः पदार्थाः क्वचिदन्यथा प्रकाशन्त इति । आरूपमव्यक्तरूपम् । अव्यक्तरूपेणालोचिताः प्रत्यक्षज्ञानगृहीता इत्यर्थः । पदार्था इति विशेष्यप्रदर्शनम् । क्वचिदिति देशे कालेऽवस्थायां वेति । अन्यथेति थाप्रत्ययः स्वार्थिक इति दर्शयति । प्रकाशन्त इति । अनेन च प्रकाशनं प्रकाश एवेति दर्शयति । यथेत्युदाहरणे । दूरादिति । दूरदेशात् पश्यतामिति । वनस्पतयो हस्त्यादिरूपप्रख्याना इति । हस्त्यादिरूपेण प्रख्यानं येष्विति विग्रहः । बहुतरालोकाच्च देशान्मन्दतरालोकगर्भगृहादिषु प्रविष्टस्य रज्ज्वादिषु व्यक्तमप्रकाशमानेषु सर्पाद्याकारप्रकाशोदय इति । सुगमो ग्रन्थः । नन्वेवमादिषु वनस्पतयो न प्रकाशन्ते, न च रज्ज्वादयः; किन्तु हस्त्यादयः सर्पादयश्च । तथा हि—'इदं रजतम्' इत्यादिषु 'रजतम्' इत्यव-

१. मन्दालोकगर्भगृहादीन्. मूलम्.

दयः । न च तेषां न प्रथनमिति साम्प्रतम्, इन्द्रियस्य तत्सन्निकर्षात्; न ह्यन्यसन्निकर्षोऽन्यज्ञानहेतुः; असन्निकर्षजत्वे वा तदपेक्षा न स्यात्; तस्मात् पूर्वदर्शनान्येव यथोत्तरोत्कर्षेण संस्कारमदधति व्यक्तवृक्षादिप्रति-

---

र्तमानरजतोपलब्धिः । न हि 'इदं रजतम्' इति मतिः पुरोवर्तिनीं शुक्तिमवलम्बमाना रजताकारोदीयत इति साम्प्रतम्, अन्याकारायाः संविदोऽन्यविषयत्वायोगादतिप्रसङ्गादनाश्वासाच्च । न च 'इदं रजतम्' इति सामानाधिकरण्यप्रथेयम्, अपि तु असामानाधिकरण्याग्रहो दोषवशात् । न च स्मृतिः, साक्षात्कारास्पदत्वात् । न च नास्ति, स्वसंवेदनसिद्धत्वात् । तदस्य क्लृप्तसामर्थ्यं चक्षुर्वा मनो वा कारणमकामेनाप्यभ्युपगन्तव्यम् । ततो न हस्त्यादिग्रहणस्य वनस्पत्यादिविषयतेत्येतां शङ्कामपाकुर्वन्नाह—न च तेषां न प्रथनमिति साम्प्रतमिति । शुक्तिवनस्पतिरज्ज्वादीनामित्यर्थः । कारणमाह—इन्द्रियस्य तत्सन्निकर्षादिति । तैर्वनस्पत्यादिभिः सन्निकर्षादिति । एतदेव विवृणोति—न ह्यन्यसन्निकर्षोऽन्यज्ञानहेतुरिति । न हि वनस्पतिभिरिन्द्रियसन्निकर्षो हस्त्यादिज्ञानहेतुरिति संभवति, अतिप्रसङ्गादिति । नन्वसन्निकृष्टमेवेन्द्रियं हस्त्यादीन् प्रकाशयतीति चेत् अत आह—असन्निकर्षजत्वे वा तदपेक्षा न स्यात् । यद्यसन्निकृष्टमेव रजतं चक्षुः प्रकाशयति, कुतस्तर्हि चक्षुषः शुक्तिकासन्निकर्षापेक्षेति । अयमभिसन्धिः—न तावच्चक्षुरादिवद्रजतविज्ञानं कारणतामात्रेणापेक्षते शुक्तिशकलम् । चक्षुराद्यभाव इव तदभावेनान्यत्र रजतसन्निधावपि रजतविज्ञानाभावप्रसङ्गात् । तस्माद्विषयतयैवापेक्षते रजतविज्ञानं शुक्तिशकलेनेन्द्रियसन्निकर्षमित्यापतति । यथोक्तमन्यत्र "वर्तमाने शुक्तिशकले चायमवर्तमानरजतावभासो नायमवर्तमाने रजते वर्तमानावभासः" इति । कुतश्च 'नेदं रजतम्' इत्यप्रसक्तस्य रजतस्य प्रतिषेधोपपत्तिः? अङ्गुलिनिर्देशेन शुक्तिशकलमेव हि रजत-

---

१. वृक्षव्यक्तादि. मूलम्.

पत्तिनिमित्तं भवन्ति । अन्यथा प्रथमदर्शनेऽपि स्यात्, तद्देशावस्थितानामेव च प्रणिधानाभ्यासक्रमेण भावान्न दूरत्वादलब्धजन्मा सामीप्यादुदेतीति

---

तया प्रतिषेधन्ति प्रतिपत्तारः ; तत्र रजतं प्रसञ्जितं पूर्वविज्ञानेनेति गम्यते । न च विवेकाग्रहणेन तत्प्रसञ्जितं जीवत्यविवेकाग्रहे परिपन्थिनि । तस्माद्विपरीतग्रहेणैव तत्प्रसञ्जितं कल्पते नान्यथा । न च पुरोवर्तित्वमनेनातीते प्रसञ्जितम्, इदन्तया तस्य प्रतिषेधासम्भवात्। एतच्च सर्वं विधिविवेके "अर्थापेक्षा मुधा तुल्यम्" इत्यत्र द्रष्टव्यम् । एवमारूपालोचितविषयत्वमन्यथाप्रकाशनस्य पूर्वार्धोक्तं प्रतिपाद्य तद्धेतूकत्योत्तरार्धमनुसन्धत्ते—तस्मादिति । यतो हस्त्यादिज्ञानस्य वनस्पतिविषयत्वं तत इत्यर्थः । पूर्वदर्शनान्येवेति । यानि पूर्वाणि दर्शनानि हस्त्याद्याकाराणि वनस्पत्यादिविषयाणि तानीति । एवकारेण कारणान्तरनिरासः । यथोत्तरोत्कर्षेण संस्कारमादधतीति । यादृश उत्कर्षः प्रथमदर्शनेनाहितः, द्वितीयजन्य उत्कर्षस्ततोऽतिशयितः; एवं तृतीयजन्यस्ततोऽपीति । अनेन च तत्संस्कारक्रमादिति व्याख्यातम् । तेषां पूर्वेषामन्यथाज्ञानानां जन्या ये संस्काराः तत्क्रमादिति । क्रमः पौर्वापर्यम् । अनेन च यथोत्तरमुत्कर्षोऽपि विवक्षित इति । व्यक्तवृक्षादिप्रतिपत्तिनिमित्तं भवन्तीति । व्यक्तस्य वृक्षादेर्या प्रतिपत्तिः तन्निमित्तं भवन्तीति। अथवा व्यक्ता वृक्षादिप्रतिपत्तिर्या तन्निमित्तमिति । अनेन च 'व्यक्तं तत्त्वं प्रकाशते' इति व्याख्यातम् । व्यक्तमिति तत्त्वविशेषणं क्रियाविशेषणं वा, तत्त्वं तस्य भावः तत्त्वं आरूपालोचितानां पारमार्थिकमित्यर्थः । नन्वन्तिममेव ज्ञानं व्यक्तवृक्षादिप्रतिपत्तिनिमित्तम् ; पूर्वेषां संस्कारद्वारा तन्निमित्तत्वे को हेतुः ? अत आह—अन्यथा प्रथमदर्शनेऽपि स्यादिति । यदि पूर्वजन्यसंस्कारापेक्षा न स्यात्ततः प्रथमदर्शनेऽपि व्यक्तवृक्षादिप्रपिपत्तिः स्यात् प्रसजेत्, सर्वान्तिमवत्

---

Added. सा मूलम्.

युक्तम् ; प्रकृतिस्थेन्द्रिया अपि बहिर्वस्त्वन्तरदर्शनादन्यथा प्रतिपद्य यथावदुपलभन्ते ; तन्नेन्द्रियदोषात् प्रागप्रतिपत्तिः । स्वरूपमात्रख्याताविन्द्रियाधीनायां वृक्षादिषु सादृश्यनिमित्तं मानसं स्मरणमिति चेत् ,

---

सर्वपूर्वस्यापि तद्विषयत्वाविशेषात् । ननु दूरत्वादलब्धजन्मा व्यक्तवृक्षादिप्रतिपत्तिः सामीप्यादन्तिमे विज्ञाने जायते, न तु पूर्वविज्ञानजनितसंस्कारविरहात् तत्साहित्याद्वेत्यत आह—तद्देशावस्थितानामेव च प्रणिधानाभ्यासक्रमेण भावान्न दूरत्वादलब्धजन्मा सामीप्यादुदेतीति युक्तमिति । यद्देशावस्थिता भ्राम्यन्ति तद्देशावस्थितानामेव प्रतिपत्तॄणां तेषामन्येषां वा प्रणिधानाभ्यासक्रमेण प्रणिधानस्य योऽभ्यासस्तत्क्रमेण, अथवा प्रणिधानेन यो ज्ञानाभ्यासः तत्क्रमेण व्यक्तवृक्षादिप्रतिपत्तेर्भावान्न दूरत्वमात्रात् सा न जायते, किन्तु पूर्वज्ञानजनितसंस्कारविरहादेव; अतोऽन्वयव्यतिरेकाभ्यां तत्संस्कारस्य कारणत्वं निर्श्चीयत इति । नन्विन्द्रियदोषात्प्रा( गप्रतिपत्तिः, ) व्यक्तवृक्षप्रतिपत्तिः पश्चात्तु प्रकृतिस्थेन्द्रियाणां जायत इति चेदत आह—प्रकृतिस्थेन्द्रिया अपि बहिर्वस्त्वन्तरदर्शनादन्यथा प्रतिपद्य यथावदुपलभन्ते, तन्नेन्द्रियदोषात्प्रागप्रतिपत्तिः । प्रकृतिस्थेन्द्रिया अपि पुरुषा अन्यथा प्रतिपद्य पूर्वं पश्चाद्यथावदुपलभन्त इत्यन्वयः । प्रकृतिस्थेन्द्रियत्वं कुतोऽवगतमिति चेदत उक्तम्—बहिर्वस्त्वन्तरदर्शनादिति । वनस्पत्यादिभ्यो हि भिन्नानि यानि वस्त्वन्तराणि तेषां सम्यग्दर्शनात् नेन्द्रियस्य विकृतिः काचिदुन्नीयते । ततः किमित्याह—तन्नेन्द्रियदोषात्प्रागप्रतिपत्तिरिति । किन्तु पूर्वज्ञानजनितसंस्काराभावादेव व्यक्तवृक्षाद्यप्रतिपत्तिरिति । अत्र चोदयति—स्वरूपमात्रख्याताविन्द्रियाधीनायां वृक्षादिषु सादृश्यनिमित्तं मानसं स्मरणमिति चेदिति । वस्तुस्वरूपमात्रं वृक्षहस्त्यादिसदृशमिन्द्रियेणानुभूयते । यादृशस्य रूपस्य ग्रहणे स्मर्यमाणाद्विवेको जयते, तस्य मात्रशब्देन व्यावृत्तिः; तेनेन्द्रियात्सम्यक्प्रतिपत्ति-

शब्दान्तरेष्वपि भागाभिमतेषु तथास्तु । तदुक्तम्—

"यथैव दर्शनैः पूर्वैर्दूरात् सन्तमसेऽपि वा ।
अन्यथाकृत्य विषयमन्यथैवाध्यवस्यति ॥

व्यज्यमाने तथा वाक्ये वाक्याभिव्यक्तिहेतुभिः ।
भागावग्रहरूपेण पूर्वं बुद्धिः प्रवर्तते ॥"

---

रेवेत्यर्थः । न च हस्त्यादिरूपदर्शनान्यपि चक्षुरिन्द्रियप्रसूतानीति मन्तव्यम्, तेषां केवलमनोजन्यस्मरणरूपत्वात्; स्मरणे च सादृश्यं निमित्तमिति । अतः 'इदं रजतम्' इति ग्रहणस्मरणात्मके द्वे विज्ञाने, तयोश्च विवेकाग्रहो निरन्तरभानं वा प्रवृत्तिहेतुः, विवेकज्ञानं च बाधकत्वान्निवृत्तिहेतुरिति । एतच्चान्यत्रोपन्यस्तम्—

"ननु नो विपरीतार्था धीः प्रतीतिविरोधतः ।
अनाश्वासाच्च रजतप्रत्ययो रजते स्मृतिः ॥" इति ।

अतोऽन्यथाप्रकाशनमेवासिद्धमिति कुतस्तत्संस्कारपरम्परया व्यक्ततत्त्वावबोधसम्भव इति । परिहरति—शब्दान्तरेष्वपि भागाभिमतेषु तथास्त्विति । निरवयवशब्दस्वरूपमात्रख्यातावि‌न्द्रियाधीनायां शब्दान्तरेष्वपि तद्भागाभिमतेषु वर्णेषु पदेषु वा तथा सादृश्यनिमित्तं स्मरणमस्तु ; विवेकाग्रहो निरन्तरभानं वा प्रवृत्तिहेतुरस्तु; न पुनर्वर्णस्वरूपख्याताविन्द्रियाधीनायामेकशब्दस्मरणमिति सर्वथा तत्संस्कारक्रमाद्व्यक्तं तत्त्वं प्रकाशत इत्यत्र नस्तात्पर्यम् । अख्यातिवादिनोऽपि मिथ्यात्वमस्त्येव ; तच्च संस्कारजनकम् ; "स एवासमीचीनप्रत्ययः" इति प्रत्ययस्य भ्रान्तित्वाभिधानात् । एतच्चान्यत्र—

"नैतन्न हि प्रवर्तेत शुक्तिकाशकले तदा ।
रजते सा प्रवृत्तिश्चेन्न तस्यासान्निधानतः ॥"

इत्यादिना दूषितम्; अभ्युपगम्यैवेदानीं प्रकृतमनुसन्धीयत इति दर्शितम्—अस्तु इति । एतच्च नास्मदुत्प्रेक्षामात्रं वृद्धैरेवाङ्गीकृतत्वादित्याह—तदुक्तमिति । यथैव दर्शनैः पूर्वैर्दूरादिति । एतद्व्याख्यातम् 'यथा दूराद्वनस्पतयः' इति । सन्तमसेऽपि वेति । अस्य व्याख्या 'बहुलतरा लोकाच्च' इति । अन्यथाकृत्य विषयमन्यथैवाध्यवस्यतीति । प्रथमं वृक्षरज्ज्वादिविषयं पूर्वदर्शनैरन्यथाकृत्य हस्त्यादिरूपेण गृहीत्वा पश्चादारोपितहस्त्यादिरूपादन्यथैव यः पारमार्थिक आकारस्तेन रूपेण व्यक्ततरमध्यवस्यति लौकिकः प्रतिपत्तेत्यर्थः । दार्ष्टान्तिके योजयति—व्यज्यमान इति । अभिव्यज्यमान इत्यर्थः । तथेति पूर्वश्लोकगतेन यथाशब्देनानुसन्धातव्यम् । वाक्य इति । स्फोटात्मनि वाक्य इत्यर्थः । वाक्याभिव्यक्तिहेतुभिरिति । वाक्यस्य नित्यसतोऽनभिव्यक्तस्य याभिव्यक्तिः तस्या हेतुभिर्ध्वनिभिरभिव्यज्यमाने इत्यन्वयः । किं पुनस्तस्मिन् भवति ? तदाह—भागावग्रहरूपेण पूर्वं बुद्धिः प्रवर्तत इति । तस्मिन् वाक्ये भागविषयावग्रहरूपेण भागविपर्यासरूपतया पूर्वं व्यक्तपरिच्छेदात पूर्वं बुद्धिः प्रवर्तते श्रोतृणाम्, पश्चाच्च व्यक्तरूपेत्यर्थः ॥

इति स्फोटसिद्धिव्याख्यायां

एकोनविंशः श्लोकः

ध्वनयः सदृशात्मानो विपर्यासस्य हेतवः ।
उपलम्भकमेवेष्टं विपर्यासस्य कारणम् ॥ २० ॥

यद्यपि वर्णपदवाक्यविषया भिन्नात्मानः प्रयत्ना मरुतश्च तदुदीरिताः

---

ध्वनयः·········व्यञ्जकत्वम् इति । ध्वनयः सदृशात्मान इति विंशः श्लोकः । 'विपर्यासप्रकाशनं च निमित्तापेक्षम्' इत्यादिनोक्तं दूषणमनेन परिह्रियते । 'न नादाः' इत्येतत्प्रतिक्षिपति—ध्वनयो विपर्यासस्य हेतव इति । नैतदेवम्—'प्रयत्नभेदतो भिन्ना ध्वनयोऽस्य प्रकाशकाः' इति, तेषां तत्त्वपरिच्छेदहेतुत्वस्योक्तत्वात् । अतो ध्वनयः प्रामाण्यहेतव आश्रीयन्तां विपर्यासहेतवः वा । न हि युगपदेकस्य प्रामाण्यमप्रामाण्यं च युज्यते । यथोक्तम्—"स्वतस्तावद्द्वयं नास्ति विरोधात्" इति । अतस्तत्त्वपरिच्छेदहेतुत्वाभ्युपगमे विपर्यासहेतुत्वानुपपत्तिः, विपर्यासहेतुत्वाभ्युपगमे वा तत्त्वपरिच्छेदासम्भवादनभिव्यक्तिरित्यत आह—सदृशात्मान इति । प्रमाजनकत्वं तु ध्वनीनां स्वाभाविकम्, विपर्यासहेतुत्वं तु सादृश्योपधानवशादिति न विरोधः । नन्वेवमपि कारणैक्यमपरिहार्यमत आह—उपलम्भकमेवेष्टमिति । सर्वभ्रान्तिसाधारणमेतदिति भावः । अथवा ध्वनयो विपर्यासहेतव इत्ययुक्तम् । 'प्रयत्नभेदतो भिन्नाः' इति ध्वनीनां ग्रहणहेतुत्वस्योक्तत्वात्, विपर्यासस्य चाग्रहणरूपत्वात् । अतो ग्रहणहेतुत्वाभ्युपगमे नाग्रहहेतुत्वम्, अग्रहरूपविपर्यासहेतुत्वे वा ग्रहणाभावेनानभिव्यक्तिप्रसङ्ग इत्यत आह—उपलम्भकमेवेष्टमिति । ग्रहणरूपो हि विपर्यासः, नाग्रहरूप इति भावः । सदृशात्मान इति वचनं यादृश्यामसादृश्यशङ्कायां तामाह—यद्यपीति । वर्णपदवाक्यविषया इति । वर्णः पदं वाक्यं च विषयो येषामिति विग्रहः । विषयत्वं चोद्देश्यतयेति भावः । भिन्नात्मानः प्रयत्ना इति । एतच्च 'प्रयत्नभेदतो भिन्नाः' इत्यत्र व्याख्यातम् ।

**स्थानाभिघातिनः स्थानाभिघातलब्धात्मानश्च ध्वनयः शब्दाभिव्यक्ति-हेतवः, तथापि स्थानकरणादिसाम्येन कथंचिल्लब्धसादृश्याः सङ्कीर्णा इव ;**

---

मरुतश्च तदुदीरिताः स्थानाभिघातिन इति । भिन्नात्मान इत्यनुषङ्गः । तच्छब्देन प्रयत्नपरामर्शः । स्थानाभिघातलब्धात्मानश्च ध्वनयः शब्दाभिव्यक्तिहेतव इति । अत्रापि भिन्नात्मान इत्यनुषज्यते । वर्णपदवाक्यविषया इति प्रयत्नभेदहेतुः । तदुदीरिता इति मरुद्भेदहेतुः । एवं स्थानाभिघातलब्धात्मत्वं शब्दाभिव्यक्तिहेतु[1]-ध्वनिभेदहेतुः । यथोक्तम्—"अभिघातेन हि प्रेरिता वायवः स्तिमितानि वाय्वन्तराणि प्रतिबाधमानाः सर्वतोदिक्कान् संयोगविभागानुत्पादयन्तो यावद्वेगमभिप्रतिष्ठन्ते" इति । ध्वनयश्च शब्दविशेषा एव नादापरपर्यायाः । यथोक्तम्—

"तद्धि वर्णत्वशब्दत्वपश्चाशद्व्यक्तिबन्धनम् ।
तथा ध्वनित्वतद्भेदमहाभूतगुणाश्रयम् ॥" इति ।

आकाशगुणो हि ध्वनिरिति प्रामाणिकाः । ध्वनिराकाशगुणः, अजातित्वे सति श्रावणत्वात् वर्णवत् इति । अतो नियतध्वनिव्यङ्ग्यानि वर्णपदवाक्यानि रूपरसादिवद्भिन्नान्येवोपलभ्येरन्, नेतरारोपसम्भवः । यथोक्तम्—'नियतनाद-निबन्धनव्यञ्जनाः' इति । अत्रोत्तरत्वेन सदृशात्मान इत्येतद्व्याचष्टे—तथापीति । स्थानकरणादिसाम्येनेति । कण्ठादीनि स्थानानि । संवृतादिः करणम् । यथा "तुल्यास्यप्रयत्नं सवर्णम्" इति वर्णानां स्थानकरणसाम्येन सादृश्यम्; एवं तद्व्यञ्ज-कानां नादानामपि तत एव सादृश्यमर्थोक्तं वेदितव्यम्, तुल्यन्यायत्वात् । आदिशब्दे-नावान्तरजातेरुपादानम्; यथा खल्वत्वादिर्वर्णावान्तरजातिरुपेयते, एवमकारादि-व्यञ्जकेषु ध्वनिभेदेषु ध्वनित्वावान्तरसामान्यसमवायोऽस्तीति । नन्वेवमपि ध्वनयः

---

१. Omitted हेतु. ग.

**तन्निबन्धनोऽयं शब्दान्तरेषु शब्दान्तरग्रहणाभिमानः ; उपलब्धिनिबन्धनमेव च विपर्यासस्य निमित्तम्, हेत्वन्तरानवसन्धानात् ; विपर्यासस्या-**

---

परस्परं विलक्षणा अपि तथा च यथा सादृश्यमेकबुद्धिमुत्पादयति, एवं वैलक्षण्यमपि भेदबुद्धिं जनयेत् ; वैलक्षण्यं च 'प्रयत्नभेदतो भिन्नाः' इत्यत्रोक्तम्। अत आह—कथंचिदिति। अनेनाविद्यामपि कारणत्वेनोरीकरोति। यथोक्तम्—"तस्मादनिर्वचनीया सर्वप्रवादिभिश्चेत्थमियमास्थेया" इति। लब्धसादृश्याः सङ्कीर्णा इवेति। अत्र ध्वनय इति विशेष्यं द्रष्टव्यम्। परमार्थतः सङ्कराभावादिवशब्दः। द्वितीयपादमनुसन्धत्ते—तन्निबन्धनोऽयं शब्दान्तरेषु शब्दान्तरग्रहणाभिमान इति। लब्धसादृश्यसङ्कीर्णवद्वर्तमानत्वनिबन्धन इत्यर्थः। स्फोटात्मसु शब्दान्तरेषु वर्णात्मकशब्दान्तरग्रहणाभिमान इति। तथा हि—अनेकवर्णके पदे एकाक्षरपदारोपः, यथा खलु 'अयम्' इति—अत्र ह्यच्युतवाचकापदसम्बुद्धिः यद्वृत्तामन्तश्चारोप्यते; तथा पदस्य वाक्ये समारोपः स्फुटः—'गामानय' 'अश्वमानय' 'गां बधान' इत्यादौ ; एवमेव सर्वाक्षराण्येव पदतया योज्यानि, प्रायेण सर्वेषां कस्यचिदर्थस्य वाचकत्वात् ; अन्ततः स्वरूपविवक्षया स्वरूपवाचकत्वादिति द्रष्टव्यम्। अत एवोक्तम् 'वर्णपदवाक्यविषयाः' इति। वर्णात्मकपदात्मकवाक्यात्मकस्फोटविषया इत्यर्थः। तथा स्फोटात्मकशब्दान्तरेषु स्फोटात्मकशब्दान्तरग्रहणाभिमानः। अनेनैतदपि परास्तं वेदितव्यम्—"आरोपविषयारोप्ये नाजानन् रजतभ्रमी" इति न्यायात्कथमज्ञातपूर्ववर्णस्य वर्णारोप इति। यथोक्तम्—"असतः कल्पना कीदृक्" इति, वर्णानामपि पदस्फोटत्वेन दृष्टत्वात्। अथवा शब्दान्तराण्येव स्फोटरूपाणि गृह्यन्ते ; ग्रहीता तु शब्दान्तरस्य स्फोटादन्यस्य ग्रहणमध्यवस्यति। यथा

---

१. अच्युतार्थकस्य अकारस्य सम्बोधनैकवचनं यच्छब्दस्य पुल्लिङ्गस्य द्वितीयैकवचनं चेति यावत्।

प्युपलब्धिरूपत्वात् अनुपलब्ध्युपयोगि कथं तत्रोपयुज्यते ? यथा विदूर - वर्तिवनस्पताविन्द्रियसन्निकर्ष एव विपर्यासस्य निमित्तम् ; उपलब्धेरपि

---

मणिकृपाणदर्पणादिषु पूर्वमदृष्टप्रतिबिम्बस्यापि बिम्बदर्शनादेव प्रतिबिम्बभ्रमः, एवमन्यत्र वर्णादर्शनेऽपि स्फोटदर्शनादेव वर्णभ्रम इति सूचितम्, अभिमानग्रहणात्। अख्यातिवादिनं प्रत्येषापि व्याख्या—परमार्थतः शब्दान्तराण्येव स्फोटात्मकानि गृह्यन्ते । यथा भवन्मते भावाग्रहणे भावग्रहणाभिमानः, आलोकादर्शने चान्धकारग्रहणाभिमानः, एवं स्फोटरूपस्य व्यक्तमग्रहणे शब्दान्तरग्रहणाभिमानो भवन्मतेऽस्त्विति । उत्तरार्धं व्याचष्टे—उपलब्धिनिबन्धनमेव च विपर्यासस्य निमित्तं हेत्वन्तरानवसन्धानादिति । यदेव तत्त्वोपलब्धौ निमित्तं तदेव विपर्यासस्य निमित्तमाश्रीयते । अतो यदेवास्योपलब्धिनिमित्तं तदेव विपर्यासस्य निमित्तं भवतुमर्हति, अन्यस्य हेतोस्तत्रानुपलम्भात्, तत्त्वपरिच्छेदवद्विपर्यासस्यापि कार्यस्य दृष्टत्वादिति। नन्वत्र वर्णानां स्मरणमेव, स्फोटस्य त्वग्रहणम्, दोषवशात्तूभयमपि पुष्कलं न जायते । यस्त्वत्राग्रहः स एव च विपर्यासः । एवं चैकस्य तत्त्वपरिच्छेदकत्वं विपर्यासहेतुत्वं च नाश्रयणीयम्, दोषस्य विपर्यासहेतुत्वात् ध्वनीनां च तत्त्वपरिच्छेदहेतुत्वात् । अतोऽन्यविषयज्ञानाहितं च भावनाबीजं कथमन्यविषयज्ञानमादध्यादिति तुल्यः पर्यनुयोग इत्यत आह—विपर्यासस्याप्युपलब्धिरूपत्वादनुपलब्ध्युपयोगि कथं तत्रोपयुज्यत इति । तत्त्वपरिच्छेदवद्विपर्यासोऽप्युपलब्धिरूप एव । यथोक्तमन्यत्र—

"एकान्तसत्त्वे का भ्रान्तिरसत्त्वे किं प्रकाशताम् ।
द्वयानुगुण्याद्वृद्धानां संमता ख्यातिरन्यथा ॥" इति ।

तस्मादनुपलब्ध्युपयोगि अनुपलब्धावेवोपयोगि उपलब्ध्युपयोगिनोऽन्यद्वा कारणं कथं ख्यातिरूपे विपर्यास उपयुज्यते ? अनेन चेदं दर्शितम्—नेदानी-

**स एव प्रणिधानाभ्यासप्रसूतवासनाक्रमेणेति यत्किञ्चिदेतत्— विपर्यास-निमित्तत्वे वानभिव्यञ्जकत्वमिति ॥**

---

मुपलम्भकरणविषय उपलम्भकशब्दः । किं तु तत्सहकारिविषय इति दोषा-ज्ञानोत्पत्तौ व्याप्रियन्ते , न ज्ञानविहतावित्यभिप्रायः । यथोक्तम्—

"कार्यातिरेको जठरे वह्नौ दुष्टे च भस्मके ।
रागाद्युपप्लुते चित्ते दृष्टा विस्मरणात्मनि ॥" इति ।

ननूक्तं न हि यदेवास्योपलब्धिनिमित्तं तदेव विपर्यासस्यापि निमित्तं भवितुमर्हतीति । तत्रोक्तम्—हेत्वन्तरानवसन्धानादिति । सत्यम्, तथापि कथं विरोध-परिहारः? अत आह—यथा विदूरवर्तिवनस्पताविन्द्रियसन्निकर्ष एव विपर्यासस्य निमित्तमिति । विदूरवर्तिनि वनस्पतौ चक्षुरिन्द्रियसन्निकर्ष एव हस्त्यादिविपर्या-सस्य निमित्तमिति । उपलब्धेरपि स एवेति । वनस्पतितत्त्वोपलब्धेरपि स एवे-न्द्रियसन्निकर्ष एव निमित्तमिति । प्रणिधानाभ्यासप्रसूतवासनाक्रमेणेति । प्रणिधानेन यो ज्ञानाभ्यासः तत्प्रसूतसंस्कारपरम्परयेति । अनेन चैतद्दर्शितम् । तत्त्वपरि-च्छेदविपर्यासयोर्जातेरैक्यम्, व्यक्त्योस्तु भेद एवेति न विरोधः । एतच्च पूर्वं साधितम्—'न च तेषां न प्रथनम्' इत्यादिना । तेनाह—यथेति । अनेन च प्रकारेणैतत्परिहृतमित्याह—इति यत्किञ्चिदेतदिति । इतिहेतो-र्निरुपपत्तिकमेतदित्यर्थः । एतच्छब्दनिर्दिष्टमेव दर्शयति—विपर्यासनिमित्तत्वे वानभिव्यञ्जकत्वमितीति । इतिः प्रकारार्थः ॥

इति स्फोटसिद्धिव्याख्यायां
विंशः श्लोकः

---

उपायत्वाच्च नियमः परदर्शितदर्शिनाम् ।
ज्ञानस्येव च वाचोऽयं लोके ध्रुव उपप्लवः ॥ २१ ॥

निमित्तमेवेदमीदृशं शब्दतत्त्वोपलब्धेर्यद्विपर्यासयदेव शब्दमुपलम्भयतीति, नियतसारूप्यत्वात् ; न हि शब्दान्तरविषयध्वनिविलक्षणा ध्वनयोऽन्ये तस्य व्यक्तौ नः सन्ति, येनाविपर्यासोऽवसीयेत ।

---

नियमानुपपत्तिश्चेत्येतत्परिहरति—**उपायत्वाच्च..........अभिधीयते**। अस्यार्थः—उपायत्वाच्चेत्येकविंशः श्लोकः । नियमानुपपत्तिरनेन परिह्रियते । सा च त्रेधा पूर्वं दर्शिता । तत्र विधात्रयेऽपि पूर्वार्धमुत्तरत्वेन व्याख्यास्यन् प्रथमां विधामधिकृत्य तावद्व्याचष्टे—**निमित्तमेवेदमीदृशं शब्दतत्त्वोपलब्धेः, यद्विपर्यासयदेव शब्दतत्त्वमुपलम्भयतीति** । 'प्रयत्नभेदतो भिन्नाः' इत्यत्रोक्तं इदं ध्वन्यात्मकं शब्दतत्त्वोपलब्धेर्निमित्तं यत् तदेव पुनरीदृशमित्यर्थः । कीदृशमित्यत उक्तम्—यद्विपर्यासयदेव शब्दतत्त्वमुपलम्भयतीति । एतन्निमित्तं प्रथमं विपर्यासयदेव अन्यथात्वेन ग्राहयदेव शब्दतत्त्वमुपलभ्यतीति यदित्यर्थः । विपर्यासयदिति शतृप्रत्ययेन हेतुत्वं वदता विपर्यासस्योपायत्वमनुग्राहकत्वं दर्शितम् । कारणमाह—**नियतसारूप्यत्वादिति** । नियतं सारूप्यं येषां ध्वनीनां तेषां भावो नियतसारूप्यत्वम्, तस्मादिति । नियतसारूप्यादिति पाठे नियतात्सारूप्यादिति विग्रहः । कारणनियमात्कार्यनियम इति भावः । एतदेव व्यतिरेकेण दर्शयति—**न हीति** । सन्तीत्यन्वयः । **शब्दान्तरविषयध्वनिविलक्षणा इति** । आरोप्यभूतं शब्दान्तरं विषयो येषां तेभ्यो ध्वनिभ्यो विलक्षणा इति । **ध्वनयोऽन्य इति** । य एते सदृशात्मानः तेभ्योऽन्ये केचनेति । **तस्य व्यक्तौ** तस्य शब्दतत्त्वस्य विपर्यासमन्तरेणाभिव्यक्तौ **नः सन्ति**, अस्माकमर्वाचीनानां विद्यन्ते । यदि ते सन्ति ततः किमत आह—**येनाविपर्यासोऽवसीयेत**। येन तादृशध्वन्य-

अत एव च तुल्यरूपः सर्वप्रतिपत्तॄणां विपर्यासः, तन्निमित्तस्य

---

स्तित्वेनाविपर्यासो विपर्यासाभावोऽवसीयेत । अथवा अविपर्यासः विपर्यासरहितः शब्दो ध्वनिभ्योऽवसीयेत । अविपर्यासे इति पाठे शब्दतत्त्वमिति विशेष्यम् । अनेन पूर्वश्लोकगतस्य विपर्यासस्येति पदस्यानुषङ्गो दर्शितः, विपर्यासस्य तत्त्वज्ञानोपायत्वात् तत्पूर्वभावित्वनियम इति । द्वितीयामपि नियमानुपपत्तिं परिहरति—अत एवेति । यत एव न शब्दान्तरविषयध्वनिविलक्षणा ध्वनयोऽन्ये व्यक्तौ नः सन्ति अत एवेत्यर्थः । तुल्यरूपः सर्वप्रतिपत्तॄणां विपर्यास इति । एतत् 'न च सर्वप्रतिपत्तॄणामेकरूपः' इत्यत्र व्याख्यातचरम् । का पुनः 'उपायत्वात्' इत्यस्यात्र व्याख्या, तामाह—तन्निमित्तस्य समानत्वादिति । एकस्य प्रतिपत्तुर्विपर्यासे यन्निमित्तं तस्यान्येष्वपि प्रतिपत्तृषु समानत्वादित्यर्थः । एवं च वदता पूर्वश्लोकाद्विपर्यासस्येतिवत् 'ध्वनयः सदृशात्मान.' इत्यस्यापि विपरिणम्यानुषङ्गो दर्शितः । सदृशात्मनां ध्वनीनां विपर्यासोपायत्वाद्विपर्यासस्यैकरूप्यनियम इति । अन्यत्रापि व्याचष्टे----क्रमनियमश्च नियतक्रमत्वादिति । क्रमनियमश्च 'न च विपर्यासे क्रमनियमः' इत्यत्रोक्तो द्रष्टव्यः । विपर्यासक्रमनियमश्चाभिव्यक्त्यङ्गमेवाङ्गीकृतम् । 'प्रत्येकमनुपाख्येयज्ञानतद्भावनाक्रमात्' इति विपर्यासक्रमविशेषस्याप्यभिव्यक्त्युपायत्वाद्विपर्यासस्य सम्बन्धी यः क्रमः तन्नियम इत्यनेन व्याख्यातम् । 'उपायत्वाच्च नियमः' इति वदतो दृष्टान्तोऽपि कश्चिद्विवक्षित एवेत्याह—यथा चेति । अविद्यमानात्मभूतसङ्ख्यान्तरज्ञानमिति । अविद्यमानस्तुच्छ आत्मा रूपं यस्य सङ्ख्यान्तरस्य तदविद्यमानात्मकं भूतमतीतं तेनाविद्यमानात्मनो भूतस्य सङ्ख्यान्तरस्य ज्ञानमिति विग्रहः । क्वचित्पाठः अविद्यमानानात्मभूतेति । तत्राविद्यमानस्यानात्मभूतस्य निर्जिज्ञासितसङ्ख्यायाः पृथग्भूतस्य सङ्ख्यान्तरस्य ज्ञानमिति विग्रहः । अथवा अविद्यमानस्यानात्मनो भूतस्य स्वस्मादन्यस्यातीतस्य च सङ्ख्यान्तरस्य ज्ञानमिति । अथवा नञ्रहितपाठेऽपि

समानत्वात् । क्रमनियमश्च नियतक्रमत्वात् । यथा चाविद्यमानात्मभूतसङ्ख्यान्तरज्ञानं सङ्ख्यान्तरप्रतिपत्तौ निमित्तं तदुपायत्वात्, तथेहापि शब्दान्तरपरिच्छेदः । न हि क्वचित्क्रियायां हि निर्जिज्ञासितसङ्ख्येषु

---

विद्यमानो ध्रियमाणः आत्मा स्वयं यो विद्यमानश्चात्मा च ततोऽन्यस्त्वविद्यमानात्मा इत्येवमविद्यमानत्वमनात्मत्वं च सिध्यत्येव । सङ्ख्यान्तरप्रतिपत्तौ निमित्तमिति । परस्य सङ्ख्यान्तरस्य प्रतिपत्तौ निमित्तं कारणमिति । तदुपायत्वादिति । सङ्ख्यान्तरप्रतिपत्तिं प्रति तस्यैव विद्यमानानात्मभूतसङ्ख्यान्तरज्ञानस्यैवोपायत्वादन्वयव्यतिरेकावधारितादिति । अथवा तत्र सङ्ख्यान्तरप्रतिपत्तौ उपायत्वादविद्यमानात्मभूतसङ्ख्यान्तरस्येति सिध्यति । अथवा स तादृश उपायो यस्येति बहुव्रीहिः । एवं च वदता निमित्तमेवेदमीदृशं सङ्ख्यान्तरप्रतिपत्तेः, यद्विपर्यासयदेव सङ्ख्यान्तरमुपलम्भयतीति तुल्यरूपः सर्वप्रतिपत्तॄणां विपर्यास इति च पूर्वोक्तनियमद्वयस्य दृष्टान्तवचनं कृतमिति द्रष्टव्यम् । ननु सङ्ख्यन्तरप्रतिपत्तौ निमित्तं तदुपायत्वादिति साध्याविशिष्टता हेतोः । मैवं वोचः । तदुपायत्वात्तस्यैवोपायत्वादित्युपायान्तरनिवृत्तेः विवक्षितत्वात् । क्वचित्पाठः सङ्ख्यान्तरप्रतिपत्तौ नियतमुपायत्वादिति । तत्रोपायत्वान्नियतमिति सम्बन्धः। तथेहापि शब्दान्तरपरिच्छेद इति । इहापि शब्दतत्त्वोपलम्भेऽपि शब्दान्तरपरिच्छेदो गकारादिपरिच्छेद उपायत्वान्नियत इति विपरिणम्यानुषङ्गः । पाठान्तरे निमित्त तदुपायत्वादिति । अविद्यमानत्वं पूर्वसङ्ख्यानामसिद्धमिति चेत् तत्राह—न हीति । क्वचित्क्रियायामिति । लौकिक्यां वैदिक्यां वा, 'शतं ब्राह्मणा भोजयितव्याः' 'शतं गावो दोग्धव्याः' इति । तथा "तं शतेन यातयात्" इति "द्वादशशतं दक्षिणा" इति च । निर्जिज्ञासितेष्विति । शतादिसङ्ख्यानिर्जिज्ञासा विवक्षिता । क्वचिच्च पाठो निर्जिज्ञासितसङ्ख्येष्विति । शतादिसङ्ख्यापरिच्छिन्नेषु वस्तुष्विति । आदिशब्देन सहस्रादेरुपादानम् । यथा—

शतादिसङ्ख्यापरिच्छिन्नेषु वस्तुषु पूर्वसङ्ख्यासम्भवः, सङ्ख्यायाः परिच्छेदरूपत्वात् , तस्य च तत्रासम्भवात् । यथै। चोत्पत्तौ क्षीरबीजादिकार्याणामानुपूर्वीनियमस्तथोपलब्धावपि । तस्मात्परोपदर्शित-

---

" गुरुं नेत्रसहस्रेण चोदयामास वासवः ।" इति

"अश्वसहस्रं दक्षिणा" इति च । पूर्वसङ्ख्यासम्भव इति । एकत्वमारभ्यो-पान्त्यावधीनां पूर्वासां सङ्ख्यानां सम्भव इति । कारणमाह—सङ्ख्यायाः परिच्छेदरूपत्वादिति । अपेक्षाबुद्ध्या यः परिच्छेदो जन्यते स एव सङ्ख्याभावे प्रत्ययः, सङ्ख्यानमित्यर्थः । न सप्तमः पदार्थः सङ्ख्या, नापि गुण इति केचिन्मन्यन्ते ; तन्मतेनेदमुक्तम्—परिच्छेदरूपत्वादिति । येषां च सङ्ख्यया परिच्छिद्यत इति सङ्ख्यापरिच्छेदयोर्भेदः, तेषामपि यावत्परिच्छेदभावित्वा-द्रूपत्वोपचारः । यथा हि रूपं मुक्त्वा रूपि न लक्ष्यते, तथा परिच्छेदं मुक्त्वा न सङ्ख्या । अपेक्षाबुद्ध्या हि सङ्ख्येयं परिच्छिन्दन्त्येव सङ्ख्योपजायते, तद्विनाशे च विनङ्क्ष्यतीति स्थितिः । अतः परिच्छेदात्मिकेत्युच्यते । ततः किमित्याह—तस्य च तत्रासम्भवादिति । तस्य परिच्छेदस्य तत्र पूर्वसङ्ख्यासु परसङ्ख्यायां निर्जिज्ञासितायामसम्भवात् ; एकपरिच्छेदवेलायामन्यपरिच्छेदा-सम्भवादिति भावः । अथवा तस्य परिच्छेदस्य तत्र परिच्छेद एवासम्भवात् परसङ्ख्यासु पूर्वसङ्ख्यासम्भवे परिच्छेदरूपत्वात् सङ्ख्यानां परिच्छेदे परिच्छेदो वक्तव्यः ; न च तत्संभवति ; परिच्छेदस्य ज्ञानत्वात् ; ज्ञानानां च क्रमवर्तित्वात् ; अन्यथैकक्षण एव सर्वज्ञानप्रसङ्गः ; तच्च प्रमाणविरुद्धमिति भावः । नियतक्रमत्वेऽपि दृष्टान्तमाह—यथैव चेति । उत्पत्तौ क्षीरबीजादिकार्याणामानुपूर्वीनियम इति सुगमो ग्रन्थः । तथोपलब्धावपीति । आनुपूर्व्यनियम इति सिध्यति । एवं प्रथमपादो व्याख्यातः । द्वितीयपादं व्याचष्टे—

शब्दतत्त्वग्राहिणामनन्योपायतया विपर्यासनियमः । अपरप्रदर्शितविषयास्तु परमर्षयः साक्षात्कृतधर्माणोऽव्याहतान्तःप्रकाशा विधूतविपर्यासक्रमं च वाक्तत्त्वं प्रतिपेदिरे प्रतिपादयामासुरिति च प्रतिज्ञायते ।

---

तस्मादिति । यत एवमुपायत्वान्नियम उपपत्तिमान् तत इत्यर्थः । परोपदर्शित-शब्दतत्त्वग्राहिणामिति । शब्दतत्त्वेति विशेष्यं दर्शितम् । अनन्योपायतया विपर्यास-नियम इति । अनेन पूर्वपादेन सह योजना कृता । अत्र च प्रथमपादार्थमुपपाद्य तदुपपादनं च हेतूकृत्य पश्चात्पूर्वार्धे एव कृत्स्नो व्याख्यात इति वेदितव्यम् । द्वितीयपादस्याभिप्रायमाह—अपरप्रदर्शितविषयास्त्विति । परैः प्रदर्शितो विषयो येषां ते परप्रदर्शितविषयाः, तेभ्योऽन्येऽपरप्रदर्शितविषया इति । तानेवाह -- परमर्षय इति । साक्षात्कृतधर्माण इति । आर्षेण प्रत्यक्षेण साक्षात्कृतोऽध्यक्षीकृतो धर्मो यैरिति विग्रहः । उपलक्षणं चैतदधर्मस्यपीति । आर्षज्ञानास्तित्वं च पूर्वाचार्यसाधितमनुसन्धेयमिति । अव्याहतान्तःप्रकाशा इति । यश्च प्रकाश आर्षज्ञानेनाहितोऽन्तरात्मनि, स न जातुचित्तेषां केश्चिद्व्याहन्यते ; न हि कारण-दोषज्ञानं वा बाधकज्ञानं वा तस्य कदाचिद्बाधकमस्तीति भावः । विधूतविपर्यास-क्रमं चेति । विधूतौ विपर्यासः क्रमश्च यस्मिन् तद्विधूतविपर्यासक्रमम् । क्रमस्य च विपर्यासः शेषी, क्रमः क्रमवतामङ्गमिति न्यायात् । तेनाभ्यर्हितत्वविवक्षया विपर्यासस्य पूर्वनिपातः कृतः । विधूतो विपर्यासस्य क्रमो यस्मिन्निति वा विग्रहः । विधूननं तु विपर्यासस्यार्थसिद्धम् । क्वचित्तु विधूतविपर्यासक्रमं चेति पाठः । तत्र चकारः समञ्जसः । पाठान्तरे चोऽवधारणार्थो व्याख्यातव्यः । वाक्तत्त्वमिति । वाचः पारमार्थिकं रूपमिति । प्रतिपेदिरे प्रतिपादयामासुरिति च प्रतिज्ञायत इति । प्रतिपेदिर इति च प्रतिज्ञायते, प्रतिपादयामासुरिति च प्रतिज्ञायत इत्यर्थः । प्रतिज्ञायत इत्यनेन वचनस्य तत्र तात्पर्यं दर्शितम् ।

यथोक्तम्—"साक्षात्कृतधर्माण ऋषयो बभूवुः । ते च परेभ्योऽसाक्षात्कृत-

---

कुत्र प्रतिज्ञा इत्यपेक्षायामुक्तम्—यथोक्तमिति । निरुक्तकारेणेति सिध्यति । तद्वचनमुपादत्ते—साक्षात्कृतधर्माण ऋषयो बभूवुरिति । अनेन प्रतिपेदिर इत्यत्रोक्तिर्दर्शिता । ननु कथं वात्तत्त्वं प्रतिपेदिर इत्यत्र साक्षात्कृतधर्माण ऋषयो बभूवुरित्येतत्प्रमाणम् ? पश्य , अनेन हि धर्मस्य साक्षात्करणमुक्तम् , न वाचः ; धर्मश्चार्थ एव । यथोक्तम्—"द्रव्यक्रियागुणादीनां धर्मत्वम्" इति । अतो वक्तव्यमेतत् । उच्यते—निरुक्तकारो हि वेदसंप्रदायौपयिकतया वेदसाक्षात्कारे वक्तव्ये किंपुनर्न्यायेन वेदसाक्षात्करणमप्युक्तं भवतीति मन्यमानस्तत्फलभूतधर्मसाक्षात्करणमेवाह—"साक्षात्कृतधर्माण ऋषयो बभूवुः" इति ; न हि शब्दमन्तरेणार्थः कश्चन गृह्यते । यथोक्तम्—

"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन गृह्यते ॥" इति ।

अपि च श्रेयस्साधनं हि धर्मः; तत्र मन्त्रोऽप्यन्तर्गत इति मन्त्रभागः साक्षात्कृतो धर्मतयैव, ब्राह्मणभागोऽपि "यद्ब्राह्मणानि" इति ब्रह्मयज्ञशेषतया विनियुक्तत्वाद्धर्म एवेति तस्यापि धर्मतयैव साक्षात्करणम् ; कल्पसूत्रयोरितिहासपुराणयोश्च ब्रह्मयज्ञशेषता ; "ब्राह्मणेन निष्कारणः षडङ्गो वेदोऽध्येयः" इति अङ्गानामस्ति धर्मशेषता ; एवमन्येषामपि शास्त्राणां तत्तच्छ्रवणविधिशेषतया धर्मत्वमूहनीयम् । तथा लौकिकशब्दस्यापि "शास्त्रेण धर्मनियमः" इति स्थित्या धर्मत्वमस्त्येव । "एकः शब्दः सम्यग्ज्ञातः" इत्यप्यस्त्येव वचनम् । तस्मात्प्रमाणमेतच्छब्दतत्त्वप्रतिपत्ताविति सिद्धम् । तदुक्तम्—

"अत्राह नित्य एवायमागमः……… ।
आर्षज्ञानावबुद्धो वा पूर्वं भवति कस्यचित् ।
ततस्तेनापरेभ्योऽसौ शिष्येभ्यः प्रतिपाद्यते ॥

धर्मभ्य उपदेशेन मन्त्रान् सम्प्रादुः । उपदेशाय ग्लायन्तोऽपरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि च" ।

---

तैरप्यन्येभ्य इत्येवं शिष्याचार्यपरम्परा ।
प्रवृत्ता तावदेवास्ते यावदाभूतसम्प्लवम् ॥

पुनः सृष्टौ ततः कश्चिदादावार्षाच्च दर्शनात् ।
नित्यं दृष्ट्वागमं साक्षाच्छिष्येभ्यः प्रतिपादयेत् ॥ "

तथा चाहुः—

"अतीन्द्रियानसंवेद्यान् पश्यन्त्यार्षेण चक्षुषा ।
ये भावान् वचनं तेषां कोऽतिवर्तितुमर्हति ॥" इति ।

प्रतिपादयामासुरित्यत्रोक्तिं दर्शयति—परेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् सम्प्रादुरिति । त ऋषयः परेभ्यः स्वशिष्येभ्यो निजयैव शक्त्या स्वयमेवासाक्षात्कृतधर्मभ्य इति सम्प्रदानकारणोद्घाटनम् । मन्त्रानित्युपलक्षणं ब्राह्मणस्यापि । यथोक्तं निरुक्तवार्तिक एव—

" असाक्षात्कृतधर्मभ्यस्ते परेभ्यो यथाविधि ।
उपदेशेन सम्प्रादुर्मन्त्रान् ब्राह्मणमेव च ॥" इति ।

उपदेशश्च वेदव्याख्या । यथोक्तम्—

"अर्थोऽयमस्य मन्त्रस्य ब्राह्मणस्यायमित्यपि ।
व्याख्यैवात्रोपदेशः स्याद्वेदार्थस्य विवक्षितः ॥ " इति ।

उपदेशाय ग्लायन्त इति । उपदेशेन ग्राहयितुमशक्या इत्यर्थः । अपरे द्वितीयेभ्यो न्यूना इति । बिल्मग्रहणाय उपायतो वशीकरणायेमं ग्रन्थं वक्ष्यमाणं

तदुक्तम्—

"असतश्चान्तराले यः शब्दो नास्तीति मन्यते ।
प्रतिपत्तुरशक्तिः सा ग्रहणोपाय एव सः ॥

---

समाम्नासिषुः समाम्नातवन्तः । तमेवाह—वेदं च वेदाङ्गानि चेति । अङ्गशब्द उपाङ्गादेरप्युपलक्षणार्थः । वेदमुपदशेमात्राद्ग्रहीतुमशक्ता वेदं समाम्नासिषुः । वेदार्थं चोपदेशेन ग्रहीतुमशक्ता अङ्गानि च समाम्नासिषुरिति । यथोक्तम्—

"अशक्तास्तूपदेशेन ग्रहीतुमपरे तथा ।
वेदमभ्यस्तवन्तस्ते वेदाङ्गानि च यत्नतः ॥" इति ।

बिम्मशब्दो ह्यनन्तरमेव तत्र निरुक्तः—"बिम्मं भिम्मं भासनम्" इति । व्याख्यातं च—

"बिम्मं भिम्ममिति त्वाह बिभर्त्यर्थविवक्षया ।
उपायो हि बिभर्त्यर्थमुपेयं वेदगोचरम् ॥

अथवा भासनं बिम्मं भासतेर्दीप्तिकर्मणः ।
अभ्यासेन हि वेदार्थो भास्यते दीप्यते स्फुटम् ॥" इति ।

यथा हि स्वामी वीक्षणमात्रेण कर्मकरान्नियुङ्क्ते, तत्पुरुषस्तु तदभिप्रायनिवेदनेन, इतरे तु स्वार्थं सामादिभिरुपायैः कारयन्ति, एवमिहापि । यथोक्तम्—

"प्रथमाः प्रतिभानेन द्वितीयास्तूपदेशतः ।
अभ्यासेन तृतीयास्तु वेदार्थं प्रतिपेदिरे ॥" इति ।

स्वोक्तमर्थं वृद्धसंवादेन द्रढयन्नाह—तदुक्तमिति । तत्र 'निमित्तमेवेदमीदृशम्' इति पूर्वस्मिन्नियमे श्लोकमुपन्यस्यति—असतश्चेति । अन्तराल इति । विवक्षाया

यथाद्यसङ्ख्याग्रहणमुपायः प्रतिपत्तये ।
सङ्ख्यान्तराणां भेदेऽपि तथा वर्णान्तरश्रुतिः ॥

---

'गौरित्येकं पदम्' इति ज्ञानस्य च मध्य इत्यर्थः । यच्छाब्दमिति पाठः । परमार्थतोऽसतो गकारादेरन्तराले शाब्दं परमार्थशब्दविषयं ज्ञानमुदीयमानं नास्तीति लौकिकः प्रतिपत्ता मन्यत इति यत् वर्णग्रहणं च यदभिमन्यते सा प्रतिपत्तुरशक्तिरेव ऋषिवत्साक्षात्कर्तुमशक्तिरेव अशक्तिकृतमित्यर्थः । कार्ये कारणोपचारः । तथापि कथं नियमः? अत आह—ग्रहणोपाय एव स इति । निरवयवविषयं ज्ञानं नास्ति गकाराद्येव प्रतीयत इति योऽभिमानः, स तत्त्वग्रहणाभ्युपाय एव; नानुपायः । स एव वा तत्त्वग्रहणोपाय इति । क्वचित्पाठः यः शब्द इति । यः प्रतिपत्ता असतोऽन्तराले गकारादिषु प्रतीयमानेषु तदतिरिक्तः शब्दो नास्तीति मन्यते, तस्य प्रतिपत्तुरशक्तिः सेति पूर्ववत् यच्छब्दाभावेऽपि पूर्वोक्तं नास्तीति मननं तच्छब्दाभ्यामुच्यते । अन्यः पाठो यान् शब्दानस्तीति । एनं पाठमधिकृत्यान्तरालस्य विवक्षेत्यादिका पूर्वव्याख्या । विवक्षातः प्रभृत्येकपदज्ञानात्प्रागन्तराले यानसतः शब्दानस्तीति प्रतिपत्ता मन्यते । उद्देश्यैः शब्दैरस्तीति मननस्य प्रत्येकसम्बन्धादस्तीत्येकवचनप्रयोगः । अस्तिक्षीरासमासवदस्तीत्यव्ययं वा तेन सन्त इत्यर्थः । प्रतिपत्तुरशक्तिः सेति । यान् शब्दानित्युक्तानां तु सेति तच्छब्देन परामर्शः । अशक्तिरिति विशेष्यद्वारा लिङ्गवचनव्यत्यासः । एवं ग्रहणोपाय एव स इत्यत्रापि द्रष्टव्यम् । पूर्ववदेव व्याख्या । सम्प्रति 'अत एव तुल्यः सर्वप्रतिपत्तॄणां विपर्यासः, तन्निमित्तस्य समानत्वात्' इत्यत्र श्लोकमुपन्यस्यति—यथाद्यसङ्ख्याग्रहणमिति । यथा ह्याद्यानां सङ्ख्यानां ग्रहणं सङ्ख्यान्तराणां प्रतिपत्त्युपायो भवति भेदेऽपि परस्परं तेषाम् तथा शब्दान्तराणां गकारादीनां श्रुतिः श्रवणमेकस्य शब्दतत्त्वस्य प्रतिपत्तय उपायः परस्परं भेदेऽपीति । 'क्रमनियमश्च

यथानुपूर्वीनियमो विकारे क्षीरबीजयोः ।
तेनैव प्रतिपत्तॄणां नियतो बुद्धिषु क्रमः ॥"

यथा च ज्ञानस्यासद्ग्राह्याकारानुकारविपर्यासोपप्लवो नियतः तथा वागात्मनोऽपि सदृशव्यञ्जकध्वनिभेदानुकारात् क्रमभावी विपर्यासोपप्लवः ।

---

नियतक्रमत्वात्' इत्यत्र श्लोकमुपन्यस्यति—यथानुपूर्वीनियम इति । यथा किल क्षीरबीजयोः प्रकृत्योर्विकारे परिणामे क्रमनियमो दृष्टत्वादङ्गीक्रियते, तथैव प्रतिपत्तॄणां बुद्धिषु दृश्यत एवानुपूर्वीनियमः ; न च दर्शने कश्चिद्विशेषः । एते च श्लोकाः पूर्वमेव व्याख्याताः । तत्र "असतश्चान्तराले यान् शब्दानस्तीति मन्यते । ग्रहणोपाय एव सः" इत्यस्य व्याख्या 'निमित्तमेवेदम्' इत्यादिका । "असतश्चान्तराले यान् शब्दानस्तीति मन्यते । प्रतिपत्तुरशक्तिः सा" इत्यस्य व्याख्या 'न हि शब्दान्तरे'त्यादिका । द्वितीयश्लोकव्याख्या 'यथा चाविद्यमाने'त्यादिका । तृतीयश्लोकव्याख्या 'यथैव चोत्पत्तौ' इत्यादिका । सम्प्रत्युत्तरार्धं व्याचष्टे—यथा चेति । ज्ञानस्यासद्ग्राह्याकारानुकारविपर्यासोपप्लव इति । ग्राह्यस्याकारो ग्राह्याकारः तस्यानुकारोऽनुकरणम् । अनुगतिरिति यावत् । तद्विपर्यासस्तद्गतो भ्रमः । असतो ग्राह्याकारानुकारस्य सम्बन्धी यो विपर्यासः स एवोपप्लव उपसर्गः इति । यथा हि विज्ञानवादसिद्धान्तन्यायात् बाह्योऽर्थो ग्राह्यः ; स च सन्नेव; स च तत्रैव वर्तते ; तथा विज्ञानेऽपि तस्याकारस्यानुकारोऽनुकरणमस्त्येव ; यथा जपाधर्मस्यापि रागस्य स्फटिकेऽनुकारः, अर्थधर्मस्याप्याकारस्य ज्ञानधर्मतयावग्रहात् । स च विपर्यास एव , अन्यस्यान्यथाभानात् । स च स्वतःप्रमाणस्य ज्ञानस्योपप्लवः । यथोक्तम्—"निराकारा च नो बुद्धिराकारवान् बाह्योऽर्थः" इति । नियत इति ध्रुव इत्यस्य व्याख्या । एवं दृष्टान्तांशो व्याख्यातः । दार्ष्टान्तिकांशमनुसन्धत्ते—तथा वागात्मनोऽपीति ।

**तथाहि—येषामपि वर्णलक्षणं वाक्तत्त्वमविद्यमानभागावच्छेदमित्यभ्युपगमः,**

---

सदृशव्यञ्जकध्वनिभेदानुकारादिति । सदृशानां व्यञ्जकानां ध्वनीनां यो भेदस्तस्य वागात्मन्यप्यनुकारात् तत्स्थतया तद्धर्मतयावभासात् ध्वनिक्रमस्यापि तत्रानुकारात् क्रमभावी विपर्यासोपप्लवो नियत इति सिध्यति । विज्ञानवादिमतेन वैतदुच्यते—यथा च ज्ञानस्यासद्ग्राह्याकारानुकारविपर्यासोपप्लव इति । यथा किल विज्ञानवादे ज्ञानस्य स्वभावस्वच्छस्य योऽसन्नेव ग्राह्याकारः तस्यानुकारस्तद्धर्मतया भानात्मा विपर्यासो नामोपप्लव इति । ज्ञानं हि तत्र वासनया जन्यते ; सा च स्वकारणज्ञानवशात् ग्राह्याकारानुरक्ता स्वकार्येऽपि ज्ञाने परमार्थतोऽसन्तमेव ग्राह्याकारं समर्पयति । अर्पितेन च ग्राह्याकारेणानुकृतेन वा सादृश्याद्यो विपर्यासो विभ्रमः 'नीलमिदम्, पीतमिदम्' इति, स एवात्रोपप्लवः । यथोक्तम्—

"अविभागोऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः ।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥" इति । तथा—

"मत्पक्षे यद्यपि स्वच्छो ज्ञानात्मा परमार्थतः ।
तथाप्यनादौ संसारे पूर्वज्ञानप्रसूतिभिः ॥

चित्राभिश्चित्रहेतुत्वाद्वासनाभिरुपप्लवात् ।
आनुरूप्येण नीलादिग्राह्यग्राहकभूषितम् ॥

प्रविभक्तमिवोत्पन्नं नान्यमर्थमपेक्षते ।
अन्योन्यहेतुता चैषां ज्ञानशक्त्योरनादिका ॥" इति ।

सम्प्रति स्फोटस्येत्यनुक्त्वा वाच इत्यभिधानस्याभिप्रायमाह—तथा हीति । येषामपीति । अभ्युपगम इत्यन्वयः । वर्णलक्षणं वर्णरूपं वाक्तत्त्वं

तेऽपि भागक्रमसंसर्गलक्षणमन्यं चोदात्तदीर्घत्वादिरूपमुपप्लवं नियतं न तस्यावजानते । तथा हि—सन्ध्यक्षरेष्वकारेकारौ चान्येष्वपि स्वरेषु स्वरितगुणयुक्तेषूदात्तानुदात्तगुणभेदविभज्यमानभागभेदाभिन्नेषु न भागक्रमसंसर्गप्रख्यापह्नवमर्हति । तदुक्तम्—

---

परमार्थः शब्दात्मा, अविद्यमानभागावच्छेदं यथा किलावयवी विद्यमानभागावच्छेदः विद्यमानो भागैरवच्छेदो विशेषणं यस्य ततोऽन्यदविद्यमानभागावच्छेदम् । इत्यभ्युपगम इति । अभ्युपगममात्रमेतत्, न प्रामाणिकमिति भावः । तेऽपीति । नावजानत इत्यन्वयः । भागक्रमसंसर्गलक्षणमिति । भागैः क्रमेण च यः संसर्गस्तल्लक्षणम् । भागानां क्रमेणेति विग्रहे भागसंसर्गोऽपि शृङ्गग्राहिकया गृहीतो वेदितव्यः । उपप्लवमिति सम्बन्धः । अन्यं चोदात्तदीर्घत्वादिरूपमुपप्लवमिति । आदिशब्देनानुदात्तप्लुतत्वादेरुपादानम् । नियतमवश्यंभाविनं न तस्यावजानते । तस्य वर्णलक्षणस्य वाक्तत्त्वस्य । एतदेव स्फोरयति —तथा हीति । सन्ध्यक्षरेष्विति । एचः सन्ध्यक्षराणीति । अकारेकारौ चेति । एकारे तावत्सन्ध्यक्षरे एकादशस्वरवत्प्रथमस्वरस्तृतीयस्वरश्च विद्येते इत्यर्थः । अनेन च भागक्रमसंसर्गो दर्शितः । अत्र च "अस्तिर्भवन्तीपरः" इति स्त इत्यर्थसिद्धम्; नावजानत इति वानुषङ्गः, द्वितीया च तत्र द्रष्टव्या । अथवापह्नवमर्हतीत्युत्तरत्र दर्शनान्नापह्नवमर्हत इत्यत्र सिध्यति, प्रथमा च । अन्येष्वपि सन्ध्यक्षरेषु त्रिषु द्वितीये तावदाकारसहितोऽसावेव ; तृतीये पुनरकारोकारौ ; चतुर्थे तु द्वितीयस्वरसहितोऽसावेव । अनुक्तसमुच्चयार्थो वा चकारः । अन्येष्वपि स्वरेष्विति । द्वादशस्वपि । अचः स्वरा इति । स्वरितगुणयुक्तेष्विति । स्वरितमेव गुणः स्वारितगुणः, तेन युक्तेषु इति । क्वचित्पाठः स्वरितगुणेष्विति, तदा बहुव्रीहिः । एतच्च भागक्रमसंसर्गप्रदर्शनायोक्तम् । यदा ह्यन्ये स्वराः स्वरितगुणाः तदा क्रमभागसंसर्गोदाहरणं कथमित्याह—

भेदानुकारो ज्ञानस्य वाचश्चोपप्लवो ध्रुवः ।
क्रमोपसृष्टरूपा वाग्ज्ञानं ज्ञेयव्यपाश्रयम् ॥

न ज्ञेयेन विना ज्ञानं व्यवहारेऽवतिष्ठते ।
नालब्धक्रमया वाचा कश्चिदर्थोऽभिधीयते ॥

---

उदात्तानुदात्तगुणभेदविभज्यमानभागभेदभिन्नेष्विति । उदात्तानुदात्तरूपयोर्गुणयोः भेदेन विभज्यमानयोर्भागयोर्भेदेन भिन्नेष्विति । क्वचित्पाठः भागभेदेष्विति । उदात्तानुदात्तगुणभेदविभज्यमानो भागभेदो येष्विति विग्रहः । उदात्तानुदात्तसमाहारो हि स्वरितः । ततश्चैकस्मिन् वर्णे तयोः समावेशाद्वर्णात्मनोऽपि भागभेदः प्रसज्येतेति । न भागक्रमसंसर्गप्रख्यापह्नवमर्हतीति । व्याख्यातचरं चैतत् । तस्माद्वाङ्मात्रसम्बन्ध्ययमुपप्लवः, न स्फोटात्मन्येव केवल इति सिद्धम् । अत्र च स्वरितगुणेष्विति विशेषणमुदात्तेत्यादिविशेषणे हेतुतयेति द्रष्टव्यम् । यथोक्तम्—

"उदात्तश्चानुदात्तश्च स्वरितश्च त्रयः स्वराः ।
आयामविस्रम्भाक्षेपैस्त उच्यन्तेऽक्षराश्रयाः ॥

एकाक्षरसमावेशे पूर्वयोः स्वरितः स्वरः ॥" इति ।

पूर्वं पूर्वार्धसंवादकं श्लोकत्रयमुपन्यस्तम् । इदानीमुत्तरार्धसंवादकं श्लोकद्वयमुपन्यस्यति—तदुक्तमिति । "भेदानुकारो ज्ञानस्य वाचश्चोपप्लवो ध्रुवः ।" ज्ञानस्य वाचश्चोभयोरपि लोके ध्रुव एवोपप्लवः । उपप्लवं विशिनष्टि—भेदानुकार इति । तत्र ज्ञाने तावदाकारभेदानुकारो ज्ञेयगतस्याकारभेदस्य ज्ञानेऽपि कल्पना वासनागतस्य वा नीलपीतादिरूपभेदस्य ज्ञानेऽध्यारोपः । एवं भेदकल्पकोऽनुकारो भेदानुकार इति व्याख्यातम् । भेदकर्तृको वा भेदानुकारः । यथा किला-

कारभेदो ज्ञेयस्थतया वासनास्थतया वा प्रतिभासते तथा ज्ञानधर्मतयापि भासते इत्यस्ति भेदस्यानुकर्तृत्वम्, वाचि पुनर्ध्वनिभेदानुकारः। स च पूर्ववद्‌द्विधा व्याख्येयः। क्वचित्पाठः वेद्यानुकार इति। ज्ञानं हि वेद्यमनुकरोति 'गौः' इति ज्ञानम् 'गौः' इत्यर्थः इति। तथा वाच्यपि वेद्यानुकारोऽन्येषां वेद्यानां ध्वनीनां वर्णानां वा निरवयवे शब्देऽनुकार इति। कुत इत्याह—"क्रमोपसृष्टरूपा वाक् ज्ञानं ज्ञेयव्यपाश्रयम्" इति। भागक्रमेणोपसृष्टमुपप्लुतं रूपं यस्याः सा तथोक्ता। ज्ञानं च किञ्चन ज्ञेयं व्यपाश्रित्यैवोत्पद्यते।

एवमन्वयेनोभयत्राप्यनुकारो दर्शितः। इदानीं व्यतिरेकेणाप्युपपादयन्नाह—"न ज्ञेयेन विना ज्ञानं व्यवहारेऽवतिष्ठते"। क्वचिदप्यदर्शनादिति भावः। यथोक्तम्—

"ज्ञानं न जायते किञ्चिदुपष्टम्भनवर्जितम्।" इति।

क्रमोपसृष्टेत्यत्रापि व्यतिरेकमाह—"नालब्धक्रमया वाचा कश्चिदर्थोऽभिधीयते।" इति। तथोक्तम्—"क्रमश्चापि विवक्षितः" इति। एवं तावत् 'क्रमभागसंसर्गलक्षणमुपप्लवम्' इत्यस्य विप्रतिपत्तेरुपपादनं कृतम्। 'अन्यश्चोदात्तादिरूपमुपप्लवम्' इत्यत्र न विप्रतिपत्तिः यथाहुः—

"आनुपूर्वी च वर्णानां ह्रस्वदीर्घप्लुताश्च ये।
कालस्य प्रविभागास्ते जायन्ते ध्वन्युपाधयः॥" इति॥

इति स्फोटसिद्धिव्याख्यायां गोपालिकायाम्
एकविंशः श्लोकः

विपर्यासो निमित्तं च सम्यग्बोधस्य दर्शितः ।
किञ्चिद्भेदानुकारेऽपि दृष्ट एव विपर्ययः ॥ २२ ॥

अथापि स्यात्—कथमिव विपर्यासः सम्यग्बोधस्य निमित्तमिति, प्रदर्शितं चैतत् 'यथैव दर्शनैः पूर्वैः' इति, 'यथाद्यसङ्ख्याग्रहणम्' इति च । यत्तु 'विपर्यासत्वं प्रत्ययविपर्ययाधीनं तदभावे बालोल्लापनम्' इति,

---

दोषान्तरमपि परिहरति—विपर्यासः·······निश्चीयते । अस्यार्थः—द्वाविंशः श्लोकः विपर्यासो निमित्तं चेति । तत्र पूर्वार्धश्लोकव्यावर्त्यां शङ्कामाह—अथापि स्यात् कथमिव विपर्यासः सम्यग्बोधस्य निमित्तमिति । न हि बाष्पभ्रमोऽग्नितत्त्वज्ञानाय कल्पत इति भावः । यथाहुः "अविद्याभ्यासोऽविद्यामेव द्रढयेत्" इति । अत्रोत्तरत्वेन पूर्वार्धं व्याचष्टे—प्रदर्शितं चैतदिति । यथा विपर्यासः सम्यग्बोधस्य हेतुर्भवति तथा दर्शितमित्यर्थः । केन दर्शितमित्यपेक्षायामाह—यथैव दर्शनैः पूर्वैरिति, यथाद्यसङ्ख्याग्रहणमिति चेति । पूर्वोपन्यस्ताभ्यामाभ्यां पूर्वाचार्यश्लोकाभ्यामित्यर्थः ।

एवं तावन्नियमानुपपत्तिः परिहृता नियमवत एव विपर्यासस्य तत्त्वज्ञानहेतुत्वानुपपत्तौ नियमोपपादनमुपायत्वादित्यादिना क्रियमाणमाकाशपतितमिव स्यात् इत्येतां शङ्काम् 'अथापि स्यात्' इत्येवं सम्प्रत्युदीयमानां परिहर्तुं पूर्वार्धश्लोक इति व्याख्यातम् । उत्तरार्धेन तु नियमानुपपत्तेरनन्तरमुक्तामेवानुपपत्तिं परिहरतीति दर्शयन्नाह—यत्तु विपर्यासत्वं प्रत्ययविपर्ययाधीनं तदभावे बालोल्लापनमिति । बालोल्लापनसदृशमित्यर्थः । अनेन चोपन्यासेन पूर्वमपि बालोल्लापनशब्दः प्रथमान्त इत्यूह्यते, चतुर्थ्यन्तत्वेऽपि पूर्वत्र बालोल्लापनसदृशमित्यर्थ इत्यनेन

**सत्यम्, यदि स न स्यात्; अस्ति तु व्यक्तैकशब्दपरिच्छेदादर्थसिद्धे-श्चान्यथालभ्यत्वादुक्तेन प्रकारेणावश्याभ्युपेय एकः शब्दः ।**

---

सूचितं वेदितव्यम् । सत्यं यदि स न स्यादिति । प्रत्ययविपर्ययस्तच्छब्देन परामृश्यते । यदि प्रत्ययविपर्ययो न स्यात् तदा विपर्ययाभावे कथ्यमानं विपर्यासत्वं बालोल्लापनं स्यादित्यर्थः । किं तर्हीत्याह—अस्ति त्विति । विपर्यय इति सिध्यति । कीदृशो विपर्ययस्तमाह—व्यक्तैकशब्दपरिच्छेदादिति । अनेन प्रत्यक्षप्रमाण-कत्वं दर्शितम् । प्राचीनध्वनिजनितानुपाख्येयज्ञानाविर्भावितभावनाबीजपरम्परया अन्तिमेन ध्वनिना व्यक्ततरैकशब्दपरिच्छेदादिति । अवश्याभ्युपेय एकः शब्द इति सम्बन्धः । अर्थसिद्धेश्चान्यथालभ्यत्वादिति । अर्थबुद्धेरिति वा पाठः । अन्यथेति । यद्येकः शब्दात्मा न प्रत्यक्षीक्रियते तदेत्यर्थः । अलभ्यत्वादिति छेदः । वर्णेभ्यः प्रत्येकं संहत्य चासम्भवादर्थबुद्धेरित्यर्थः । अस्यापि स एवान्वयः । कथं पुनरिऽदं हेतुद्वयं सिध्येत्? अत उक्तम्—उक्तेन प्रकारेणेति । क्वचित् इत्युक्तेनेति पाठः; तत्रेतिकरणेन पूर्वोक्तिप्रकारः परामृश्यते । अवश्याभ्युपेय एकः शब्द इति । वर्णेभ्योऽन्यो निरवयवश्चेति विवक्षितम् । अस्ति त्वेवमवश्याभ्युपेय एकः शब्दो विपर्यय इत्यन्वयः । निरवयवस्यैकस्य शब्दस्याभ्युपेयत्वं वर्णावग्रहाणां मिथ्यात्वे कारणमित्यर्थः । द्वेधा हि प्रत्ययविपर्ययः 'नेदं रजतम्' इतिवत्साक्षात्, वैपरी-त्येन वा 'इयं शुक्तिः' इतिवत् प्रतियोगित्वेन वा । तत्र यद्यपि 'नायं गकारः' इति वैपरीत्येन विपर्ययो नास्ति, तथापि प्रतियोगित्वेन तावदस्त्येवेत्यनेन दर्शितमिति वेदितव्यम् ।

एवमुत्तरार्धावताराय पातनिका कृता । सम्प्रति साक्षात्तद्यावर्त्यामाशङ्का-माह—स्यान्मतमिति । अविरोधान्नैष भेदमुपावर्तयितुमलमिति । एषोऽवश्याभ्युपेय

स्यान्मतम्—अविरोधान्नैष भेदमपवर्तयितुमलमिति ; अविरोधश्च तस्य भेदानुविद्धस्यैवोत्पादात् ; न हि तदा भेदो न प्रकाशत इति।

---

एकः शब्दो न गकारादिभेदमपवर्तयितुमुत्सारयितुमलं पर्याप्त इत्येतन्मतं स्यात्। सम्भवेदित्यर्थः। अविरोधादिति। एकस्य शब्दात्मनो भिन्नानां च शब्दात्मनामविरोधादित्यर्थः। कथं पुनरेकत्वनानात्वयोरविरोधः? अत आह—अविरोधश्च तस्य भेदानुविद्धस्यैवोत्पादात्। तस्यैकस्य शब्दस्योत्पादादिति। परिच्छेदोत्पादादित्यर्थः। अवश्याभ्युपेयो व्यक्तैकशब्दपरिच्छेद इति चेत्पूर्वस्मिन् ग्रन्थे पाठः, तदा तस्यैवं योजना—अस्ति तु व्यक्तैकशब्दपरिच्छेदात् बाधकाद्वर्णावग्रहाणां विपर्ययः बाधनम्। न च व्यक्तैकशब्दपरिच्छेदो नास्तीति वक्तव्यमित्याह—अर्थबुद्धेश्चान्यथालभ्यत्वादुक्तेन प्रकारेण अवश्याभ्युपेयो व्यक्तैकशब्दपरिच्छेद इति। एवं चाविरोधश्च तस्यैकशब्दपरिच्छेदस्य भेदानुविद्धस्यैवोत्पादादित्युत्पत्तिवचनं समञ्जसं भवतीति। क्वचित्पाठः स्यान्मतमेवमप्यविरोधादिति। यद्यप्यभ्युपेयः तथापीत्यर्थः। क्वचित्पुनरेवमपि विरोधादिति। तत्र विरोधादपवर्तयितुमेष नालमित्यन्वयः। अथवा नापवर्तयितुमित्यत्रैव हेतुः ; वर्णप्रत्ययविरोधादित्यर्थः। हेत्वन्तरमाह—अविरोधश्चेति। एवमिदानीं व्याख्येयम्। भेदेनानुविद्धस्यैवेत्येतदुपपादयति—न हि तदा भेदो न प्रकाशत इतीति। एकशब्दपरिच्छेदे गकारादिभेदो न प्रकाशत इति न, किन्तु प्रकाशत एवेत्यर्थः। गकारादि प्रत्येकं गृहीत्वा पश्चात् 'गौरित्येकं पदम्' इत्येव बुध्यन्ते; गकाराद्यवबोधेऽपि स्फोटात्मा प्रकाशत एव। 'गौरित्येकं पदम्' इत्यत्रापि भेदमिश्रमेव तत्त्वं प्रकाशते। अत एक एव शब्दपिण्डः गकाराद्यात्मना भिन्नः स्फोटात्मना चाभिन्नो भवति। यथा ह्येक एव गोपिण्डः जात्याद्यात्मना भिन्नः व्यक्त्यात्मना चाभिन्नः। इतिः प्रकारार्थः। दूषयति—तदसत्। यदेतन्मतं तदसदित्यर्थः। तथा हीत्युपपादनप्रतिज्ञानम् भेदेनानन्वीयमानमपीति। मुखवि-

तदसत्। तथा हि—भेदेनानन्वीयमानमपि मणिकृपाणदर्पणादिषु तत्त्वस्य भेदविरोधात्तत्त्वप्रत्ययेन समुत्सारितनिखिलभेदं मुखमवसीयते। तथा दीर्घादिभेदानुगमेऽपि वर्णात्मा प्रत्यभिज्ञाबलेन विधूतभेद एकोऽवगम्यते, तथा पदमपि स्वप्रत्ययावगम्यमानैकस्वभावं किञ्चिद्भेदपरमार्शेऽप्यभिन्नं निश्चीयते॥

---

शेषणमेतत्। उपधीयमानमिति वा पाठः। भेदेनेति कर्तरि तृतीया। उदीयमानमिति पाठे भेदेनेत्यस्य पृथक्पृथगित्यर्थः। मणिकृपाणदर्पणादिष्विति। अस्य पूर्वेण पदद्वयेनान्वयः। तत्त्वस्य भेदविरोधात् तत्त्वप्रत्ययेन समुत्सारितनिखिलभेदमिति। 'तदेवेदं मुखम्' इति प्रत्यभिज्ञाबलसिद्धं यन्मुखस्य तत्त्वं तद्भावः तस्य भेदेन चन्द्रत्वस्येव द्वित्वेन विरोधात् तत्त्वप्रत्ययेन प्रत्यभिज्ञाख्येन समुत्सारितनिखिलभेदमिति। अथवा तत्त्वस्य पारमार्थिकत्वस्य भेदविरोधात्। भेदो हि पारमार्थिकत्वविरोधी। ततस्तत्त्वप्रत्ययेन अबाधितत्वात् समुत्सारितनिखिलभेदमिति। सर्वो भेदो मिथ्या भेदत्वात् चन्द्रभेदवदिति। मुखमवसीयत इति। निश्चीयत इति। दृष्टान्तान्तरमाह—तथेति। अथवा ननु भेदप्रत्ययविरोधादभेदप्रत्ययः कथं न बाध्यतेऽत आह—तथेति। दीर्घादिभेदानुगमेऽपीति। वर्णात्मनो दीर्घादिभेदैरनुगमे सत्यपीत्यर्थः। वर्णात्मा प्रत्यभिज्ञाबलेनेति। 'स एवायं गकारः' 'स एवौकारः' 'स एव विसर्जनीयः' इत्यादिप्रत्यभिज्ञाबलेनेत्यर्थः। विधूतभेद इति। अपाकृतभेदः; मिथ्यात्वेन परिकल्पितभेद इति यावत्। एक इति। एकत्वमेव पारमार्थिकं तस्येति। तथाशब्दो दृष्टान्तान्तरसमुच्चयार्थः। समुत्सारितनिखिलभेदं मुखमवसीयत इति। वर्णात्मा च विधूतभेद एकोऽवगम्यत इति च यथेति यथाशब्दोऽर्थाक्षिप्तो द्रष्टव्यः। दार्ष्टान्तिके योजयति—तथेति। अनाक्षिप्य वा यथाशब्दं प्रकृतत्वादेव पूर्वयोस्तथेति परामर्शः। पदमपीति। वर्णव्यतिरिक्तं पदमपीति। स्वप्रत्ययावगम्यमानैक-

स्वभावमिति । स्वविषयेण प्रत्ययेन 'गौरित्येकं पदम्' इत्यादिकेनार्थप्रत्ययानुपपत्तिप्रसूतेन वा प्रत्ययेनावगम्यमान एकस्वभावः एकत्वं स्वभावो यस्येति । अथवा भिन्नस्य हि स्वभावानेकत्वम् ; अभिन्नस्य त्वेक एव स्वभावोऽवगम्यत इति । किञ्चिद्भेदपरामर्शेऽपीति । कैश्चन भेदैः परामर्शे संस्पर्शे सत्यपीत्यर्थः । अभिन्नं निश्चीयत इति । अभेद एव पारमार्थिकः, भेदसंसर्गस्तु मिथ्येति । एवं च श्लोकोत्तरार्धस्यैषा योजना—किञ्चिद्भेदानुकारेऽपि पूर्वोक्तयोर्दृष्टान्तयोरन्यत्र च विपर्ययो दृष्ट एव । अनुकारोऽनुगम इति सूचितम्—'तथा दीर्घादिभेदानुगमेऽपि' इति 'किञ्चिद्भेदपरामर्शेऽपि' इति च । अनुकारशब्दार्थस्तु कैश्चिद्भेदैरन्यधर्मैरन्यत्रातस्मिंस्तत्त्वेनानुकृतिः तद्धर्मवत्क्रिया अनुकारः तद्धर्मतया भानमिति यावदिति पूर्ववद्द्रष्टव्यः । असान्निहितस्य वा धर्मस्य समीपे कृतिरनुकारः ; अन्यधर्मस्यान्यत्र समारोप इति यावत् । अथवा "कृभ्वस्तयः क्रियासामान्यवचनाः" इति कृञा गमेरर्थो विवक्षितः ; तथा चानुकारोऽनुगम एव परामर्शसाहित्यापरनामा इति पूर्वत्रापि । सर्वत्रानेनानुकारशब्दो व्याख्यातो वेदितव्यः ॥

इति स्फोटसिद्धिव्याख्यायां

द्वाविंशः श्लोकः

अथ कस्मादेष स्फोटोपलब्धिक्रमोऽर्थोपलब्धावेव नाश्रीयते ? यतः—

**प्रत्यक्षज्ञाननियता व्यक्ताव्यक्तावभासिता ।**
**मानान्तरेषु ग्रहणमथवा नैव हि ग्रहः ॥ २३ ॥**

इन्द्रियं हि व्यक्तावभासिनोऽव्यक्तावभासिनश्च प्रत्ययस्य

---

अन्यदपि वर्णवादिनां चोद्यमुपन्यस्य परिहरति—**अथ कस्मात्**…… **निरवद्यम्** इति । अस्यार्थः, अत्र वर्णवादी चोदयति—अथ कस्मादेष स्फोटोपलब्धिक्रमोऽर्थोपलब्धावेव नाश्रीयत इति । न हि स्फोटोपलब्धिः स्वयं समीहिता, किन्तु अर्थोपलब्ध्यौपयिकतया । अतो यावान् प्रयासो वर्णोपलब्धिभिः स्फोटोपलब्धौ समाश्रीयते, स सर्वः प्रयोजनभूतायामर्थोपलब्धावेवाश्रीयताम्, किमन्तर्गडुना स्फोटोपलब्धिव्यसनेन, क्रमः प्रकारः पारम्पर्यमेव वा । यथोक्तम्—

"यस्यानवयवः स्फोटो व्यज्यते वर्णबुद्धिभिः ।
सोऽपि पर्यनुयोगेन नैवानेन विमुच्यते ॥
तत्र यः परिहारस्ते स नोऽत्रापि भविष्यति ।" इति ।

परिहरति—यत इति । प्रत्यक्षज्ञाननियतेति त्रयोविंशः श्लोकः[1] । अथ कस्मादिति कस्माच्छब्देनानुसन्धानाय यत इत्युपस्कारः । कारिकां व्याचष्टे—इन्द्रियं हीति । हिशब्द उपपादनत्वद्योतनार्थः प्रसिद्ध्यर्थो वा । बाह्यान्तःकरणभेदभिन्नमिन्द्रियमात्रमित्यर्थः । व्यक्तावभासिनोऽव्यक्तावभासिनश्चेति । क्वचिद्व्यक्तावभासिनः प्रत्ययस्य हेतुः क्वचिदव्यक्तावभासिनः प्रत्ययस्य हेतुः क्वचित्पूर्वमव्यक्ताव-

---

१. श्लोकस्यार्थः. ख.

हेतुः। यथा दूरात् ग्रहणे सूक्ष्मार्थनिरूपणायां च। लिङ्गशब्दादयस्तु निश्चितात्मानं प्रत्ययमुपजनयन्त्येकरूपम्, नैव वा। तत्र व्यक्ता-

---

भासिनः प्रत्ययस्य हेतुः अनन्तरं व्यक्तावभासिनः प्रत्ययस्य हेतुर्दृश्यत इत्यर्थः। एतदेवोदाहरति—यथेति। दूराद्ग्रहण इति। तदुक्तम्—'दूराद्वनस्पतौ' इत्यादिना। सूक्ष्मार्थनिरूपणायां चेति। तदप्युक्तम्—'यथा रत्नपरीक्षिणः' इत्यादिना। इन्द्रियं हि क्वचिद्व्यक्तावभासिनमेव प्रत्ययमुत्पादयति यथा बहलालोकमध्यवर्ति घटविषयम्, क्वचिदव्यक्तावभासिनमेव प्रत्ययमुत्पादयति यथा ज्वालैकत्वप्रत्यभिज्ञायाम्; न हि तत्रेन्द्रियेणैव व्यक्तावभासः अनुमानार्थापत्तिभ्यामेव बोधात्। तदिहानुपयोगादनुदाहृतमिति वेदितव्यम्। उत्तरार्धं व्याचष्टे—लिङ्गशब्दादयस्त्विति। आदिशब्देन सादृश्यानुपपद्यमानप्रमाणाभावानां ग्रहणम्। अनेन मानान्तरेष्वित्येतद्व्याख्यातम्। "तत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म सत्प्रत्यक्षम्" "अनुमानं ज्ञातसम्बन्धस्यैकदेशदर्शनादेकदेशान्तरेऽसन्निकृष्टेऽर्थे बुद्धिः" "शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानम्" "उपमानमपि सादृश्यमसन्निकृष्टेऽर्थे बुद्धिमुत्पादयति" "अर्थापत्तिरपि दृष्टः श्रुतो वार्थोऽन्यथा नोपपद्यत इत्यर्थकल्पना" "अभावोऽपि प्रमाणाभावो नास्तीत्यस्यार्थस्यासन्निकृष्टस्य"—इत्येवंलक्षितानि प्रत्यक्षादीनि प्रमाणानि वेदितव्यानि। तुशब्देनेन्द्रियाद्वैपरीत्यकथनं लिङ्गादावुत्तरार्धेन क्रियत इति सूचयति। निश्चितात्मानमिति। निश्चितो विषयस्यात्मा रूपं येन स तथोक्तः। असन्दिग्धमिति यावत्। एकरूपमिति। विषयेण सहैकं रूपं यस्य प्रत्ययस्य 'नेदं रजतम्' इतिवदन्याकारं भ्रान्तमित्यर्थः। अथवा निश्चितः स्वात्मा यस्य, अबाधिताकार इत्यर्थः। एकरूपमिति। न 'स्थाणुर्वा पुरुषो वा' इतिवदनेकरूपम्, किन्तु 'अग्निमानयं पर्वतः' इत्याद्येकरूपमित्यर्थः। प्रत्ययमुपजनयन्तीति। अनेन अनुत्पत्तिलक्षणमप्रामाण्यं निराकरोति।

**व्यक्तग्रहणबुद्धिभेदः ; अर्थश्च शाब्दप्रत्ययावसेयः , स्फोटात्मा तु प्रत्यक्ष-वेदनीय इति निरवद्यम् ॥**

---

एवमुत्तरार्धे प्रथमपादो व्याख्यातः । अथवा नैव हि ग्रह इत्येतद्व्याचष्टे—नैव वेति । निश्चितात्मानमेकं प्रत्ययमुपजनयन्तीति कृत्स्नं संबध्यते। उत्तरार्धेन विवक्षितं दर्शयति—न तत्र व्यक्ताव्यक्तग्रहणबुद्धिभेद इति । यथेन्द्रियेषु प्रथममव्यक्तग्रहणं पश्चाद्व्यक्तग्रहणमिति बुद्धिभेदः, नैवं लिङ्गादिष्वव्यक्तग्रहणं व्यक्तग्रहणमिति च बुद्धिभेदः , किन्तु व्यक्तग्रहणमेवेति। अस्त्वेवं व्यवस्था ; प्रकृते तु किमायातम् ? अत आह—अर्थश्च शाब्दप्रत्ययावसेयः , स्फोटात्मा तु प्रत्यक्षवेदनीय इति निरवद्यमिति । एवं चार्थोपलब्धौ व्यक्तावभासितैव , स्फोटाभिव्यक्तौ तु व्यक्ताव्यक्तावभासितेत्यापद्यत इति नावद्यं किञ्चित् न पर्यनुयोगतुल्यत्वमित्यर्थः । क्वचित्तु निरवद्यमिति ग्रन्थो न दृश्यते ॥

इति स्फोटसिद्धिव्याख्यायां

त्रयोविंशः श्लोकः

---

कथं प्रत्यक्षवेद्यता स्फोटात्मनः ? वर्णविज्ञानविलक्षणस्य पश्चात् 'गौः' इति विज्ञानस्य निरालम्बनत्वायोगात् । न[1] हि तद्वर्णालम्बनमेव, वर्णबुद्धिविलक्षणत्वात् । तस्मादर्थान्तरमवलम्बितुमर्हति । नन्वस्तीदं पश्चादेकैकवर्णविज्ञानविलक्षणं विज्ञानम् । न तु

परः प्रत्यवतिष्ठते कथं..........प्रतीयते । अस्यार्थः—'स्फोटात्मा तु प्रत्यक्षवेदनीयः' इत्यत्र चोद्यम्—कथं प्रत्यक्षवेद्यता स्फोटात्मन इति । यतः—"वर्णत्रयपरित्यागे बुद्धिर्नान्यत्र जायते" इति भावः । उत्तरमाह—वर्णविज्ञानविलक्षणस्य पश्चात् 'गौः' इति विज्ञानस्य निरालम्बनत्वायोगादिति । एकैकवर्णविज्ञानेभ्यो विलक्षणस्य तेभ्यः पश्चात्तनस्य 'गौः' इत्येवमाकारस्य विज्ञानस्य विज्ञानवादोक्तन्यायेन निरालम्बनत्वायोगात् प्रत्यक्षवेद्यता स्फोटात्मनोऽभ्युपेयत इत्यर्थः । सत्यं वैलक्षण्यमस्ति ; न च निरालम्बनत्वम् ; गादिबुद्धयो ह्येकैकवर्णविषयाः ; पश्चात्तनं तु विज्ञानं वर्णसमुदायविषयमिति भेद इति चेत्तत्राह--न हि तद्वर्णालम्बनमेव, वर्णबुद्धिविलक्षणत्वादिति । अनेन 'वर्णविज्ञानविलक्षणस्य' इत्येतद्विवृतम् । प्रत्येकवर्णबुद्धिभ्यः समुदितवर्णबुद्धिभ्योऽपि विलक्षणत्वादित्यर्थः । ततः किमित्याह—तस्मादर्थान्तरमवलम्बितुमर्हतीति । यतो निरालम्बनत्वायोगः, न च वर्णानां कथंचिदप्यालम्बनत्वम्, ततो वर्णेभ्योऽर्थान्तरं वस्त्वन्तरं शब्दात्मकमवलम्बितुमर्हतीति । सम्प्रत्येते एव चोद्योत्तरे विभजिष्यन् प्रथमं तावच्चोद्यमनुसन्धत्ते—नन्वस्तीति । इदमिति । 'गौः' इत्येवमाकारमित्यर्थः । पश्चादिति । एकैकवर्णविज्ञानादिति सिद्धयति । एकैकवर्णविज्ञानविलक्षणं विज्ञानमिति सुगमम् । 'अर्थान्तरमवलम्बितुमर्हति' इत्यसत्यमित्याह—न तु तदर्थान्तरावलम्बनमिति । न तु तद्विज्ञानमर्थान्तरावलम्बनम् न वर्णेभ्योऽर्थान्तरावलम्बनम्, किन्तु वर्णावलम्बनमेवेत्यर्थः । वर्णावलम्बनमित्यत्र कारणमाह—

१. नैतद्व- ख.

**तदर्थान्तरावलम्बनम्, वर्णरूपानुविद्धत्वाद्रूपान्तराप्रतिभासनाच्च । तथा हि—त एव वर्णात्मानः पुरः परिगतपरिच्छेदा अत्राप्यवभासन्ते, न तु रूपान्तरम् । अर्थान्तरविषयत्वे तु यथा वर्णविज्ञानानि परस्परविषय-रूपप्रत्यवमर्शशून्यानि प्रकाशमानरूपान्तराणि प्रकाशन्ते तथेदमपि स्यात् ।**

---

वर्णारूपानुविद्धत्वादिति । यद्रूपानुबद्धं हि यज्ज्ञानम् तदेव हि तस्य विषयः । तथा पठन्ति—"यदाभासं प्रमेयं तत्" इति । नार्थान्तरावलम्बन-मित्यत्राप्याह—रूपान्तराप्रतिभासनाच्चेति । यथाहुः—

"अन्यत्प्रकाशते चान्यद्ग्राह्यमित्यतिदुर्घटम् ।" इति ।

एतदेव व्याचष्टे—तथा हीति । त एव वर्णात्मान इति । ये पुरः प्रत्येकमनु-भूता इति । तत्राप्यवभासन्त इत्यन्वयः । पश्चिमेऽपि ज्ञाने प्रकाशन्त इत्यर्थः । केवलं स्मर्यन्ते, नानुभूयन्त इति यावत् । अत एवाह—पुरः परिगतपरिच्छेदा इति । पूर्वमेकैकज्ञानेषु परिगतोऽतिक्रान्तः परिच्छेदोऽनुभूतिर्येषामिति । ननु यद्यपि वर्णात्मानस्त एव तत्र प्रतिभासन्ते तथापि न स्मृतित्वम्, विशेषणैः परिच्छेदस्याधिकस्य प्रकाशात् । अत आह—पुरः परिगतपरिच्छेदा इति । यादृशेन रूपेण पूर्वं परिच्छेदो विशेषणं परिगतो विज्ञातः तथैव सन्तः, न मात्रयाप्यधिका न न्यूना इति । अत्रापीति । पुरस्तादिवेत्यपिशब्दाभिप्रायः ।

एवं प्रथमो हेतुर्विवृतः; द्वितीयं हेतुं विवरीतुमारभते—न तु रूपान्तर-मिति । अवभासत इति विपरिणम्यानुषङ्गः । यथा न रूपान्तरमवभासते तथा प्रतिपादयति—अर्थान्तरविषयत्वे त्विति । 'गौः' इति ज्ञानस्य वर्णेभ्योऽर्थान्तर-विषयत्वे तु सतीत्यर्थः । यथा वर्णविज्ञानानीति । पुरस्तनानि प्रत्येकवर्णवि-ज्ञानानि । परस्परविषयरूपप्रत्यवमर्शशून्यानीति । अन्योन्यस्य विषयभूतानि यानि

---

१. -दास्तत्रा- ख.

वैलक्षण्यं तु पूर्वोपलब्धीनामेकैकवर्णगोचरत्वादस्य च समुच्चितविषयत्वादिति नार्थान्तरविषयत्वं वैलक्षण्यमात्रात् सिध्यति । यदि वैकैकस्मात्त्रयमर्थान्तरमस्तु प्रत्ययस्य विषयः ; न तु तदतिरिक्तः कश्चिच्छब्दात्मा, वर्णपरित्यागेनान्यस्य बुद्धावप्रतिभासनात् । अथ मतम्—'गौः' इत्येकं

---

रूपाणि वर्णरूपाणि तेषां यः प्रत्यवमर्शः अन्योऽन्यत्र सम्भवी तेन परस्परं शून्यानीति । एकस्य वर्णविज्ञानस्य विषयभूतं वर्णरूपं नान्यस्मिन् वर्णविज्ञाने अन्यवर्णविषये प्रत्यवमृश्यत इत्यर्थः । प्रकाशमानरूपान्तराणीति । प्रकाशमानं परस्परतो रूपान्तर येष्विति । प्रकाशन्त इति । यथेत्यत्र समाप्यते । तथेदमपि स्यादिति । यथा वर्णविज्ञानेषु स्थितिस्तथेदमपि पश्चात्तनं ज्ञानं स्यात् । अत्रापि वर्णरूपप्रत्यवमर्शशून्यं शब्दान्तरं प्रकाशमानरूपान्तरं प्रतिभासेतेति यावत् । न च तदस्तीति भावः । तर्हि वैलक्षण्यस्य को हेतुः, अत आह—वैलक्षण्यं त्विति । पूर्वोपलब्धीनामस्य च परस्परं वैलक्षण्यमित्यर्थः । पूर्वोपलब्धीनामेकैकवर्णगोचरत्वादिति सुगमम् । अस्य च समुच्चितविषयत्वादिति । पश्चात्तनस्य ज्ञानस्य समुच्चिता वर्णा विषयो यस्य तस्य भावस्तत्त्वम् । समुच्चयविषयत्वादिति वा पाठः । इति नार्थान्तरविषयत्वं वैलक्षण्यमात्रात्सिध्यतीति । इतिहेतोर्न पश्चात्तनस्य ज्ञानस्य वर्णेभ्योऽर्थान्तरविषयत्वमेवम्भूतवैलण्यमात्रात्सिध्यतीत्यर्थः । एवं तावत् 'नार्थान्तरविषयत्वम् , क्रमोपलब्धसमस्तवर्णविषयत्वात्' इत्युक्तम् ; इदानीं यद्यवश्यमस्यार्थान्तरविषयतेष्टव्या , तर्ह्येष समुच्चय एवार्थान्तरमस्तु इत्याह—यदि वेति । अथवेत्यर्थः । एकैकस्मात् त्रयमर्थान्तरमस्तु प्रत्ययस्य विषय इति । पूर्वोपलब्धीनां विषयभूतादेकैकस्मादर्थान्तरं वर्णत्रयमस्य पश्चात्तनस्य ज्ञानस्य विषयोऽस्तु भवतु इति । 'गौः' इनि ज्ञानस्य अर्थान्तरविषयत्वे नास्माकं

---

१. वैलक्षण्यादित्यर्थः. ख.

विज्ञानम् । को वाहान्यथा ? ज्ञानं तु नैकम् । ज्ञेये तु तद्ग्राह्यतयैकार्थकारितया वैकत्वभ्रमः, एकत्वोपचारो वा वनादिवत् । अपि च शैघ्र्याल्पान्तरत्वाभ्यां गोशब्दे भवेदप्येकत्वभ्रमः । देवदत्तादिशब्दे तु

काचित्क्षतिः ; वर्णातिरिक्तशब्दनिषेधे तात्पर्यादित्याह—न तु तदतिरिक्तः कश्चिच्छब्दात्मेति । प्रत्ययस्य विषय इत्यनुषज्यते । पश्चात्तनस्य प्रत्ययस्य विषय इत्यर्थः । न चैतद्वैषम्यमात्रमित्याह—वर्णपरित्यागेनान्यस्य बुद्धावप्रतिभासादिति । यथोक्तम्—

"वर्णत्रयपरित्यागे बुद्धिर्नान्यत्र जायते ।" इति ।

अस्य च व्याख्या 'अर्थान्तरविषयत्वे तु यथा' इत्यादिका पूर्वफक्किकैवेति द्रष्टव्यम् । शङ्कते—अथ मतम् 'गौः' इत्येकं विज्ञानमिति । विज्ञानैकत्वं च विज्ञेयैकत्वे रमणीयतरं स्यादिति भावः । उत्तरमाह—को वाहान्यथेति । अन्यथेत्येतदेव व्याचष्टे—ज्ञानं तु नैकमिति । तुशब्दो भिन्नक्रमः न त्विति ज्ञानं नैवैकमित्यर्थः । किं पुनरुच्यते ? अत आह—ज्ञेये त्विति । क्वचित्पाठः ज्ञेयं तु नैकमिति । तत्र किं पुनर्युष्माभिरुच्यते तदाह—ज्ञेयं तु नैकमिति । इति योजना समञ्जसैव । यदि न ज्ञेयमेकम्, कथं तर्हि प्रतिपत्तृणामेकत्वाभिमानः ? अत आह—ज्ञेये त्विति । तद्ग्राह्यतयेति । एक ज्ञानग्राह्यतयेति । एकार्थकारितया वेति । एकस्यार्थस्य प्रयोजनस्यार्थप्रत्ययाख्यस्य या क्रिया तद्धेतुत्वस्वभावादित्यर्थः । एकत्वभ्रम इति । प्रतिपत्तृणामिति सिध्यति । तन्निमित्तश्च शब्दप्रयोगः 'गौरित्येकं पदम्' इत्यादिक इति भावः । भ्रान्तित्वे सार्वजनीनस्य प्रत्ययस्यापरितुष्यतां कृते प्रकारान्तरमाह—एकत्वोपचारो वा वनादिवदिति । धवखदिरपलाशा वनमिति यथा, यथा वा त्रैविद्यवृद्धाः परिषदिति । परिहारान्तरमाह—अपि चेति । शैघ्र्याल्पान्तरत्वाभ्यां गोशब्दे

१. -शब्दविषये. ख.

स्पष्ट एव भेदः प्रकाशते । तदुक्तम्—"न च प्रत्यक्षेभ्यो गकारादिभ्योऽन्यः शब्दात्मा, भेददर्शनाभावादभेददर्शनाच्च" । तथा—

"वैलक्षण्यं तु तस्येष्टमेकैकज्ञानतः स्फुटम् ।
वर्णरूपानुबोधात्तु[1] न तदर्थान्तरं भवेत् ॥

---

भवेदप्येकत्वभ्रम इति । गोशब्दे स्यादप्यज्झलोः संश्लेषात् शैघ्र्यादल्पान्तरत्वकारितादेकत्वभ्रमः ; न हि तत्र वर्णभेदमपि केचित्प्रतिपद्यन्ते ; पूर्वापरविदां तु न तत्रापि भ्रम इत्यर्थः । देवदत्तादिशब्दे तु स्पष्ट एव भेदः प्रकाशत इति । सर्वेषामेव प्रतिपत्तॄणामिति सिध्यति । अतो गोशब्दादौ भ्राम्यतां भ्रान्त्या वचनम् 'गौरित्येकपदम्' इति । ये पुनर्न भ्राम्यन्ति, तेषामुपचारः । देवदत्तादिशब्दे तु सर्वेषामुपचार एवेति भावः । अत्र वृद्धसम्मतिमाह—तदुक्तमिति । भाष्यमुपादत्ते—न चेति । प्रत्यक्षेभ्योऽन्यः शब्दात्मेति । अस्तीति शेषः । न च प्रत्यक्षेभ्योऽन्यः शब्दात्मास्ति । अथवा प्रत्यक्ष इत्यर्थसिद्धं द्रष्टव्यम् । तथा च क्वचित्पाठः—"न च प्रत्यक्षो गकारादिभ्यः" इति । तत्र प्रत्यक्षेभ्य इत्यर्थात्सिध्यति । शब्दात्मेति । शब्द इत्येव क्वचित्पाठः, क्वचित्तु गोशब्द इति । सर्वथा गकारादय एव प्रत्यक्षाः, न तदतिरिक्तः प्रत्यक्ष इत्युक्तम् । तत्र हेतुर्भेददर्शनाभावादभेदर्शनाच्चेति । पूर्वबुद्धिविषयेभ्यो वर्णेभ्यो भिद्यत इति भेदः स्फोटात्मा, तस्य दर्शनाभावात् ; न हि चरमे विज्ञाने वर्णरूपातिरिक्तं किञ्चन प्रथत इति । पूर्वज्ञानविषयेभ्यो न भिद्यन्त इत्यभेदा वर्णास्तेषां दर्शनाच्चेति । न चेति प्रत्यक्षत्वं चेन्निषिध्यते तदा तद्विषयप्रत्यक्षज्ञानाभावाद्वर्णविषयप्रत्यक्षज्ञानोदयाच्च कथं तत्कर्मत्वं स्यादिति ; अस्तित्वनिषेधे प्रमाणाधीनं सत्त्वं कथं प्रमाणाभावे स्यादिति योजना । वार्तिकमुपादातुमारभते—तथेति । वार्तिकमुपादत्ते—वैलक्षण्यं तु तस्येष्टमित्यादि । वैयाकरणास्तु गौरित्येवं गकारादि

---

१. बोधाच्च. ख.

यदि वार्थान्तरत्वं स्यादेकैकस्मात्त्रयस्य तु ।
वर्णत्रयपरित्यागे बुद्धिर्नान्यत्र जायते ॥

गौरित्येकमतित्वं तु नैवास्माभिर्निवार्यते ।
तद्ग्राह्यैकार्थताभ्रान्त्या शब्दे स्यादेकतामतिः ॥

---

विलक्षणं शब्दान्तरं प्रत्यक्षं गम्यत इत्याहुः । तत्तेषां भ्रान्तिरेव । भ्रान्तौ चेयमेव चित्रबुद्धिर्निमित्तम् । एकैकज्ञानाद्विलक्षणेयमन्त्यवर्णांशे च प्रत्यक्षा । तावतैव च 'प्रत्यक्षः स्फोटः' इति भ्रमः । तदिदमुक्तं पूर्वेण वार्तिकेन—

"चित्रबुद्ध्यानया भ्रान्त्या वर्णेभ्यो व्यतिरेकतः ।
पश्चाद्गौरिति विज्ञानं प्रत्यक्षं कैश्चिदिष्यते ॥"

इत्यनेन । तत्र चोद्यम्—कथं पुनरयं भ्रमः ? नन्वस्त्येवैकज्ञानाद्वैलक्षण्यम्, अत आह—

"वैलक्षण्यं तु तस्येष्टमेकैकज्ञानतः स्फुटम् ।
वर्णरूपानुबोधात्तु न तदर्थान्तरं भवेत् ॥"

सत्यमस्ति ज्ञानस्य वैलक्षण्यम् । ज्ञेयं तु वर्णरूपमेव, न वस्त्वन्तरम् । तदिति ज्ञेयं परामृशति । 'यदि वैकस्मात्त्रयम्' इत्यत्र वार्तिकमुपादत्ते—

"यदि वार्थान्तरत्वं स्यादेकैकस्मात्त्रयस्य तु ।"

अस्त्वर्थान्तरत्वं विषयस्य, तत्तु वर्णत्रयस्यैव ; वर्णत्रयं ह्येकैकस्मादर्थान्तरमिति । 'वर्णरूपपरित्यागे न' इत्यत्रोपादत्ते—

"वर्णत्रयपरित्यागे बुद्धिर्नान्यत्र जायते ।" इति ।

एतद्व्याख्यातपूर्वम् । 'अथ मतम्' इत्यत्रोपादत्ते—

"गौरित्येकमतित्वं तु नैवास्माभिर्निवार्यते ।" इति ।

शैघ्रयादल्पान्तरत्वाच्च गोशब्दे सा भवेदपि ।
देवदत्तादिशब्दे तु स्फुटो भेदः प्रतीयते ॥"

अत्रोच्यते —

**अन्यानुविद्धबोधेऽपि नान्यत्वमुपरुध्यते ।**
**एकरूपपरिच्छेदे कथमन्याप्रकाशनम् ॥ २४ ॥**

**न खल्वन्यरूपव्यतिभिन्नात्मा[1] कुतश्चिन्निमित्तादवबोधः प्रकाश-**

---

'ज्ञेये' इत्यत्राप्युपादत्ते—

"तद्ग्राह्यैकार्थताभ्रान्त्या शब्दे स्यादेकतामतिः ।" इति ।

तस्यैकस्य ज्ञानस्य ग्राह्या बहवोऽपि वर्णाः ; ततो ज्ञानगतमेकत्वं ग्राह्येष्वारोप्यते । तेनैकेन ज्ञानेन ग्राह्यतया—[2]एकप्रयोजनत्वं चास्ति, बहूनामपि वर्णानाम्—तेनैकार्थतया च कृतया भ्रान्त्या 'एकः शब्दः' इति मन्यन्त इति । तद्ग्राह्यैकार्थताभ्यां चेति पाठेऽपि तद्ग्राह्यतया एकार्थतया चोभाभ्यां शब्दे स्यादेकतामतिः इति । तद्ग्राह्यैकार्थताभ्यां चेति पाठे वार्तिकस्यैव विकल्पेन व्याख्या—एकत्वभ्रम एकत्वोपचारो वेति । भ्रान्त्येति पाठे भ्रान्तिग्रहणमुपचारस्याप्युपलक्षणम् । 'अपि च' इत्यत्रोपादत्ते—

"शैघ्रयादल्पान्तरत्वाच्च गोशब्दे सा भवेदपि ।
देवदत्तादिशब्दे तु स्फुटो भेदः प्रतीयते ॥" इति ।

सेति एकतामतिरित्यर्थः ।

परिहरति—**अत्रोच्यते**............**निश्चीयते** । चतुर्विंशः श्लोकः अन्यानुविद्धबोधेऽपीति । कारिकायाः पूर्वार्धं व्याचष्टे—न खल्विति ।

---

१. व्यक्ति- ख. २. Omitted एक—तद्ग्राह्यतया. ख.

मानो नान्यावलम्बन इति चतुरश्रम् । तथा हि—जातिप्रत्ययो व्यक्ति-

---

चतुरश्रमित्यन्वयः । अन्यरूपव्यतिभिन्नात्मेति । योऽन्यस्यावबोधस्य विषयोऽर्थः तस्य यद्रूपं ततोऽन्येन रूपेण ततोऽन्यस्य वा रूपेण व्यतिभिन्नः संभिन्नः आत्मा रूपं आकारो यस्यावबोधस्य स तथोक्तः । कुतश्चिन्निमित्तादिति । व्याख्येयमेत-त्प्रकृते 'ध्वनयः सदृशात्मानः' इत्यवेक्ष्य, जात्यादौ च तदुचिते निमित्ते योज्यम् । अवबोधः प्रकाशमानो नान्यावलम्बन इति चतुरश्रमिति । अवबोधः कुतश्चिन्निमित्तादन्यरूपव्यतिभिन्नात्मा अन्यरूपव्यतिभिन्नात्मतया प्रकाशमान इत्यन्वयः । तेन कारणेन नान्यावलम्बनः योऽस्य परमार्थतो विषयः तं नाव-लम्बत इत्येतन्न खलु चतुरश्रमिति । एतदेव विवृणोति—तथाहीति । उपरुध्यत इति वर्तमाननिर्देशात्सिद्धिः सर्वत्रोक्ता ; ततो दृष्टान्तेन दर्शयति—जाति-प्रत्ययो व्यक्तिविशेषस्वरूपसम्भेद इति । नार्थान्तरगोचरतां जहातीति वक्ष्यमाणेन सम्बन्धः । 'गौरयम्' इत्यादिजातिप्रत्ययो गोत्वादेरसाधारणो यो व्यक्तिविशेषस्तस्य यत्स्वं रूपमात्मा तेन जातेः सम्भेदे सत्यपीति । अथवा व्यक्तयो जात्याद्याश्रयद्रव्याणि, विशेषाः खण्डादयः । स्वरूपाणि स्वीयानि रूपाणि । व्यक्तिविशेषोभयापेक्षया स्वशब्दः । व्यक्तिगतानि रूपाणि नीलाद्यानि विशेषगतानि खण्डत्वादीनि तैर्जातेः सम्भेदे सत्यपीति । अथवा व्यक्ति-विशेषाणां जातिस्वरूपस्य च परस्परसम्भेदे सत्यपीत्यर्थः । श्लोके चान्यानु-विद्धस्य अन्येन वस्तुनानुविद्धस्य ततोऽन्यवस्तुनो बोधे सत्यपीति विग्रहः । अथवा प्रत्ययस्यैव सम्भेदः । तदाकारत्वं च तत्सम्भेदः प्रत्ययस्य । तदा च श्लोकेऽप्यन्यानुविद्धे बोध इति कर्मधारयः । नान्यत्वमुपरुध्यत इत्यस्य व्याख्या नार्थान्तरगोचरतां जहातीति । व्यक्तिविशेषस्वरूपतोऽर्थान्तरं[1] गोचरो यस्य जातिप्रत्ययस्य तस्य भावोऽर्थान्तरगोचरता, ताम् । एवं सत्यपि जाति

---

१. स्वरूपमर्थान्तरम् इति भवितव्यमिति भाति.

**विशेषस्वरूपसम्भेदे, अवयविज्ञानं भागरूपानुगतावयवसमवाये, चित्ररूपावभासिनी च प्रख्या अवयवगतनीलादिरूपभेदेऽपि, नार्थान्तरगोचरतां जहाति। न ह्यर्थान्तरसमवायि नीलानीलादिमात्रं चित्रम्, अवयविनो**

प्रत्ययो न जहातीति। श्लोके च स्वगोचरस्यानुवेधकतोऽन्यत्वं प्रत्ययेन नोपरुध्यत इति योजना। दृष्टान्तान्तरमाह— अवयविज्ञानं भागरूपानुगतावयवसमवाय इति। अत्रापि स एवान्वयः। भागशब्देनावयवानां करचरणकपालतन्त्वादीनां ये प्रत्यात्मका अवयवाः तेषां ग्रहणम्। रूपशब्देन चावयविगतनां धर्माणामवयवतद्भागगतानां चोपादानम्। तैरनुगता येऽवयवाः तैः समवायेऽवयविनः सत्यपीत्यर्थः। इदानीं श्लोकेऽपि अन्यानुविद्धस्य बोध इति विग्रहः। अन्यमपि दृष्टान्तमाह—चित्ररूपावभासिनी च प्रख्या अवयवगतनीलादिरूपभेदेऽपि नार्थान्तरगोचरतां जहातीति। अत्रापि 'चित्रमिदं चित्रमिदम्' इति चित्ररूपावभासिनी चित्राकारावभासिनी च प्रख्या प्रत्यक्षा संविदवयवगतनीलादिरूपभेदेऽपि चित्रावयविनो येऽवयवाः चित्रभागाः तद्गतानां नीलादिरूपाणां चित्रावयविगतनीलादिरूपभेदे सत्यपीत्यर्थः। अनेनान्यानुवेधो दर्शितः। यथा हि तुरगेऽवयविगुणा अवयविनि गुणानारभन्ते मिथश्च कार्यकारणवर्गयोर्भेदः, तथा चित्रतुरगेऽपीति स्थितिः इत्यनेन दर्शितं वेदितव्यम्। चित्रे नीलादिभेदोऽसिद्ध इत्यभिमानवतां कृतेऽप्याह—न ह्यर्थान्तरसमवायि नीलानीलादिमात्रं चित्रम्, अवयविनो नीरूपतया अचाक्षुषत्वप्रसङ्गादिति। अर्थान्तरसमवायि कुड्यादिगतं नीलमनीलं सितम्। आदिशब्देन पीतादि संस्थानविशेषश्च केवलं चित्रं न वस्त्वन्तरमिति च न वक्तव्यम्। कुतः अवयविनोऽचाक्षुषत्वप्रसङ्गात्। प्रकाशते हि चक्षुषा चित्रावयवी

१. Added अहो. ख.

नीरूपतया अचाक्षुषत्वप्रसङ्गात् । सर्वं चाक्षुषं प्रभारूपानुविद्धबुद्धिबोध्यम्, न ततोऽन्यविषयतामुज्झति । अथ रूपान्तरप्रकाशस्तत्र, न त्विह तथा ।

---

'अयं तुरङ्गमः' इति । न च नीरूपस्य चक्षुषा प्रकाशनमवयविनः क्वचिदपीत्यर्थः । नीरूपं हि रूपं जात्यादि च चाक्षुषमेव ; द्रव्यं तु नीरूपं न चाक्षुषमिति दर्शितमवयविन इति । अथ द्रव्याणामपि ये दिक्कालादीनां चाक्षुषत्वमिच्छन्ति, तेऽपि नारब्धस्य द्रव्यस्यावयविनो नीरूपस्य चाक्षुषत्वं क्वचिद्दृष्टमिति वक्तुं समर्था इति दर्शितं अवयविन इत्यनेनैव । दृष्टान्तान्तरमाह—सर्वं चाक्षुषं प्रभारूपानुविद्धबुद्धिबोध्यम्, न ततोऽन्यविषयतामुज्झतीति । सर्वं हि चाक्षुषं वस्तु रूपरूपप्रभृति प्रभारूपेण प्रकाशते, न रूपेणानुविद्धा या बुद्धिस्तया बोध्यमेव । न च ततः कारणात्प्रभातोऽन्यवस्तुविषयतामुज्झति जहातीति । एवं तावद्वर्णरूपानुविद्धत्वादिति हेतोः पूर्वार्धेनानैकान्तिकत्वं दर्शितमिति व्याख्यातम् । इदानीमुत्तरार्धमवतारयितुमाशङ्कामाह—अथ रूपान्तरप्रकाशस्तत्र, न त्विह तथेति । तत्र दृष्टान्तेषु रूपान्तरप्रकाशोऽस्त्येव ; अनुवेधकतोऽन्यज्जात्यादिरूपं प्रकाशते ; न त्विह गकारादितोऽन्यत्किञ्चिद्रूपं प्रकाशत इति । अनेन च "रूपान्तराप्रतिभासनाच्च" इत्यनुभाषितम् । परिहरति—कथं नास्तीति । अस्त्येवेत्यर्थः । अनेन च 'कथमन्याप्रकाशनम्' इति व्याख्यातम् । हेतुमाह—यदेकः शब्दात्मा स्फुटं प्रकाशत इति । तदा कथं नास्तीति सम्बन्धः । स्फुटं तावदेकरूपः प्रकाशत इति वर्णवादिनामप्यविवादसिद्धमेतत् । यथोक्तम्—

"तद्ग्राह्यैकार्थताभ्रान्त्या शब्दे स्यादेकताभ्रमः ।" इति ।

अनेन च 'एकरूपपरिच्छेदे' इति व्याख्यातम् ।

ननु वर्णा एवाक्षजायां बुद्धौ प्रकाशन्ते ; अत एकत्वबुद्धिविषयत्व-

**कथं नास्ति ? यदेकः[1] शब्दात्मा स्फुटं प्रकाशते । न चासौ वर्णानामात्मा, तेषां भेदादैक्यविरोधात् । पटादयोऽपि तन्त्वादिभ्य एवमेव[2] भेदेन व्यवस्थाप्यन्ते ॥**

---

मपि तेषामेव कथंचिन्निर्वोढव्यम् ; अत आह—न चासौ वर्णानामात्मेति । यः प्रकाशते एकः शब्दात्मा, नासौ वर्णानामात्मेति । कारणमाह—तेषां भेदादैक्यविरोधादिति । न हि भिन्नानां स्वाभाविकमेकत्वं सम्भवतीति भावः । अत्रैव दृष्टान्तमाह—पटादयोऽपि तन्त्वादिभ्य एवमेव भेदेन व्यवस्थाप्यन्त इति । एवमेवेति तेषां भेदादैक्यविरोधादित्यर्थः । पटादीनां तन्त्वादिभ्यो भेदोऽप्यत एव कारणादित्यर्थः ॥

इति स्फोटसिद्धिव्याख्यायां
चतुर्विंशः श्लोकः

---

१. यदैकः. ख. २. Added हि. क.

तद्ग्राह्यैकार्थताभ्यां च शब्देषु वदतैकताम् ।
विवेकहेत्वभावेन सर्वत्रोत्सारिता भवेत् ॥ २५ ॥

एकबुद्धिग्राह्यतयैकार्थकारितया च शब्देष्वेकतां ब्रुवन् सर्वत्रैकतामवजानीते, विशेषाभावात् । तथा हि—पटादयोऽप्येकविज्ञानविषया

---

ननु भाविकमेकत्वं मा भूद्वर्णानां भेदप्रत्ययविरोधात् ; औपाधिकं तु तदस्माभिरिष्यते ; अत एवोक्तम्—ज्ञेये तु तद्ग्राह्यतयेत्यादि ; अत आह—तद्ग्राह्यैकार्थताभ्यां चेति । अयं च पञ्चविंशः श्लोकः । उत्सारितेत्यत्र एकतापरामर्शार्थं सेति द्रष्टव्यम् । तद्ग्राह्यैकार्थतामित्येतद्व्याचष्टे—एकबुद्धिग्राह्यतयैकार्थकारितया चेति । तद्ग्राह्येति तच्छब्देनैकबुद्धेः परामर्शः । ततश्चात्रापि सम्बन्धः । एकोऽर्थो येषां शब्दानां तेषां भाव एकार्थता । तृतीयान्तं चेदमिति दर्शितमनेन । शब्देष्वेकतां ब्रुवन्निति । अनेन द्वितीयपादो व्याख्यातः । चतुर्थपादं व्याचष्टे—सर्वत्रैकतामवजानीत इति । तृतीयपादं व्याचष्टे—विशेषाभावादिति । न हि सर्वतोऽस्ति शब्दस्य विशेषः कश्चित्, येन व्यवस्था स्यात् । शब्देष्वौपाधिकः अन्यत्र भाविक इति विशेषो हि विवेकहेतुः ; न च सोऽत्र कश्चित्संभवतीति विवेकहेत्वभावेनेति ब्रुवतोऽभिप्रायः । एतदेव प्रतिपादयितुमाह—तथा हीति । पटादयोऽप्येकविज्ञानविषया एकार्थकारिणश्चेति तन्निबन्धनमेकत्वं लभेरन्निति । एकविज्ञानविषयत्वम् 'एकः पटः' इत्यादिषु सर्वत्रास्ति ; एकार्थकारित्वं च—पटस्य यत्कार्यं तदेव तु सर्वेषामवयवानां कार्यम्—इत्यभ्युपगमादस्त्येवेति हेतोस्तन्निबन्धनं तद्ग्राह्यैकार्थताहेतुकमेकत्वं पटादयोऽपि लभेरन् पटाद्यवयविनोऽपि स्वीकुर्युरिति ।

नन्वेवं घटादिष्वेकतावज्ञाने सत्यपि कथं सर्वत्रोत्सारिता भवेदित्युच्यते ?

---

१. उत्सादितः. ख.    २. ततश्च तत्रापि. ख.

**ऐकार्थकारिणश्चेति तन्निबन्धनमेकत्वं लभेरन् यावदपकर्षपर्यन्तगतमर्थवस्तु ; तदपि चैतद्विधानुपातीति क्वेदं भाविकमेकत्वमास्पदं बध्नातु ? बुद्धाविति चेत् तन्न, तत्रापि विषयतो भक्तिसम्भवाद्विवेक-**

---

अत आह—यावदिति । अवयविनस्तावद्देवदत्तादयः तद्ग्राह्यैकार्थताभ्यां करचरणाद्यवयवा एवेत्येकस्तावदपकर्षः ; पुनः करोऽपि बाहुमूलोपबाहु[2]प्रकोष्ठमणिबन्धतलाङ्गुल्यादयोऽवयवा एव तद्ग्राह्यैकार्थताभ्यामित्यन्योऽपकर्षः ; एवमापरमाणुभ्यो योज्यम् । यावदित्यव्ययम् । यावति प्रदेशेऽपकर्षपर्यन्तगतमपकर्षपर्यवसानगतम् । यत्र पुनरपकर्षो न सम्भवी तद्गतमर्थवस्त्वास्ते तावत्पटादयः तन्निबन्धनमेकत्वं लभेरन्नित्यन्वयः । अर्थवस्त्विति । द्वितयानि हि वस्तूनि शब्दाश्चार्थाश्च । तत्र यदर्थवस्तूनां मध्येऽपकर्षावसानगतमर्थवस्तु परमाणुरूपमिति । तर्हि यत्परमाणुरूपमर्थवस्तु, तदेव भाविकमेकत्वं लभतामिति चेत्तत्राह—तदपि चैतद्विधानुपातीति । अन्तिमापकर्षगतमप्यर्थवस्तु एकबुद्धिग्राह्यतयैकार्थकारितया चैकत्वभाजनं भवेदित्यर्थः । अस्ति हि तत्राप्येकबुद्धिग्राह्यत्वं निरवयवः परमाणुरिति । एकार्थकारित्वं च तस्त्वेनैवानुमानात् । यः परमाणुर्भाविकैकत्वभागभिमतः, सोऽप्यैक्यमौपाधिकं भजेतैवंवादिनामिति । एतदुक्तं भवति—यदि भवता शब्दवस्त्वेवमपलप्यते तर्हि तेनैव क्रमेणार्थवस्त्वपलप्यतामिति । एवं च सर्वत्रोत्सारणं सत्यमेवेत्याह—इति क्वेदं भाविकमेकत्वमास्पदं बध्नात्विति । न क्वापीत्यर्थः । इति हेतोः क्व विषये इदं त्वयापसार्यमाणं भाविकं स्वाभाविकमेकत्वमास्पदमाश्रयं बध्नातु प्रतिष्ठापयतु ? न विमृश्यमाने क्वचिदपि, शब्दार्थव्यतिरेकेण कस्यचिदभावात् । सत्यमर्थवस्त्वेव बुद्ध्यात्मकमस्त्येकम्, यद्ग्राह्यतया हि वर्णानामेकत्वम्, तत्रैव बुद्धौ भाविकमेकत्वमास्पदं बध्नात्विति शङ्कते —बुद्धाविति चेदिति । परिहरति—

---

१. एकार्थक्रिया- क. २. Added कूर्पर. ख.

हेत्वभावेन निश्चयाभावात् ; न चेदं क्वचन भाविकमेकत्वं निश्चीयते ॥

तन्नेति । कारणमाह—तत्रापि विषयतो भक्तिसंभवादिति । यथा बुद्धेरेकत्वेन विषयस्यैकत्वं तथा विषयस्यैकत्वाद्बुद्धावप्येकत्वमुपचर्यतामिति भक्तिरुपचारः । ऐतिशानस्य[1] भक्तिवानत्वादितिवत् विषयतः विषयैक्यात् कारणात् बुद्धावप्येकत्वस्य भक्तिसंभवादिति । नन्वेकमेव भाक्तमन्यन्मुख्यमेव, कथमिदमुच्यते तत्रापीति ? अत आह—विवेकहेत्वभावेन निश्चयाभावादिति । एतत्तु तृतीयपादस्य व्याख्यानान्तरम्—अत्रैकत्वं भाविकम्, अत्र पुनरौपाधिकमिति विवेके न कश्चिद्धेतुरुपलभ्यते ; अतश्च निर्णयाभावः—अत्र भाविकम्, अत्र भाक्तमिति ; तस्माद्विषयतो बुद्धौ भक्तिः संभवत्येवेति । ननु सर्वत्रोत्सारणं तेषां प्रमाणान्तरेण भाविकैकत्वनिश्चयात् ; स्फोटात्मा तु न प्रत्यक्षवेद्यः, वर्णानामेव प्रत्यक्षधीवेद्यत्वात् ; अतो न शब्दे भाविकैकत्वसम्भव इति प्रमाणतो व्यवस्थेत्यत आह—न चेदं क्वचन भाविकमेकत्वं निश्चीयत इति । न हि घटादिबुद्धिभ्यो गौरिति बुद्धिर्विशिष्यते, तत्र विधाप्रामाण्यकारणाभावात् ; अतः प्रमाणान्तरेणापि शब्देषु भाविकैकत्वासम्भवे घटादिष्वपि न क्वचन भाविकमेकत्वं निश्चीयत इति । अथवा बुद्धिरेका वर्णात्मानस्तु तद्विषया भिन्ना एवेति कथं विषयतो भक्तिसम्भवः ? अत आह—न चेदं क्वचन भाविकमेकत्वं निश्चीयत इति । यदि विषये भाविकमेकत्वं न निश्चीयते तर्हि बुद्धावपि न निश्चीयते, बुद्धेरपि विषयेण तुल्ययोगक्षेमत्वादित्यर्थः ॥

इति स्फोटसिद्धिव्याख्यायां
पञ्चविंशः श्लोकः

१. ऐक्यात् ज्ञानस्य विषये भक्तिमभवत् इति, गौरिति ज्ञानस्य व्यक्तिगतैकत्वादिवत् इति वा स्यात् पाठः ।

अपि च—

अर्थस्याधिगमो नर्ते पदरूपावधारणात् ।
तदर्थबोधाद्यदि[1] च व्यक्तमन्योन्यसंश्रयः ॥ २६ ॥

न खल्वविदितपदरूपावधिरर्थं प्रत्येति, अवध्यन्तरपरिग्रहे तत्त्वेऽपि वर्णानामप्रत्ययात्[2] । तत्रार्थप्रतीत्या पदरूपावधिविशेषं[3]मुपकल्पयन् दुरुत्तरमितरेतराश्रयमाविशति । न चैकार्थसम्बन्धाख्यानमेकपदतामापा-

---

उपस्कारमाह—अपि चेति । अर्थस्याधिगमो नर्त इति षड्विंशः श्लोकः । श्लोकं व्याचष्टे—**न खलु........अवकल्पते** । अस्यार्थः—न खल्वविदितपदरूपावधिरर्थं प्रत्येतीति । एतावन्तो वर्णा एकं पदमिति वर्णानां पदत्वरूपस्य योऽवधिरादिमो वर्णोऽन्तिमो वर्णश्च तमविदितवतो नार्थप्रत्यय उदेति । कारणमाह—अवध्यन्तरपरिग्रहे तत्त्वेऽपि वर्णानामप्रत्ययादिति । यथा 'मारः' इति मनोभवमभिदधाति वर्णद्वयम्; 'कुमारः' इति पूर्वमर्थं नाभिधत्ते, अपि तु वयोऽवस्थाविशेषवन्तं पुरुषम्; तथा 'मारकः' इति प्राणवियोगकारिणम् । अतस्तत्त्वेऽपि वर्णानामवध्यन्तरपरिग्रहे नार्थप्रत्यायकत्वमिति पदरूपावधारणाधीनमर्थप्रत्यायकत्वमिति स्थितम् । उत्तरार्धं व्याचष्टे—तत्रार्थप्रतीत्या[4] पदरूपावधिविशेषमुपकल्पयन् दुरुत्तरमितरेतराश्रयमाविशतीति । तत्र पदरूपावधारणाधीनेऽर्थाधिगमे सतीत्यर्थः । अर्थप्रतीत्या पदरूपावधिविशेषमुपकल्पयन्निति । अर्थप्रतीत्यधीनं पदरूपावधिविशेषावधारणमिति साधयन्नित्यर्थः । न चान्यतोऽन्यतरसिद्धिरित्युक्तम्—दुरुत्तरमिति । आविशतीति । स्वयमेव मोहादिति भावः ।

---

१. दिति चेत्. मूलम्.
२. अर्थप्रत्ययात्. मूलम्.
३. Omitted विशेषे- मूलम्.
४. प्रतीत्युपपत्त्या. ख.

दयति, वर्णात्मनामनाश्रितपदरूपाणामप्रत्यायकत्वात्, असम्बन्धिनां

---

अत्र च श्लोके पूर्वश्लोकदूषितयोस्तद्ग्राह्यैकार्थतयोः अन्यतरस्यामेकार्थतायामेव विशेषतो दूषणमुक्तमिति वेदितव्यम् । तदर्थबोधाद्यदि चेति । तत् पदरूपावधारणं यदि चाश्रीयते । चकारः पूर्वार्धसमुच्चयार्थः । नन्वतोऽस्ति पदावधारणम् । कुत इति चेत्सम्बन्धाख्यानात् यावतां वर्णानामेकेन केनचिदर्थेन सम्बन्ध आख्यायते 'गौरिति वर्णाः सास्नादिमतो वाचकाः' इति, तावतां चैकपदतावधार्यते, पुनश्चार्थोऽधिगम्यत इति कुत इतरेतराश्रयावेश इत्यत आह—न चैकार्थसम्बन्धाख्यानमेकपदतामापादयतीति। प्रथमं वर्णानामर्थसम्बन्धं गृहीत्वा पश्चात्तेषां पदत्वमवासीयत इति न संभवतीत्यर्थः । कारणमाह—वर्णात्मनामनाश्रितपदरूपाणामप्रत्यायकत्वात्, असम्बन्धिनां सम्बन्धाख्यानायोगादिति। वर्णात्मनामिति मध्ये स्थितं तन्त्रेण पूर्वप्रतिज्ञया परेण हेतुनिर्देशेनापि सम्बध्यते । नाश्रितं पदरूपं यैर्वर्णात्मभिस्ते तथोक्ताः । अप्रत्यायकत्वादसम्बन्धिनामिति । अनाश्रितपदरूपत्वमप्रत्यायकत्वे हेतुः । पदं हि पदार्थस्य बोधकम्, "लोके येष्वर्थेषु प्रसिद्धानि पदानि" इति "संहत्यार्थमभिदधति पदानि वाक्यम्" इति च स्थितत्वात्[1]। तेनाश्रितपदरूपाणामेव प्रत्यायकत्वं नेतरेषामिति । असम्बन्धिनामिति । अर्थासम्बन्धिनामिति । असम्बन्धित्वे पुनरप्रत्यायकत्वं हेतुः ; प्रत्याय्यप्रत्यायकभावो हि पदपदार्थयोः सम्बन्धः । यथोक्तम्—"अथ सम्बन्धः कः? यच्छब्दे विज्ञाते सत्यर्थो विज्ञायत इति", "यच्छब्दे ज्ञात इत्येवं शक्तिरेवात्र कथ्यते[2] ।" इति च । सम्बन्धाख्यानायोगादिति । अत्रासम्बन्धित्वं हेतुः । वर्णात्मनां सम्बन्धित्वाभावान्नार्थेन सह सम्बन्धाख्यानसम्भवः ; सम्बन्धिनोर्हि सम्बन्धः शक्यते कर्तुं नासम्बन्धिनोरिति । एवं च पदत्वावधारणाधीनं सम्बन्धाख्यानमिति

---

१. Omitted स्थितत्वात्. ख. २. कीर्त्यते. चौ. मुद्रिते.

सम्बन्धाख्यानायोगात् । सम्बन्धाख्यानात्तु पदभावे इतरेतराश्रयत्वम् । पदत्वाद्धि सम्बन्धित्वे सत्याख्यानम् आख्यानाच्च पदभावे सम्बन्धितेति । व्यवस्थितं हि वाचकरूपमाख्यायते, न त्वाख्यानाधीनैव वाचकता ।

---

स्थितम् । यदि त्वन्यथाश्रीयते ततो दोष इत्याह—सम्बन्धाख्यानात्तु पदभावे इतरेतराश्रयत्वमिति । इतरेतराश्रयत्वमेव दर्शयति—पदत्वाद्धि सम्बन्धित्वे सति आख्यानम् आख्यानाच्च पदभावे सम्बधितेतीति । पदत्वकृतात्सम्बन्धित्वादाख्यानं सिध्यति, आख्यानकृताच्च पदभावात् सम्बन्धितासिद्धिरितीतरेतराश्रयत्वमित्यर्थः । चक्रकं वा । पदत्वात्सम्बन्धित्वं स्यात् । सम्बन्धित्वाच्चाख्यानं सिध्यति । आख्यनाच्च पदत्वसिद्धिरिति । एतद्द्वयमुभयथापि विकल्पेन वक्तुं शक्यमेव । निबन्धनकृता त्वितरेतराश्रयत्वं श्लोकव्याख्यानत्वादुक्तमिति वेदितव्यम् । पूर्वत्र त्वितरेतराश्रयत्वमेवेति श्लोके तदुपादानम् । श्लोकस्य चास्मिन् व्याख्यान एवं योजना—अर्थस्याभिधेयस्याधिगमः पदसम्बन्धितयावगमः पदरूपावधारणादृते न सिध्यति; तच्च पदरूपावधारणं यद्यर्थसम्बन्धबोधाधीनम्, अतो दोष इति ।

नन्वाख्यानात्सम्बन्धित्वमभ्युत्पाद्य सम्बन्धो विधीयताम्; यथा "यदाग्नेयः" इत्यत्र द्रव्यदेवताविशिष्टकर्मविधिः; अत आह—व्यवस्थितं हि वाचकरूपमाख्यायते, न त्वाख्यानाधीनैव वाचकतेति । व्यवस्थितं प्रतिष्ठितं नित्यावस्थितमित्यर्थः । हिशब्दः प्रसिद्धौ । वाचकरूपं वाचकशक्तिमच्छब्दरूपम् । आख्यायते आख्यानेन ज्ञाप्यते, न तु क्रियते । तदाह—न त्वाख्यानाधीनैव वाचकतेति । यथोक्तम्—

"शब्दार्थानादितां मुक्त्वा सम्बन्धानादिकारणम् ।
न स्यादन्यदतो वेदे सम्बन्धादिर्न विद्यते ॥" इति ।

---

१. इत्युक्तम्. ख. २. अभ्युत्पाद्य. ख.

**देवदत्तादिशब्देषु च नार्थप्रत्ययमपह्नुत्यैकपदप्रत्ययोऽनुज्ञानमर्हति ; न हि पदप्रत्ययमन्तरेण सोऽवकल्पते ॥**

---

ननु देवदत्तादिशब्दा अद्यतनैरद्यतनेष्वर्थेषु सङ्केत्यन्त एव । तत्र हि सम्बन्धः क्रियते न त्वाख्यायते । यथा च तत्र वर्णरूपाणामेव सम्बन्धकरणं कृतसम्बन्धानां च वर्णानां पदत्वमाश्रीयते, तद्वत् गवादिष्वपि सम्बन्ध-विज्ञानं भविष्यति ; न हि करणकथनयोः कश्चिद्विशेषो लक्ष्यते ; अत आह—देवदत्तादिशब्देषु च नार्थप्रत्ययमपह्नुत्यैकपदप्रत्ययोऽनुज्ञानमर्हति ; न हि पदप्रत्ययमन्तरेण सोऽवकल्पत इति । देवदत्तादिशब्देष्वपि नार्थप्रत्ययमपह्नुत्यार्थ-प्रत्ययं स्वकारणत्वेनागृहीत्वा एकपदप्रत्ययोऽनुज्ञानमर्हति । अपह्नुत्येत्यस्य अर्हतीत्युत्तराक्रिया । तेष्वपि पदत्वप्रत्ययोऽर्थप्रत्ययाधीन इत्यर्थः । अनुज्ञानं च वर्णवादिभिरिति द्रष्टव्यम् । एवमर्थप्रत्ययाधीनं पदत्वज्ञानमित्युक्तम् । पदप्रत्ययाधीनं चार्थज्ञानमित्याह—न हि पदप्रत्ययमन्तरेण सोऽवकल्पत इति । हिशब्दश्चार्थः । न हि पदप्रत्ययमन्तरेण सोऽर्थप्रत्ययोऽ-वकल्पत इति । एवं तावत् 'मेये तु तद्ग्राह्यतया' इत्यादिकं परिहृतम् । इदानीम् 'अपि च, शैघ्रयाल्पान्तरत्वाभ्यां गोशब्दे भवेदप्येकत्वभ्रमः, देवदत्तादिशब्दे तु स्पष्ट एव भेदः प्रकाशते' इत्येतत्परिहरन्नाह—देवदत्तादि-शब्देषु च नार्थप्रत्ययमिति । देवदत्तादिशब्देषु चैकपदप्रत्ययोऽनुज्ञानमर्हति ; युष्माभिरेकपदप्रत्ययोऽनुज्ञातव्य एव , न तु निषेद्धव्य इति । कुत इत्याह—नार्थप्रत्ययमपह्नुत्येति । अर्थप्रत्ययं नापह्नुत्येत्यन्वयः । यद्येकपदप्रत्ययो नानुज्ञायते ततोऽर्थप्रत्ययोऽपह्नोतव्यः , कारणाभावे कार्याभावात् । अतोऽर्थ-प्रत्ययमनपह्नुत्य एकपदप्रत्ययोऽनुज्ञायताम् । कथं पुनरेकपदप्रत्ययानुज्ञाभा-वेऽर्थप्रत्ययापह्नवः प्रसज्यते ? अत आह—न हि पदप्रत्ययमन्तरेण सोऽवकल्पत इति । पदप्रत्ययो हि पदार्थप्रत्ययस्य कारणम् , "पदानि हि स्वं स्वमर्थमभिधाय"

इति, ''शब्दविज्ञानात्'' इति चोक्तत्वात् । हिशब्दो हेतौ प्रसिद्धौ वा । क्वचित्पाठोऽवज्ञानमिति । देवदत्तादिशब्देषु च यदर्थप्रत्ययमपह्नुत्य यदेकपदप्रत्ययस्यावज्ञानं क्रियते तन्नार्हत्येकपदप्रत्ययः । कुत इत्याह---न हि पदप्रत्ययमन्तरेणेति । स इति अर्थप्रत्ययः । स हि प्रमाणसिद्धः सार्वजनीनश्चेति नापह्नवमर्हति । न च तत्कारणभूतैकपदप्रत्ययोऽपह्नवमर्हति । प्रत्यक्षसिद्धत्वादर्थप्रत्ययस्य च तमन्तरेणानुपपत्तेः इति । क्वचित्पाठोऽपज्ञानमिति । अपभ्रष्टं ज्ञानमपज्ञानं मिथ्याज्ञानमिति यावत् । भावप्रधानस्य निर्देशः । भ्रान्तित्वमित्यर्थः । अर्हतीत्युत्तरक्रिया ॥

इति स्फोटसिद्धिव्याख्यायां

षड्विंशः श्लोकः

भिन्नक्रमेऽपि विज्ञाने समूहिषु न भेदवान् ।
समूहः पदरूपं तु स्पष्टभेदं प्रतीयते ॥ २७ ॥

यदि खलु वर्णसमूहमात्रावलम्बना पदप्रख्या स्यात् नदीदीनजराराजेति स्पष्टं भेदेन पदं प्रतीयते स्फुटश्चेह श्रुतिभेदः । न हि समूहिना-

---

दूषणान्तरमाह—**भिन्नक्रमेऽपि ........प्रत्यक्षं पदम्** । सप्तविंशः श्लोकः भिन्नक्रमेऽपीति । भिन्नः क्रमो यस्य विज्ञानस्य विषयतयास्तीति विग्रहः । क्वचित्पाठः भिन्नेऽपि क्रमविज्ञान इति । क्रमभेदोऽत्र क्रमविज्ञानभेदेन विवक्षितः । कारिकां व्याचष्टे—यदि खलु वर्णसमूहमात्रावलम्बना पदप्रख्या स्यादिति । मात्रशब्देन स्फोटं व्यावर्तयति । किं पुनस्तदा भवति ? तदाह—नदीदीनजराराजेतीति । क्वचित्तु गवेवेगनदीदीनेति पाठः । गव इत्यक्षरद्वयं सम्प्रदानभूतां गामभिवदति । वेगेति संस्कारविशेषसम्बुद्धिः । नदीति समुद्रवाहिन्यभिधीयते । दीनेति खिन्नसम्बुद्धिः । जरेति वृद्धवयस्त्वम् । राजेति राजृदीप्ताविति लोटो मध्यमः । स्पष्टं भेदेन पदं प्रतीयत इति । इत्यादौ स्पष्टं भेदेन भिन्नतया पदं जराराजेत्यादिकं सर्वेषां सम्प्रति प्रतीयत इत्यविवाद इत्यर्थः । प्रतीयेतेति पाठे स्पष्टपदभेदप्रतीतिराश्रयणीया सर्ववादिभिरित्यर्थः । ततः किमित्याह—स्फुटश्चेह श्रुतिभेद इति । इह वार्णवादिपक्षे जराराजेत्यादौ श्रवणमात्रभेद एव केवलोऽस्ति, न तु श्रूयमाणशब्दवस्तुभेदः कथंचिदपि विद्यत इत्युक्तमित्यर्थः । क्वचित्पाठः स्पष्टाभेदो न प्रतीयत इति । यो वर्णवादिनामभिमतः वर्णानामभेदात्पदाभेदः, स न प्रतीयत इत्यर्थः । किं तर्हीत्याह—स्फुटश्चेह श्रुतिभेद इति । श्रुतिः श्रूयमाणः शब्दः । इह जराराजेत्यादौ शब्दभेदः स्फुटः, न तु शब्दाभेद इति । अन्यः पाठः स्पष्टं पदभेदेन प्रतीयेतेति । पदभेदो नेत्यपपाठः । पदभेदेनेति पाठेऽप्येषा योजना—

मुपलब्धिक्रमभेदेऽपि समूहबुद्धिर्भेदः । तथा हि—दशान्तादितरतो वोपलम्भक्रमे न पटबुद्धिर्भेदवती; नापि वनबुद्धिर्धवाम्राद्युपलब्ध्यानुपूर्व्यनानात्वे । तदेवमभिन्नेषु भिन्नेषु च वर्णात्मसु यन्नानैकं च प्रकाशते, तत्प्रत्यक्षं पदमिति ।

---

जराराजेत्येतत्स्पष्टं पदभेदेन भिन्नपदतश्चेत्यादि पूर्ववत् । अथ वा इत्यादौ स्पष्टं पदभेदे पदभेदमधिकृत्य न प्रतीयेत न प्रतीतिर्भवेदिति भावे लकार इत्यादि योज्यम् । एवं तावत् पदरूपं तु स्पष्टभेदं प्रतीयत इति व्याख्यातम् । सम्प्रति पूर्वभागं व्याचष्टे—न हि समूहिनामुपलब्धिक्रमभेदेऽपि समूहबुद्धिर्भेद इति । समूहिषु क्रमविज्ञाने भिन्नेऽपि न समूहो भेदवान् प्रतीयत इति व्याख्यातमनेन । अस्तीति शेषः । एतदेवोदाहरति—तथा हि दशान्तादितरतो वोपलम्भक्रमे न पटबुद्धिर्भेदवतीति । केशान्त इतिवद्दशान्तशब्दः ; अथ वा पटस्य दशारूपादन्तादग्रादिति । अथ वा दशान्तात् दशाया एवान्तादवसनात् दशाया निजादन्तादिति । इतरतो वेति । पटस्य पुच्छादित्यर्थः । ल्यब्लोपे पञ्चमी, दशान्तमारभ्येतरद्वारभ्येति । उपलब्धिक्रम इति । सतीति शेषः । जायमाना इति वा । जायमानशब्दाक्षेपे "भुवः प्रभवः" इति वा पञ्चमी । न पटबुद्धिर्भेदवतीति । विशेषवतीति वा पाठः । दृष्टान्तान्तरमाह—नापि वनबुद्धिर्धवाम्राद्युपलब्ध्यानुपूर्व्यनानात्व इति । क्वचिद्धवाम्रः खदिरः—इत्यादिकमुपलब्ध्यानुपूर्व्यम्, क्वचिद्धवाम्रौ खदिरः—इत्यादिकम् ; न च तन्नानात्वेऽपि वनबुद्धिर्विशेषवती दृष्टेति । पूर्वत्राभिन्नाः समूहिन इह भिन्ना इति विशेषो द्रष्टव्यः । एवं दृष्टान्तं दर्शयित्वोपनयमाह—तदेवमभिन्नेषु भिन्नेषु च वर्णात्मसु यन्नानैकं च प्रकाशते तत्प्रत्यक्षं पदमितीति । अभिन्नेषु जराराजेत्यादिषु भिन्नं भिन्नेषु गकारादिष्वभिन्नं यत्तत्त्वं प्रकाशते, तत् प्रत्यक्षं पदमित्यस्माभिरुच्यत इति । एवं च वदता यत्पूर्वमुक्तम् 'अर्थान्तरविषयत्वे यथा वर्णविज्ञानानि परस्परविषयभूतरूपप्रत्यवमर्शशून्यानि

---

१. नानात्वेऽपि. मूलम्. २. Omitted भूत. ख.

यानि तु साधनानि—

“वर्णा वा ध्वनयो वापि स्फोटं न पदवाक्ययोः।
व्यञ्जन्ति व्यञ्जकत्वेन यथा दीपप्रभादयः ॥

सत्त्वाद्घटादिवच्चापि साधनानि यथारुचि ।
लौकिकव्यतिरेकेण कल्पितेऽर्थे भवन्ति हि ॥

---

प्रकाशमानरूपान्तराणि प्रकाशन्ते, तथेदमपि स्यात्’ इति, तदस्त्येवात्रेति दर्शितं वेदितव्यम् । समूहिषु यत्क्रमभेदज्ञानं तत्समूहाभेदेन व्याप्तं दृष्टम् ; अतो व्यापकविरुद्धः समूहभेदः प्रतीयमानः समूहिभेदमपि निवर्तयति ; अतो न वर्णात्मानः प्रतीयन्ते, किन्तु तदतिरिक्तं तत्त्वमेकमिति स्थितम् ॥

‘पदरूपं तु स्पष्टभेदं प्रतीयते’ इत्येतदुपजीव्य वर्णवादिनामनुमानानि दूषयिष्यन् प्रथमं तान्येवानुमानान्युपन्यस्यति—**यानि तु साधनानि**.... **तत्प्रतिपादनात्** । इति शब्दोऽत्र द्रष्टव्यः । साधनान्यनुमानानि । वार्तिकार्थस्तूत्तरत्र स्पष्टीभविष्यति ।

एवं साधनान्युपन्यस्य तेषां दूषणमारभते—**तत्र**···**अनेकान्तः** । इदमाकूतम् । तत्रेति तेषु साधनेष्वित्यर्थः । एतच्च यानि पुनरित्यनेनानुसन्धातव्यम् ।

एवं तावद्युक्त्या स्फोटाभावः प्रतिपादितः; इदानीं प्रयोगारूढं कृत्वा तमेव दर्शयति—**वर्णा वेति** । वर्णा इति चानास्थोक्तिः, ध्वनीनामेव स्फोटाभिव्यञ्जकत्वेन वैयाकरणैरिष्टत्वात् । यथाहुः—

---

१. चेति–चौ. मुद्रिते.

नार्थस्य वाचकः स्फोटो वर्णेभ्यो व्यतिरेकतः ।
घटादिवन्न दृष्टेन विरोधो धर्म्यसिद्धितः ॥

प्रतिषेधेत्तु यो वर्णांस्तज्ज्ञानानन्तरोद्भवान् ।
दृष्टबाधो भवेत्तस्य शशिचन्द्रनिषेधवत् ॥

वर्णोत्था चा[1]र्थधीरेषा तज्ज्ञानानन्तरोद्भवा ।
येदृशी सा तदुत्था हि धूमादेरिव वह्निधीः ॥

दीपवद्वा गकारादिर्गवादेः प्रतिपादकः ।
ध्रुवं प्रतीयमानत्वात्पूर्वं तत्प्रतिपादनात् ॥"

तत्र पदवाक्ययोराहितं सम्बन्धिनं वा स्फोटं नाभिव्यञ्जन्तीति

---

"प्रयत्नभेदतो भिन्ना ध्वनयोऽस्य प्रकाशकाः" इति ।

वर्णा वा ध्वनयो वा स्फोटं नाभिव्यञ्जन्तीत्यन्वयः । व्यञ्जकत्वाद्दीपप्रभादिवत् इत्यनुमानम् । अस्मिन् प्रयोगे पदवाक्ययोरिति यद्वार्तिककारीयमभिधानम्, तदाश्रित्य तावदनुमानस्य दूषणमाह—पदवाक्ययोराहितं सम्बन्धिनं वा स्फोटं नाभिव्यञ्जन्तीति सिद्धमिति । पदवाक्ययोरिति स्फोटविशेषणं वा वर्णध्वनिविशेषणं वा । तत्रापि सप्तमी वा षष्ठी वेयम् । तत्र सन्निकर्षविशेषात् स्फोटविशेषणत्वमङ्गीकृत्य दूषणमुच्यते । सप्तमी चेदाधारसप्तमीत्वात् पदवाक्ययोराहितमित्युक्तम् । षष्ठ्यास्तु सम्बन्धवाचित्वात्तत्सम्बन्धिनं वेत्युक्तम् । उभयथापि तादृशं न व्यञ्जन्तीति सिद्धमेवास्माकमिति सिद्धसाधनतांशे भवतीति भावः । कारणमाह—पदवाक्ये एव हि स्फोट इति । पदं वाक्यं वा स्फोटः । तदाहितस्तत्सम्बन्धी वेति स्थितिः । ततस्तादृशं प्रत्यनभिव्यञ्जकत्वमस्माकं सिद्ध-

---

१. वार्थ- चौ. मुद्रिते.

**सिद्धम्; पदवाक्ये एव हि स्फोटः। अथ पदवाक्यविषया वर्णा ध्वनयो वेति मतम्, तथापि को विषयार्थोऽन्यत्र व्यञ्जकभावात्? नावयवित्वम्;**

---

मेव। ये तु न पदवाक्ययोरिति स्फोटविशेषणम्, किन्तु वर्णध्वनिविशेषणमेवेति व्याचक्षते, तेषां मतमाशङ्क्ते[1]—अथ पदवाक्यविषया वर्णा ध्वनयो वेति मतमिति। पदं वाक्यं च विषयो येषामिति विग्रहः। यथाहुः—"ध्वनिमात्रोपादाने शङ्खादिध्वनीनां स्फोटानभिव्यञ्जकत्वस्य परैरनिष्टत्वादंशे सिद्धसाध्यत्वं स्यात्, तन्मा भूदिति पदवाक्ययोरिति विशेषणम्। ये पदवाक्ययोर्वर्तमाना वर्णा ध्वनयो वा ते स्फोटं नाभिव्यञ्जन्तीत्यन्वयः" इति। परिहरति—तथापि[2] को विषयार्थोऽन्यत्र व्यञ्जकभावादिति। यद्यप्येवं सम्बन्धस्तथापि को विषयशब्दार्थः संभवति व्यञ्जकत्वादृते ध्वनीनां वर्णानां वा? न हि कुण्डबदरवत्पदवाक्ययोर्मुख्यमाधारत्वं वर्णध्वनीनां वाधेयत्वं समस्ति; तेन सम्बन्धान्तरमाधाराधेयभावेनोपचर्यते। न च व्यङ्ग्यव्यञ्जकभावादन्यः सम्बन्धोऽस्तीति व्यञ्जकत्वमेवाधेयत्वमापद्यत इति। तेन वर्णध्वनीनां व्यञ्जकत्वादृते न पदवाक्ययोर्विषयत्वमाधारत्वम्। क्वचित्पाठः अन्यत्र व्यङ्ग्यव्यञ्जकभावादिति। अथवा पदं वाक्यं च विषयः कर्म येषामिति विग्रहः। विषयविषयिभावसम्बन्ध आधाराधेयभावत्वेनोपचर्यते, तथापि को विषयार्थोऽन्यत्र व्यञ्जकभावादिति पूर्ववत्। तथापि को विषयविषयिभावोऽन्यत्र व्यङ्ग्यव्यञ्जकभावादिति पाठे व्यङ्ग्यव्यञ्जकभाव एव विषयविषयिभाव इत्यर्थः। तथा च स्ववाग्विरोधः। धर्म्युक्त्या धर्मबाधात् धर्मोक्त्या वा धर्मिबाधात् वक्ष्यमाणदोषापत्तिः। ध्वनिभिर्वर्णैश्चारब्धं पदं वाक्यं चेति ये वदन्ति, तेषामेवं प्रत्यवस्थानम्—न ज्ञप्तौ पदवाक्ययोर्विषयभावोऽङ्गीक्रियते, किन्तूत्पादनायामिति न दोष इति। तत आह—नावयवित्वमिति। विषयार्थ इति संबध्यते। विषयविषयिभाव इति पाठे नावयवावयवित्वमिति पाठः। कारणमाह—तदभावादिति। पदवाक्ययोरवयवाभावादित्यर्थः। निरवयवं हि

---

१. आशास्ते. ख. २. Added तेषां. ख.

**तदभावात्; तत्राप्यप्रसिद्धविशेष्यता पक्षदोषः; हेतोश्चाश्रयासिद्धता;**

---

तदुभयमस्माभिराङ्गीक्रियते; अवयवाभावाच्च नावयवित्वं संभवतीति । एवं सत्यनुमानस्य को दोषस्तमाह—तत्राप्यप्रसिद्धविशेष्यता पक्षदोषः हेतोश्चाश्रयासिद्धतेति । तत्रापीति । अवयवावयविभावमभ्युपगम्य पदवाक्ययोर्ये वर्णा वा ध्वनयो वेति वचनेऽपीत्यर्थः । अप्रसिद्धविशेष्यता पक्षदोष इति । अप्रसिद्धविशेष्यता नाम पक्षदोषः स्यात् । न हि ध्वनयो वर्णा वा पदवाक्ययोरवयवत्वेनास्माकं प्रसिद्धाः; ततस्ते न व्यञ्जन्तीति साध्यमाने प्रतिवादिनोऽप्रसिद्धविशेष्यः पक्षः स्यात् । एष प्रतिज्ञादोषः । क्वचित्पाठः अप्रसिद्धतादोष इति । अत्रापि विशेष्यस्येति सिध्यति । दूषणान्तरमाह—हेतोश्चाश्रयासिद्धतेति । हेतोर्हि पक्षधर्म्याश्रयः; तेन पक्षधर्मिणोऽसिद्धौ हेतुरपि निराश्रयो दुःस्थः स्यात् । न ह्यवयवभूतानां वर्णध्वनीनां व्यञ्जकत्वमस्माकं सिद्धमिति तथा पदवाक्ययोः स्फोटविशेषणत्वे दोषः सिद्धसाधनता नाम । एवं वर्णध्वनिविशेषणत्वेऽस्त्यन्यो दोष[1] इत्यपिशब्देन सूचयति । अथवा व्यङ्ग्यत्वस्य विषयार्थत्वे स्ववाग्विरोधो नाम दोषः; एवमवयवित्वस्य विषयार्थत्वेऽप्यन्यो दोष इति । अथवा तत्रापीत्यपिशब्देन व्यङ्ग्यत्वपक्षं समुच्चिनोति । ये स्फोटात्मनोः पदवाक्ययोर्व्यञ्जका वर्णा ध्वनयो वेति वचने वादिनोऽप्रसिद्धविशेष्यता हेतोश्चाश्रयासिद्धतेति दूषणद्वयं प्रसज्यते । एवमवयवित्वस्य विषयार्थत्वेऽपि प्रतिवादिनोऽप्रसिद्धविशेष्यता हेतोश्चाश्रयासिद्धतेत्यापद्येत इति । स्ववाग्विरोधश्च —

"धर्म्युक्त्याहं यतो जातः सा वन्ध्या जननी मम ।" इतिवद्द्रष्टव्यः । अप्रसिद्धविशेष्यता च 'सर्वज्ञः सत्यवादी' इतिवत् । आश्रयासिद्धता

---

१. अत्र. ख.

श्रोत्रमनोभ्यां च व्यभिचारः, तयोः स्फोटव्यञ्जकत्वात्। न चोपलब्धि-

---

'अस्ति प्रधानम्, विश्वपरिणामित्वात्' इतिवत्। एतच्च सौगतकापालिक[1]-प्रयोगे मीमांसकादेः। यदा पुनर्मीमांसको ब्रवीति 'सर्वज्ञोऽनृतवादी' इति, तदा वादिनोऽप्रसिद्धविशेष्यः पक्षः। यदा पुनः स एव ब्रवीति 'नास्ति प्रधानम्, जगत्कारणत्वाभावात्' इति, तदा तस्यैवाश्रयासिद्धिः। आश्रया-सिद्धतेति। अत्र दोष इत्यनुषज्यते; हेतोराश्रयासिद्धता नामानुमानस्य दोष इति। अथवा पक्षवद्धेतोश्च दोषः आश्रयासिद्धता नामेति।

ननु पदवाक्ययोरिति प्रयुञ्जानस्याचार्यस्यास्तु दूषणम्; वयं तु 'ध्वनयः स्फोटं न व्यञ्जन्ति' इति प्रयुञ्ज्महे, न 'पदवाक्ययोः' इत्युपादास्यामः—इति यदि कश्चिद्ब्रूयात्तं प्रति पदवाक्ययोरनुपादानेऽपि तुल्यं दूषणान्तर-माह—श्रोत्रमनोभ्यां च व्यभिचार इति। व्यञ्जकत्वस्य हेतोः स्फोट-व्यञ्जकत्वाभावेन साध्येन व्यभिचारोऽस्माभिर्दर्शयितव्यः। केनोपायेन दर्शयितव्यः, तमाह—श्रोत्रमनोभ्यामिति। श्रोत्रमनसोरुपन्यासेनेति यावत्। अथवा श्रोत्रमनोभ्यां हेतोरन्वयोऽस्ति, साध्यस्य तु ताभ्यां व्यभिचारः। ततश्च तयोः साध्येन हेतोर्व्यभिचार इत्युक्तं भवति। पञ्चमी वा श्रोत्रमनोभ्यामिति। हेतोर्ह्याश्रित्य श्रोत्रमनसी साध्येन व्यभिचार इति। अथवोपन्यस्य श्रोत्रमनसी व्यभिचारो दर्शयितव्य इति। अथवा हेतोः कर्तुः व्यभिचारक्रियायां श्रोत्रमनसोः करणत्वं विवक्ष्यते। तद्वशेन हि तस्य साध्येन व्यभिचारः। अन्येषु स्वाश्रयेषु तेन समन्वयादिति। अनेन चानैकान्तिको हेतुः, 'अनित्यः शब्दः प्रमेयत्वात्' इतिवदित्युक्तं भवति। कुत इत्याह—तयोः स्फोटव्यञ्जकत्वादिति। तयोः श्रोत्रमनसोः स्फोटव्यञ्जकत्वमस्ति साध्यविपर्ययः; हेतुश्च व्यञ्जकत्वं तयोर्वर्तत इति व्यभिचार इति। ननु न श्रोत्रमनसी व्यञ्जके, उपलम्भकत्वात्। व्यञ्जकं

---

१. कापिल. ख.

**निमित्तादन्यद्व्यञ्जकम् । उपलब्धिनिमित्ते च श्रोत्रमनसी । संस्कारस्यापि व्यञ्जकत्वेन समाधानादिभिरनेकान्तः ।**

---

तु दीपादिकं ध्वन्यादिकं च, इन्द्रियलिङ्गादिकं तु ज्ञापकमेव; अतो न व्यभिचारः; अत आह—न चोपलब्धिनिमित्तादन्यद्व्यञ्जकमिति । उपलब्धिनिमित्तत्वमेव व्यञ्जकत्वम्, न ततोऽन्यत्; दीपादयोऽप्युपलब्धिनिमित्तान्येव; अन्यथेन्द्रियेतिकर्तव्यतात्वाभावप्रसङ्गात् । ननु श्रोत्रमनसोः स्फोटोपलम्भकत्वमस्माकमसिद्धम् । अत आह—उपलब्धिनिमित्ते च श्रोत्रमनसी इति । यथा च तयोरुपलम्भकत्वं तथोक्तं प्रागिति भावः । व्यभिचारान्तरमाह—संस्कारस्यापि व्यञ्जकत्वेन समाधानादिभिरनेकान्त इति । यदा श्रोत्रमनोभ्यां गृहीतः[1] स्फोटः पुनः संस्कारवशात् स्फुरति, तदा संस्कारोऽपि स्फोटोपलब्धिनिमित्तत्वात् तद्व्यञ्जकः; तेन तत्रापि व्याभिचारः । तेनायमर्थः—समाधानादिना प्रणिधानादिना प्रबुद्धस्य संस्कारस्य कदाचिद्व्यञ्जकत्वेन कारणेन साध्येन हेतोर्व्यभिचार इति । क्वचित्पाठः व्यञ्जकत्व इति । तत्रापि समाधानादिना व्यञ्जकत्वे सतीत्यर्थः । अथवा ननूपलब्धिकरणमुपलम्भकम् । उपलब्धिकरणस्य तु यत्सामर्थ्यमभिव्यनक्ति तदपि व्यञ्जकम् । ध्वनयश्च शब्दस्य ग्राह्ययोग्यत्वं श्रोत्रस्य वा ग्राहकयोग्यत्वमुभयं वा नित्यसदेवानभिव्यक्तमपि व्यञ्जन्तीति गमकादन्यदेव व्यञ्जकमित्यत आह—संस्कारस्यापि व्यञ्जकत्वे समाधानादिभिरनेकान्त इति । संस्कारशब्देन संस्कारकमभिधीयते । संस्कारस्य व्यञ्जकत्वेऽपीति भिन्नक्रमोऽपिशब्दो द्रष्टव्यः । मनस्समाधानवतो हि सर्वं प्रतीयते । ततः समाधानसंस्कृतं मनश्चिकित्सासंस्कृतं च श्रोत्रं स्फोटं गृह्णातीति चिकित्सासमाधानाभ्यां व्यभिचारः । संस्कारस्यापि व्यञ्जकत्वेनेति पाठे संस्कारस्य व्यञ्जकत्वेनाङ्गीकृतेनापीत्यर्थः । एवं प्रथमवार्तिकानु-

---

१. गृहीतं स्फोटं—स्मरन्ति, तदा. ख.

तथा सत्त्वादिति श्रोत्रादिभिरनैकान्तिकः ; प्रतिपादितं च श्रोत्रप्रत्यक्षत्वं स्फोटात्मनः। एकवर्णे च पदे ध्वनीनां व्यञ्जकत्वनिषेधेऽभ्युपगमविरोधः । वर्णव्यतिरेकश्च स्वतोऽसिद्धः , तस्यासत्त्वा-

---

सन्धानं कृतम् । द्वितीयमप्यनुसन्धत्ते—तथा सत्त्वादिति श्रोत्रादिभिरनैकान्तिकः ; प्रतिपादितं च श्रोत्रप्रत्यक्षत्वं स्फोटात्मनः। एकवर्णे च पदे ध्वनीनां व्यञ्जकत्वनिषेधेऽभ्युपगमविरोध इति। वार्तिककारेण हि सत्त्वाद्घटादिवच्चेति पूर्वस्यामेव प्रतिज्ञायां हेत्वन्तरं दृष्टान्तान्तरं च दर्शितम्। तत्र दूषणमुच्यते—यथा व्यञ्जकत्वनेति हेतुरनैकान्तिकः, तथा सत्त्वादित्यपि हेतुः श्रोत्रादिभिरेवानैकान्तिकः। कथमित्याह—प्रतिपादितं च श्रोत्रप्रत्यक्षत्वं स्फोटात्मन इति । अत्र चकारो वाक्यार्थसमुच्चये हेतौ वा । श्रोत्रादिभिरित्यादिशब्देन मनस्संस्कारयोरुपादानम् । अथोभयत्रापि साधारणं दूषणमाह—एकवर्णे च पदे ध्वनीनां व्यञ्जकत्वनिषेधेऽभ्युपगमविरोध इति । अभ्युपगतं हि वर्णवादिना ध्वनीनां वर्णाभिव्यञ्जकत्वम्; तदिदानीं स्फोटं नाभिव्यञ्जन्तीति प्रतिज्ञातवतः तस्यैकवर्णात्मके पदे स्फोटात्मकेऽपि व्याप्तेर्विरुद्धमापद्यते , एकवर्णपदे स्फोटस्य वर्णस्य चैकत्वादिति । "साधनानि यथारुचि । लौकिकव्यतिरेकेण कल्पितेऽर्थे भवन्ति हि" इति वार्तिकशेषस्यालौकिकस्य कल्पितस्य स्फोटात्मन एवंजातीयकान्यपि साधनानि निराकरणक्षमाणि, प्रमाणविरोधाभावादित्यर्थः । तच्च विपरीतमित्यनुक्तसुज्ञानमिति भावः । अभ्युपगमविरोधश्च बौद्धस्य शब्दनित्यत्वं विरुध्यत इति दर्शितः । एष च पूर्वसञ्जल्पविरोधो नाम शब्दविरोध इति व्याचक्षते ।

एवं स्फोटस्याप्रमाणकत्वे यदनुमानं तद्दूषितम् । स्फोटस्यावाचकत्वेऽपि प्रयोगकथनार्थं तृतीयं वार्तिकम्—"नार्थस्य वाचकः स्फोटो वर्णेभ्यो व्यतिरेकतः। घटादिवत्" इति। तत्र वर्णेभ्यो व्यतिरेकत इति हेतुं दूषयति—वर्णव्यतिरेकश्च

---

१. Omitted एव. ख. २. श्लोक. वा. अनुमाने. 64 ...

भ्युपगमात् । एकवर्णात्मके च पदे वर्णव्यतिरेकस्योभयासिद्धत्वादव्यापकत्वम्, अभ्युपगमविरोधश्च । अर्थस्येति विशेषणमनर्थकम्, सर्वथा वचननिषेधात् । वचनं यदि प्रत्यायनम्, तदा तत् घटादि-

---

स्वतोऽसिद्धः, तस्यासत्त्वाभ्युपगमात् । एकवर्णात्मके च पदे वर्णव्यतिरेकस्योभयासिद्धत्वादव्यापकत्वम् अभ्युपगमविरोधश्च । अर्थस्येति च विशेषणमपार्थकम्, सर्वथा वचननिषेधादिति । वर्णव्यतिरेकश्चेति । वर्णेभ्यो व्यतिरेकश्चेति । तथैव वा पाठः । स्वतोऽसिद्ध इति । स्वरूपतोऽसिद्ध इत्यर्थः । कारणमाह—तस्यासत्त्वाभ्युपगमादिति । तस्य स्फोटस्य वर्णवादिभिरसत्त्वाभ्युपगमात् तद्धर्मो वर्णव्यतिरेकोऽप्यसन्नेवेत्यर्थः । एवं वर्णव्यतिरेकमपेक्ष्य स्वशब्द इति व्याख्यातम् । अथवा स्वशब्देन स्फोटपरामर्शः । स्फोटमपेक्ष्यासिद्धः आश्रयासिद्ध इति यावत् । स्वशब्देन वादिनं वा परामृशति । तस्येत्यादि पूर्ववत् । स्वरूपासिद्धो यथा मीमांसकः प्राह—'बुद्धो न[1] धर्माधर्मयोः प्रत्यक्षयिता सर्वज्ञत्वात्' इति । आश्रयासिद्धो यथा —'नास्ति प्रधानं विश्वपरिणामित्वाभावात्' इति । दूषणान्तरमाह—एकवर्णात्मके च पदे वर्णव्यतिरेकस्योभयासिद्धत्वादव्यापकत्वमिति । पक्षाव्यापकत्वमित्यर्थः । उभयासिद्धत्वादित्यनेन न पूर्ववदन्यतरासिद्धिरिति दर्शयति । पक्षाव्यापको यथा—'अनित्यः शब्दो वर्णात्मकत्वात्' इति । अत्रैव दूषणान्तरमाह—अभ्युपगमविरोधश्चेति । एकवर्णे च पदे वाचकत्वनिषेधेऽभ्युपगमविरोधो वादिनः स्यादित्यर्थः । अस्य च स्वरूपं पूर्वं दर्शितमेव । एतच्च प्रतिज्ञादूषणम् । अत्रैव दूषणान्तरमाह—अर्थस्येति च विशेषणमपार्थकमिति । "नार्थस्य वाचकः स्फोटः" इत्यत्र यद्वाचकस्य विशेषणमर्थस्येति कृतम्, तदपार्थकमित्यर्थः । हेतुमाह —सर्वथा वचननिषेधादिति । अनेन वादिना स्फोटस्य सर्वथा सर्वप्रकारेण यद्वचनं वाचकत्वं तन्निषेधस्येष्टत्वात्किमर्थस्येति विशेषणेन प्रयोजनमित्यर्थः ।

---

१. omitted न. ख.

एतदपि प्रतिज्ञादूषणमेव । यथाहुः—"शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात्" इति । त्रिविधं हि पुनरुक्तं नाम निग्रहस्थानम् । तत्र प्रथमं शब्दपुनरुक्तम् यथा अनित्यः शब्दोऽनित्यः शब्द इति । द्वितीयं तु पर्यायेणाभिधानम् यथा अनित्यः शब्दो विनाशी ध्वनिरिति । तृतीयं तु अग्निनोष्णेन युक्तः पर्वत इति । उष्णत्वं ह्यग्नित्वेनैवार्थात्प्राप्तमिति तस्य पुनर्वचनमर्थपुनरुक्तम् । न चानुवादभूतमर्थस्येति मत्वा[१] विशेषणमिति वाच्यम्, प्रयोजनाभावात्; सप्रयोजनं हि पुनर्वचनमनुवादः । यथा निगमने पक्षस्य । तद्व्यवच्छेदार्थमेवोक्तम्—"अन्यत्रानुवादात्" इति । अत एव निबन्धनकृताप्युक्तम्—अपार्थकमिति । अपगतप्रयोजनमित्यर्थः । न त्वनेन पुनरुक्तादन्यदपार्थकं नाम निग्रहस्थानमुक्तमिति भ्रमितव्यम् । अपार्थकं ह्येवं लक्षितम्—"पौर्वापर्यायोगादप्रतिसम्बन्धार्थमपार्थकम्" इति । पौर्वापर्यं विशेषणविशेष्यभावः । तेनायोगोऽसम्बन्धः नैराकाङ्क्ष्याभावः । तस्मादनन्वितार्थमपार्थकमित्यर्थः । उदाहरति च—"यथा कुण्डमजाजिनं पललं पिण्डः" इति । न च "नार्थस्य वाचकः स्फोटः" इत्यनन्वितार्थम्; अर्थसिद्धस्यार्थस्येत्यस्य वचनात्पुनरुक्तमेवेति ।

एवं तावदर्थस्येति विशेषणं दूषितम् । सम्प्रति वाचक इति विशेष्यं दूषयितुमारभते । तत्र तावद्विकल्पोऽन्तर्णीतः । वचनस्य हि कर्ता वाचकः । तत्र वचनं किं प्रत्यायनम् किं वा शब्दप्रत्ययहेतुत्वम् आहोस्विच्छब्दस्य सतः प्रत्यायकत्वमिति । तत्राद्यं तावत्कल्पं दूषयति—वचनं यदि प्रत्यायनं तदा[२] तद्घटादिष्वप्यस्तीति साध्यविकलतेति । यस्य वचनस्य कर्ता वाचकः तत्र यदि वचनशब्देन प्रत्यायनं विवक्ष्यते तर्हि तत्प्रत्यायनं दृष्टान्ताभिमतेषु घटादिष्वप्यस्तीति हेतोः साध्यविकलत्वम् । दृष्टान्तस्याप्रत्यायनं हि साध्यम्; न तद्घटादिष्वस्ति । घटा-

---

२. Omitted मत्वा. ख. २. Omitted तदा ख.

ष्वप्यस्तीति साध्यविकलता । अथ शब्दप्रत्ययहेतुत्वं निषिध्यते, संस्कारेणानैकान्तिकः । अथ शब्दस्य सतः प्रत्यायकत्वनिषेधः,

---

दयो हि स्वकारणादेर्लिङ्गतया प्रत्यायका एवेति । साध्यविकलो यथा—अनित्यः शब्दः अमूर्तत्वात्कर्मवदिति । द्वितीयं पक्षमाशङ्कते—अथ शब्दप्रत्ययहेतुत्वं निषिध्यत इति । शब्दस्य प्रत्ययः शब्दप्रत्ययः शब्दकर्मकः प्रत्ययः ; तद्धि वचनम् । यथोक्तम्—"शास्त्रं शब्दविज्ञानात्" इति । तेन स्वविषयविज्ञानस्य हेतुत्वं शब्दस्य वाचकत्वमिति वाचकत्वं निषेधता 'नात्मनि शब्द इति प्रत्ययस्य हेतुः स्फोटः' इत्युक्तं भवतीति भावः । दूषयति—संस्कारेणानैकान्तिक इति । संस्कारशब्देन संस्कारको ध्वनिर्विवक्षितः । स हि स्वविषयं वर्णविषयं स्फोटविषयं वा शब्दप्रत्ययं करोति ; अथ च वर्णव्यतिरेकीति तत्र व्यभिचारः । अथवा संस्कारो ह्यनुभूतस्य स्फोटस्य पश्चाच्छब्द-प्रत्ययहेतुः स्मरणरूपस्य 'शब्दः' इति प्रत्ययस्य हेतुर्वर्णव्यतिरेकी चेति वर्णव्यतिरेको हेतुरनैकान्तिकः स्यादित्यर्थः । अथवा "तत्संस्कारक्रमाच्चापि व्यक्तं तत्त्वं प्रकाशते" इति वचनादनुभवेऽपि संस्कारस्य हेतुत्वात्तस्य च वर्णव्यतिरेकात् तेनानैकान्तिको वर्णव्यतिरेकाकारहेतुरिति । कल्पान्तरमाशङ्कते—अथ शब्दस्य सतः प्रत्यायकत्वनिषेध इति । शब्दस्य यत्प्रत्यायकत्वं तद्वाचकत्वम् ; अतः स्फोटो न वाचक इत्युक्ते शब्दकर्तृकप्रत्यायनस्य न कर्तेत्युक्तमिति शब्दत्वमेव निषिध्यते—स्फोटो नार्थस्य प्रत्यायकः शब्दः, वर्णेभ्यो व्यतिरेकात् घटवदिति । परिहरति—शङ्खादिशब्दैः कालादिज्ञानार्थैः व्यभिचार इति । 'शङ्खवेलायामागन्तव्यम्' इति कृते सङ्केते विदितसङ्केतानां शङ्खशब्दः कालस्य बोधकः । तथा 'यतः शङ्खशब्द उच्चरति, तत्रास्ते सेनापतिः' इति कृते सङ्केते देशज्ञानं शङ्खशब्दादित्यादि द्रष्टव्यम् ।

**शङ्खादिशब्दैः कालादिज्ञानार्थैर्व्यभिचारः। वर्णाश्च वर्णान्तरव्यतिरेकिणो वाचकाश्चेति तैरनेकान्तः । वर्णाश्च न वाचकाः स्युः, स्फोट-**

---

वचनं यदीत्यादेः पुनरपि व्याख्या। अर्थस्येति विशेषणस्य प्रयोजनमाशङ्कते—वचनं यदि प्रत्यायनमिति । यदि वचनं नाम शब्दस्यासाधारणोऽर्थविषयो व्यापारोऽङ्गीक्रियते, ततोऽर्थस्येति विशेषणमनर्थकं स्यात्; न तु सोऽङ्गीक्रियते, "पदमभ्यधिकाभावात् स्मारकान्न विशिष्यते" इत्युक्तत्वात् । अतो लिङ्गादिसाधारणं प्रत्यायनमेव शब्दव्यापरः। अतः 'यदि न वाचकः स्फोटः' इत्येवावक्ष्यत्, ततोंऽशे सिद्धसाधनतयोपालप्स्यत; न हि स्फोटस्य सङ्केताविषये वाचकत्वम्, तन्मा भूदित्यर्थविशेषणं कृतम् । परिहरति—तद्धटादिष्वप्यस्तीति साध्यविकलतेति । घटादयोऽपि स्वकारणादेर्लिङ्गतया गमका इत्युक्तमेव । अत्र चोदयति—अथ शब्दप्रत्ययहेतुत्वं निषिध्यत इति । शब्दप्रत्ययः शब्दस्य प्रत्ययः शब्दजनितप्रत्यय इति यावत्। स्फोटो नार्थस्य प्रत्यायक इति। किमुक्तं भवति? स्फोटो नार्थं प्रति शाब्दं प्रत्ययं करोतीति, शब्द-कर्तृकस्य प्रत्यायनस्य लोके वचनशब्दवाच्यत्वप्रतीतेः। तेन नार्थस्येति विशे-षणस्य वैयर्थ्यम्, न च घटादौ व्यभिचार इति भावः । परिहरति—संस्कारेणानैकान्तिक इति । "पूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णः प्रतिपादकः" इति वर्णव्यतिरेकिणः संस्कारस्य शाब्दप्रत्ययहेतुत्वस्वीकारादिति भावः। पुनरपि चोदयति—अथ शब्दस्य सतः प्रत्यायकत्वनिषेध इति। शब्दस्य सत इति शब्दत्वेन सत इत्यर्थः। शब्दस्य सतो हेतोरर्थं प्रति यत्प्र-त्यायकत्वम्, तन्न स्फोटस्येति "नार्थस्य वाचकः स्फोटः" इत्यनेन निषिध्यते; अतो न संस्कारे व्यभिचार इति । परिहरति—शङ्खादिशब्दैः कालादि-ज्ञानार्थैः व्यभिचार इति । आदिशब्देन भेर्यादीनां ग्रहणम् । द्विती-

---

१. शब्द- ख.

व्यतिरेकित्वात् घटादिवत् । न दृष्टबाधः, अर्थप्रत्ययस्य तद्धेतुत्वात् । वर्णानां तु तद्धेतुत्वमदृष्टमेव । 'गोशब्दादर्थं प्रतिपद्यामहे' इति लौकिकी प्रतीतिः, न संस्कारात् शब्देभ्यो विसर्जनी-

---

येनादिशब्देन देशादीनामिति । अपि च वर्णा एव हन्त विपक्षा इत्याह— वर्णाश्च वर्णान्तरव्यतिरेकिणो वाचकाश्चेति तैरनेकान्त इति । वर्णा हि परस्परतो व्यतिरिक्ता वाचकाश्च भवन्मते ; अस्माकं चैकवर्णे पद इति तेषु[1] च व्यभिचार इति विरुद्धो[2] व्यभिचारी चायं हेतुरित्याह—वर्णाश्च न वाचकाः स्युः, स्फोटव्यतिरेकित्वात् घटादिवदिति । विरुद्धाव्यभिचारिता च । यत्राप्य[3]प्रत्यक्षता वायोररूपत्वेन साध्यते, स्पर्शात् प्रत्यक्षता च, असौ विरुद्धाव्यभिचारितेति लक्षिता । अत्र वार्तिके "न दृष्टेन विरोधो धर्म्यसिद्धितः" इत्यत्र न स्फोटस्य वाचकत्वनिषेधे दृष्टविरोधः, धर्मिण एव स्फोटस्यासिद्धेः ; वर्णवाचकत्वनिषेधे तु दृष्टविरोधो भवत्येवेति दर्शितम् । तदपि विपरीतमित्यभिप्रायेणाह— न दृष्टबाध इति । वर्णवाचकत्वनिषेधे न दृष्टबाध इत्यर्थः । स्फोटवाचकत्वनिषेधे तु दृष्टविरोधो भवत्येवेति भावः । कारणमाह—अर्थप्रत्ययस्य तद्धेतुत्वादिति । तच्छब्देन स्फोटपरामर्शः । स स्फोटो हेतुः यस्य स तथोक्तः, तस्य भावस्तत्त्वम् । यत्तु वर्णवादिभिरुच्यते तदसदेवेत्याह—वर्णानां तु तद्धेतुत्त्वमदृष्टमेवेति । वर्णानामर्थप्रत्ययहेतुत्वं न लोके दृष्टमिति कथं तद्वाचकत्वनिषेधे दृष्टविरोधः स्यादिति भावः । एतदेव दर्शयति—'गोशब्दादर्थं प्रतिपद्यामहे' इति लौकिकी प्रतीतिः, न संस्काराच्छब्देभ्यो विसर्जनीयाद्वेतीति ।

एवं तावत्तृतीयवार्तिकमनुक्रान्तम् । चतुर्थं वार्तिकं प्रतिषेधेत्त्वित्यादि । तस्यायमर्थः—ध्वनयो न वर्णानभिव्यञ्जन्ति व्यञ्जकत्वाद्दीपवत् ; सत्त्वाद्वा घटा-

---

१. तेष्वेव. ख

२. विरुद्धाव्यभि- ख.

३. Omitted अपि. ख.

याद्वेति । न शशिचन्द्रनिषेधवत् प्रतीतिविरोधः । "तज्ज्ञानानन्तरो-

---

दिवञ्चेति यो वर्णानेव प्रतिषेधेत्, तस्य दृष्टेन बाधः शशिचन्द्रनिषेध-वदिति । तत्र शशिचन्द्रनिषेधवदित्येतद्दूषयति—न शशिचन्द्रनिषेधवत्प्रतीति-विरोध इति । वार्तिके दृष्टबाधस्फोरणाय तज्ज्ञनानन्तरोद्भवानिति द्विती-यान्तं पदम् । तस्यायमर्थः—वर्णज्ञानानन्तरं उद्भवः प्रकाशो येषाम् । वर्णाश्च न वाचका इत्यादेरपरा व्याख्या । "न दृष्टेन विरोधो धर्म्यसिद्धितः" इति विपरीतमेवेत्यनुक्तसुज्ञानमिति कृत्वा चतुर्थं वार्तिकमनुसन्धत्ते—वर्णाश्च न वाचकाः स्फोटव्यतिरेकित्वात् घटादिवदिति । अनेन "प्रतिषेधेत्तु यो वर्णान्" इत्यत्रा-भिप्रेतं प्रतिषेधप्रकारं पूर्ववार्तिकानुसारेण दर्शितवान् । वर्णान् वाचकतया निषेधेदित्यर्थः । दृष्टबाधो भवेदित्येतन्निषेधति—न दृष्टबाधोऽर्थप्रत्ययस्य तद्धेतुत्वादिति । अर्थप्रत्ययस्य तद्धेतुत्वादित्येतत् तज्ज्ञानानन्तरोद्भवादित्यस्य व्याख्या । अर्थप्रत्ययोद्भवदर्शनाद्वर्णज्ञानानन्तरमित्यर्थः । तज्ज्ञानानन्तरोद्भवाद्-दृष्टबाध इत्यन्वयः । निबन्धने च तद्धेतुत्वादिति तच्छब्देन वर्णपरामर्शः; तेनायमर्थः—अर्थप्रत्ययस्य वर्णहेतुकत्वात् यो दृष्टबाधः, स नास्तीति । स्फोटस्यैवार्थप्रत्ययहेतुत्वप्रतिपादनादिति भावः । इदानीं पञ्चम्यन्तमुद्भवपदं वार्तिके द्रष्टव्यम् । ननु 'गोशब्दादर्थं प्रति-पद्यामहे' इति दृश्यत एव वर्णानामर्थप्रत्ययहेतुत्वम्, कथं न दृष्टबाधः? अत आह—वर्णानां त्विति । सत्यं शब्दस्य दृष्टम्, तत्तु न वर्णानामिति तुशब्द-योजना । क्वचित्पाठः अर्थप्रत्ययस्याप्रत्याख्या; वर्णानां त्विति । तत्रायमर्थः—तज्ज्ञानानन्तरोद्भवात् दृष्टबाध इत्युक्तम्; तत्रेदमुच्यते—न दृष्टबाधः । तथा हि—अर्थप्रत्ययस्याप्रत्याख्या । न तावदर्थप्रत्ययोऽस्माभिः प्रत्याख्यायते, किन्तु वर्णानामर्थप्रत्ययहेतुत्वम्; तत्पुनर्न दृष्टमेव । यद्दृश्यते न तदस्माभिरपह्नूयते; यदस्माभिरपह्नूयते न तद्दृष्टमित्यर्थः । कथं वर्णानां तद्धेतुत्वं न दृश्यत इत्यु-

---

१. दित्यादिज्ञाना- ख.

द्भवात्" इत्यसिद्धम्, पदबुद्ध्यनन्तरमर्थधिय उद्भवात्। द्रुतादिज्ञाना-

---

च्यते, तद्दर्शयन्नाह—'गोशब्दादर्थं प्रतिपद्यामहे' इति लौकिकी प्रतीतिरिति। इति शब्दे भारः। अत एवाह—न संस्कारादिति। यदि स्मृतिहेतुसंस्कारपक्षः तद्व्यतिरिक्तपक्षश्च स्यात्तदा 'संस्कारादर्थं प्रतिपद्यामहे' इति प्रसज्येत; न चैवं प्रतीतिर्दृश्यते। यदि स्मृत्यारूढवर्णपक्षः तदा 'शब्देभ्योऽर्थं प्रतिपद्यामहे' इति प्रसज्येत; न चैवमित्यर्थः। 'विसर्जनीयादर्थं प्रतिपद्यामहे' इति वा प्रसज्येत यद्यन्त्यवर्णः प्रतिपादक इत्याश्रीयते यदि वा चित्रबुद्धिः; न चैवमपि दृश्यत इत्यर्थः। न संस्काराच्छब्देभ्यो विसर्जनीयाद्वेति। लौकिकी प्रतीतिरित्यनुषङ्गः। इति न शशिचन्द्रनिषेधवत् प्रतीतिविरोध इति। इति हेतोर्न शशिनार्थेन चन्द्रशब्दस्य सम्बन्धनिषेधवत् सर्वलोकप्रसिद्धि-विरोध इत्यर्थः। यथोक्तम्—

"चन्द्रशब्दाभिधेयत्वं शशिनो यो निषेधति।
स सर्वलोकसिद्धेन चन्द्रज्ञानेन बाध्यते॥" इति।

एवं परपक्षनिराकरणे प्रयोगमुक्त्वा स्वपक्षसाधने प्रयोगप्रदर्शनार्थमुत्तरं वार्तिक-द्वयं वर्णोत्था वेत्यादि। तत्राद्ये वार्तिकेऽर्थधियं पक्षीकृत्य वर्णोत्थेति साध्यते। तत्र हेतुः तज्ज्ञानानन्तरोद्भवादिति। तद्दूषयति—तज्ज्ञानानन्तरोद्भवादित्यसिद्धम्, पदबुद्ध्यनन्तरमर्थधिय उद्भवात्। द्रुतादिज्ञानानन्तरं चोत्पद्यमाना न द्रुताद्युत्थार्थ-धीरित्यनेकान्तः। धूमविशेषज्ञानानन्तरोद्भवा वह्निबुद्धिर्न तत्प्रभवेति। अस्यार्थः—तज्ज्ञानानन्तरोद्भवादिति यल्लिङ्गस्य वचनं तदसिद्धम्। तच्छब्देन वर्णपरामर्शः। वर्णज्ञानेति वा पाठः। कुतोऽसिद्धिः अत उक्तम्—पदबुद्ध्यनन्तरमर्थधिय

---

१. लोकप्रतीतिः. ख. २. अर्थे धियः. क.

नन्तरं चोत्पद्यमाना न द्रुताद्युत्थार्थधीरित्यनेकान्तः। धूमविशेषज्ञानानन्तरोद्भवा च वह्निबुद्धिर्न तत्प्रभवा। "ध्रुवं प्रतीयमानत्वात् पूर्वम्" इति।

---

उद्भवादिति। पदबुद्ध्यनन्तरं हि पदार्थधिय उद्भवः; अतो वर्णवादिनोऽपि न वर्णमात्रानन्तर्यमर्थधियोऽस्ति, पदबुद्ध्यानन्तर्यात्। पदं च यदि वर्णसमुदायः तथाप्यर्थान्तरं वर्णेभ्य इति असिद्धता वादिनोऽपि; अस्माकं त्वसिद्धमेव, वर्णव्यतिरिक्तपदाङ्गीकरणात्; तेनोभयासिद्धता प्रतिवाद्यसिद्धतामात्रमेव वास्तु। दोषान्तरमाह—द्रुतादिज्ञानानन्तरं चोत्पद्यमाना न द्रुताद्युत्थार्थधीरित्यनेकान्त इति। न केवलं वर्णज्ञानानन्तरमेषोत्तिष्ठति, द्रुतादेश्च ध्वनिधर्मस्यानन्तरमपि; न चैषा तदुत्था, अशाब्दत्वप्रसङ्गादिति तज्ज्ञानानन्तरोद्भवस्य व्यभिचार इति। यच्च "येदृशी सा तदुत्था हि धूमादेरिव वह्निधीः" इत्युक्तम्, तदपि दूषयति—धूमविशेषज्ञानानन्तरोद्भवा च वह्निबुद्धिर्न तत्प्रभवेति। धूमदर्शने हि धूमाकृतिर्धूमविशेषश्च द्वयं प्रकाशते; तत्राकृतिदर्शनादेव वह्निज्ञानम्। यथोक्तम्—"यथा धूमाकृतिदर्शनादग्न्याकृतिविज्ञानम्" इति। विशेष्यस्य तु सामान्यवदन्वयव्यतिरेकौ न स्त एवेति विशेषज्ञानानन्तरैव सती वह्निबुद्धिर्न तत्प्रभवेति दृष्टान्तस्थल एव हेतोर्व्यभिचारः शक्यो दर्शयितुमित्यर्थः। गवादीनर्थान् वा पक्षीकृत्य गकारादिः प्रतिपादक इति साध्यमित्युक्तम्—"दीपवद्वा गकारादिर्गवादेः प्रतिपादकः। ध्रुवं प्रतीयमानत्वात्" इति। गादिर्गवादेः प्रतिपादकः; ततो ध्रुवं प्रतीयमानत्वात् अन्धकारस्थितस्येव दीप इत्यर्थः। अत्रैव साध्ये हेत्वन्तरमुक्तम्—पूर्वं तत्प्रतिपादनादिति। गकाराद्युच्चारणपुरस्सरं हि वक्तारो गवाद्यर्थं प्रतिपादयन्ति; यत्पूर्वकं च यत्प्रतिपाद्यते, तत्तस्य प्रतिपादकं प्रदीपवदिति। तत्र हेतुद्वयमपि सहोपन्यस्यति—ध्रुवं प्रतीयमानत्वात् पूर्वमितीति। तत्पूर्वं प्रतिपादनादिति

**सत्त्वद्रव्यत्ववर्णत्वशब्दत्वे व्यभिचारः । न चेदृशं साधर्म्यवैधर्म्यमात्रं हेतुं विपश्चितोऽनुमन्यन्त इत्यलं प्रसङ्गेन ॥**

---

पाठो रत्नाकरकाशिकयोः । निबन्धनकारेण तु पूर्वं तत्प्रतिपादनादिति पाठोऽङ्गीकृतः । गवादेः पूर्वं गकारादेः प्रतिपादनादित्यर्थः । व्याप्तिस्तु— यत्पूर्वं यत्प्रतिपाद्यते, तत्तस्य प्रतिपादकम् यथा प्रदीपारोपणं प्रतिपाद्यस्य घटस्येति पूर्ववद्द्रष्टव्या । दूषणमाह—सत्त्वद्रव्यत्ववर्णत्वशब्दत्वे व्यभिचार इति । समाहार एकवद्भावः । सत्त्वे सत्तायां द्रव्यत्वे वर्णत्वे शब्दत्वे च व्यभिचार एतयोर्हेत्वोरिति । क्वचित्तृतीयान्तं सत्त्वद्रव्यत्ववर्णत्वशब्दत्वैरिति । गकारादेर्ध्रुवं प्रतीयमानत्वादिति हेतुरनैकान्तिकः ; यथा गवादिर्गकारादितो ध्रुवं प्रतीयते, तथा गवादिगतं सत्त्वं द्रव्यत्वं च प्रतीयत एव ; न च तयोः स प्रतिपादकः, आकृत्यधिकरणन्यायेन गोत्वमात्रस्यैव प्रतिपादकत्वादिति । तथा तत्पूर्वं प्रतिपादनं पूर्वं तत्प्रतिपादनं वा वर्णत्वशब्दत्वयोः सत्त्वेऽपि तद्गते व्यभिचरति । गकाराद्युपादाने हि तद्गतवर्णत्वादेरप्युपादानमर्थसिद्धम् , प्रतीतिश्च श्रोत्रेण वर्णवद्वर्णत्वादावपि इति तत्र व्यभिचारः । एवं दोषवतोऽप्यनुमानस्य यद्यर्थनिश्चयहेतुत्वं स्यात्ततः साध्यसिद्धिः ततो भवेदपि ; न च तदस्तीत्याह—न चेदृशं साधर्म्यवैधर्म्यमात्रं हेतुं विपश्चितोऽनुमन्यन्त इति । मात्रशब्देन व्याप्तिं व्यवच्छिनत्ति । यथोक्तम्—

"व्याप्तेश्च दृश्यमानायाः कश्चिद्धर्मः प्रयोजकः ।
अस्मिन् सत्यमुना भाव्यमिति शक्त्या निरूप्यते ॥

अन्ये परप्रयुक्तानां व्याप्तीनामुपजीवकाः ।
दृष्टैरपि न तैरिष्टा व्यापकांशावधारणा ॥

ये च तानपि विस्रब्धं साध्यसिद्ध्यै प्रयुञ्जते ।
सुलभैः प्रतिहेत्वादिदोषैर्भ्राम्यन्ति ते चिरम् ॥" इति ।

साधर्म्यमात्रं च साधर्म्यसमा नाम जातिः यथा यद्यनित्यघटसाधर्म्यात् कृतकत्वादनित्यः शब्द इष्यते, तर्हि नित्याकाशसाधर्म्यादमूर्तत्वान्नित्यः प्राप्नोतीति। वैधर्म्यमात्रं च वैधर्म्यसमा नाम जातिः यथा यद्याकाशवैधर्म्यादनित्यः शब्दः, त्रैलोक्यमेव तद्वैधर्म्यादनित्यं भवेदिति।

"प्रयुक्ते स्थापनाहेतौ दूषणाशक्तमुत्तरम्।
जातिमाहुरथान्ये तु स्वव्याघातकमुत्तरम्॥" इति तद्विदः।

इत्यलमतिप्रसङ्गेनेति। तस्मात् कृतमतिप्रसङ्गेन। अतिदूरं गत्वा किमस्माकं प्रयोजनम्? न चानुमानमात्रेण वस्तुनः कस्यचित्सत्ता सिध्यति निषेधो वा, प्रमाणान्तरेण विदितयोरन्यतरेणान्यतरस्य कुत्रचिद्देशे काले वा सत्तामात्रव्यवस्थानात्। अतो यदि स्फोटस्यान्यतो न सिद्धिः, ततोऽनुमानानि तत्प्रतिक्षेपाय प्रभवन्ति। यथोक्तम्—"लौकिकव्यतिरेकेण कल्पिते" इति। वर्णाश्च यदि प्रत्यक्षसिद्धास्तदा तत्प्रतिषेधः शशिचन्द्रनिषेधवत् लोकप्रसिद्धिविरुद्धः स्यात्; एतत्पुनर्विपरीतमिति कृत्वास्माभिर्दूषितान्यनुमानानि। अतोऽत्र प्रमाणान्तरसदसद्भावावेव निरूपणीयौ। तन्निरूपणं च कृतप्रायम्, किञ्चित्त्ववशिष्यते। तत्र च प्रयत्न उपक्रम्यते। किमनर्थकप्राये प्रयासनिर्बन्धेनेत्यभिप्रायः॥

इति स्फोटसिद्धिव्याख्यायां
सप्तविंशः श्लोकः

**योऽप्याह—वाक्यं न भिन्नं वर्णेभ्यो विद्यतेऽनुपलम्भनात्; न हि देवदत्तादिषु पदवाक्येषु दकारादिप्रतिभासव्यतिरेकी प्रतिभासो दृश्यते द्वितीयवर्णप्रतिभासवत् । न च तादृशं शक्यावसानसत्त्वमाका-**

---

एवं तावन्नित्यवर्णवादिनो दूषिताः । संप्रत्यनित्यवर्णवादिनः प्रत्यवस्थानमाह—**योऽप्याह....अव्युत्पन्नस्यापि स्यात् इति** । अस्यार्थः—योऽपि वर्णक्षणिकवादी प्राह । किमाहेत्यपेक्षायां तदाह—वाक्यं न भिन्नं वर्णेभ्यो विद्यत इति । वाक्यं हि लोकेऽर्थप्रयुक्तम् । तदेव तावन्निरूप्यताम् । किं पदद्वारिकया तन्निरूपणायेत्यभिप्रायेणोक्तम्—वाक्यमिति । वर्णेभ्यो भिन्नं न विद्यत इति । कारणमाह—अनुपलम्भनादिति । कथमनुपलम्भनम्? यावता 'देवदत्त' इत्येकं पदम् 'देवदत्त गामभ्याज' इत्येकं वाक्यमिति वर्णेभ्यो भिन्नं पदं वाक्यं चोपलभ्यत इत्यत आह—न हि देवदत्तादिषु पदवाक्येषु दकारादिप्रतिभासव्यतिरेकी प्रतिभासो दृश्यत इति । न हि देवदत्तादिष्विति । देवदत्ताद्युदाहरणम्, 'देवदत्तादिशब्दे तु स्फुटो भेदः प्रतीयते' इत्यभिप्रायात् । एतच्च 'त एव वर्णात्मानः' इत्यादिना स्वयमेव व्याख्यातम् । द्वितीयवर्णप्रतिभासवदिति । एतदपि 'अर्थान्तरविषयत्वे तु यथावर्णविज्ञानानि' इत्यादिना । एष च यथा द्वितीयवर्णे पूर्ववर्णप्रतिभासव्यतिरेकी प्रतिभासो दृश्यते नैवमिति वैधर्म्यदृष्टान्तः । एवं हेतुं प्रसाध्य साध्येन संबन्धयति—न च तादृशं शक्यावसानसत्त्वमाकारान्तरवदिति । चकारो वाक्यार्थसमुच्चये । तादृशं व्यतिरेकबुद्धिशून्यं वाक्यं पदं वा शक्यावसानसत्त्वं शक्यमवसानमवसायो यस्य सत्त्वस्य तच्छक्यावसानमिति बहुव्रीहिः । शक्यावसानं सत्त्वमिति पुनरपि बहुव्रीहिः । आकारान्तरवदिति । यथा द्वितीये वर्णे प्रथमवर्णादाकारान्तरं व्यतिरेकप्रतिभासाच्छक्यतेऽध्यवसातुमिति वैधर्म्यदृष्टान्तः । आकारान्तरवदिति मतुबन्तं वा । न च तादृशमाकारान्तरवत्तया शक्याध्यवसानसत्त्वमिति ।

रान्तरवत्। न चान्यासम्भवि कार्यं गमकम्, वर्णेष्वेव तत्सम्भवात्। न च पदवाक्यान्तरेषु तदविशेषेऽपि तदभावादसम्भवः, अविशेषासिद्धेः,

---

एवं तावदनुभवः स्फोटात्मनि प्रमाणमित्येतन्निरस्तम्; न त्वनुभवेऽपि विप्रतिपन्नान् प्रति न्यायः प्रदर्शितः 'अविशिष्टादजातस्य विशिष्टात् भाव इष्यते'। इत्यादिना; अत आह—न चान्यासम्भवि कार्यं गमकमिति। अन्यतो वर्णतोऽसम्भवि कार्यमर्थप्रत्ययात्मकं वर्णव्यतिरिक्तयोः पदवाक्ययोर्गमकमिति पूर्वमुक्तम्, तदपि न साधीय इत्यर्थः। कारणमाह—वर्णेष्वेव तत्सम्भवादिति। वर्णेष्वेव सत्सु तस्य कार्यस्य सम्भवादिति। अथवा वर्णानां कार्यं प्रत्यधिकरणत्वमुपचर्यते। अथवा अर्थतः प्रकृतं कार्यहेतुत्वं तच्छब्देन परामृश्यते। नन्वेवं वादी 'भिन्नक्रमेऽपि विज्ञाने न समूहिषु भेदवान्। समूहः' इत्यत्रापरिचितपूर्वी लक्ष्यते, यदेवमाह; अत आह—न च पदवाक्यान्तरेषु तदविशेषेऽपि तदभावादसम्भव इति। पदान्तरेषु यथा जराराजेतिप्रभृतिषु,

"वारणागगभीरा सा साराभीगगणारवा।
कारितारिवधा सेना नासेधा वरितारिका॥"

इत्यादिषु वाक्यान्तरेषु च तदविशेषेऽपि वर्णाविशेषेऽपि तदभावात् अर्थप्रत्ययात्मककार्याभावादसम्भवो वर्णतोऽसम्भवः कार्यस्येति च न वक्तव्यमित्यर्थः। कुत इत्याह—अविशेषासिद्धेरिति। तदविशेषेऽपि तदभावादित्यत्र तदविशेषेऽपीति विशेषणमसिद्धमित्यर्थः। एवं च वदता 'तदेवमभिन्नेषु भिन्नेषु च वर्णात्मसु यन्नानैकं च भासते तत्प्रत्यक्षं पदम्' इति च, 'अतस्तदतिरिच्यमाननिमित्तावासजन्मायमित्यनुमीयते' इति चोभयमप्यपहस्तितं वेदितव्यम्। नन्वविशेषासिद्धेरिति न वक्तव्यम्, अविशेषस्यैव सिद्धत्वात्। यथोक्तम्—

---

१. पदवाक्येषु. मूलम्.

**प्रत्यभिज्ञानस्य च व्यभिचारात्; अनिदर्शनाच्च, क्षणिकत्वात् सर्व-भावानाम्। वर्णविशेषेऽपि वाक्यभेदात् कार्यविशेषोऽयुक्त एव,**

---

"वयं तावत् प्रत्यभिजानीमः; न नः करणदौर्बल्यम्; अन्येऽपि प्रत्यभिजानन्ति—स एवायम्—इति; अतः प्रत्यभिजानन्तो वयमिव नान्य इति वक्तुमर्हन्ति" इति। अत्र किल प्रयोगोऽन्तर्णीतः—शब्दो न क्षणिकः, स एवायमिति प्रत्यभिज्ञानात् आकाशादिवदित्यत आह—प्रत्यभिज्ञानस्य च व्यभिचारादिति। दीपज्वालायामपि 'सैवेयम्' इति प्रत्यभिज्ञास्त्येव; न च सा न क्षणिकेति तत्र व्यभिचारः। ततश्चाविशेषासिद्धिः। ततश्च वर्णेष्वेव तत्सम्भवः। ततश्च नान्यासम्भवि कार्यं गमकमिति। दूषणान्तरमाह—अनिदर्शनाच्चेति। निदर्शनं दृष्टान्तः, तदभावाच्च। पूर्ववत् पूर्वसम्बन्धो दर्शयितव्यः। नन्वात्मादयो नित्या एव सन्ति निदर्शनानि, अत आह—क्षणिक-त्वात्सर्वभावानामिति। यावन्तो लोके भावाः ते सर्वे क्षणिकाः। प्रागभाव-प्रध्वंसाभावयोः व्योम्नश्चावरणाभावरूपस्य स्थिरत्वाद्भावग्रहणम्। यथोक्तम्—

"प्रतिसङ्ख्याप्रतीसङ्ख्यानिरोधव्योमभिस्त्रिभिः।" इति।

तद्विदां चैवमनुमानप्रयोगः—यत्सत्तत्क्षणिकम् यथा घटादि। संश्च विवादाध्यासितः शब्दादिः इति स्वभावहेतुः भावमात्रानुबन्धिसाध्यविषयत्वादिति। ननु यदि क्षणिका वर्णास्तथापि न वर्णा एव वाचकाः; किन्तु तदभिव्यङ्ग्यः स्फोटः, क्षणिकानामयुगपद्भुवां वाचकत्वासम्भवात्; अत आह—वर्णविशेषेऽपि वाक्य-भेदात् कार्यविशेषोऽयुक्त एवेति। अयुक्त इति छेदः। यद्यपि क्षणिका वर्णास्त-थापि न भवदभिमताद्वाक्यात् कार्यभेदोऽर्थप्रतीतिभेदो न युज्यत इति। यथा च क्षणिकेभ्योऽप्यर्थप्रतीतिसम्भवः तथोत्तरत्र भविष्यति। क्वचि-

---

१ कार्यभेदः. ख. २. प्रति- चौ. मुद्रिते.

तस्यातीन्द्रियत्वात् । सन्निधिमात्रादुत्पत्तावव्युत्पन्नस्यापि स्यात् । अपि चैकमनेकावयवात्मकमनवयवं वा । तत्र पूर्वस्मिन् कल्पेऽवयवानामानर्थक्यमर्थवत्ता वा । आनर्थक्ये कथं तदात्मकं वाक्यम्? अर्थवानेवात्मा

---

त्पाठः वर्णाविशेषेऽपीति । यद्यपि जराराजेत्यादौ न वर्णानां विशेषस्तथा च नार्थप्रतीतिहेतुत्वसम्भवः, तथापि तदुपपत्तेः कल्पिताद्वाक्यभेदाद्भवदभिमतान्न तस्य कार्यभेदस्योपपत्तिरिति । कारणमाह—तस्यातीन्द्रियत्वादिति । तस्य वाक्यभेदस्य स्फोटात्मनः प्रत्यक्षायोग्यत्वात् । यथोक्तम्—

"वर्णत्रयपरित्यागे बुद्धिर्नान्यत्र जायते ।" इति ।

न च प्रत्यक्षादन्यत्प्रमाणं तत्र सम्भवति । कार्यानुमानं तु [1]ज्ञानकार्योत्पत्तावेव संभवतीति भावः । अथ सत्तया कार्यजनकत्वमिष्यते तत्राह—सन्निधिमात्रादुत्पत्तावव्युत्पन्नस्यापि स्यादिति । सन्निधिमात्रात् तत्र सत्तामात्रात् अर्थबोधस्योत्पत्ताविष्यमाणायामव्युत्पन्नस्यापि पुरुषस्य प्रथमश्राविणोऽर्थबुद्ध्युत्पत्तिः स्यात् ; न च सेष्यत इत्यर्थः । अत्रैव दूषणान्तरोपक्रमः—अपि च....वत्ता वा । तत्र विकल्पं तावत् करोति—एकमनेकावयवात्मकमनवयवं वेति । यदेकमभिमतं भवतां वाक्यं तत्किं घटादिवदनेकावयवात्मकमिष्यते उत निरवयवमाकाशपरमाण्वादिवदित्यर्थः । प्रथमं कल्पमपि विकल्पयति—तत्र पूर्वस्मिन् कल्पेऽवयवानामानर्थक्यमर्थवत्ता वेति । सुगमो ग्रन्थः । प्रथमपक्षे प्रथमं शिरो दूषयति—आनर्थक्ये·········स्यात् । अर्थशब्दोऽभिधेयवाची ; न विद्यतेऽर्थो येषां तेऽनर्थकाः ; तेषां भावः आनर्थक्यम् । अवयवानामानर्थक्ये कथमनेकावयवात्मकं वाक्यमिति सङ्गच्छते ? न ह्यानर्थक्यवाक्यत्वयोरेकत्र समावेशः सम्भवतीत्यर्थः । कथमित्यत्राह—अर्थवानेवात्मा

---

१. Added न. ख.

वाक्यमित्युच्यते । तदेतेष्ववेवावयवेषु स्वयमनर्थकेषु वाक्यात्मता

---

वाक्यमित्युच्यत इति । यतोऽर्थवानेवात्मा वागात्मा वाक्यमित्युच्यते लोके । वागात्मेति वा पाठः । यथोक्तम्—"संहत्यार्थमभिदधति पदनि वाक्यम्" इति । इदमाकूतम्—अवयवशक्तिः समुदायशक्तिर्वा प्रत्येकशक्त्या अवयवशक्त्या वा व्याप्ता रथाङ्गेषु परमाणुषु च ; सेह वाक्यावयवेभ्यो निवर्तमाना सङ्घातशक्तिमवयवशक्तिं वा निवर्तयति , व्यापकनिवृत्तेर्व्याप्यनिवृत्त्या व्याप्तत्वादिति ; अतोऽनर्थकपदारब्धो वाक्यावयवी तत्समुदायो वा कथमर्थवत्तां भजेत ? अथवा निरर्थकवर्णारब्धं निरर्थकवर्णसमुदायो वा पदमिति लोके प्रसिद्धिः ; वाक्यन्त्वर्थवत्पदारब्धं तत्समुदायो वेति ; अतो वाक्यावयवानामानर्थक्ये कथं तदात्मकं वाक्यमिति संभवति, यतोऽर्थवानेवात्मा वाक्यमित्युच्यते । तदात्मकमित्यत्रावयवेष्वात्मशब्दः, अवयवा आत्मा यस्येति । इहापि तद्विषयोऽर्थवानेवात्मा ; अर्थवन्त एवावयवाः वाक्यमित्युच्यते ; नानर्थक आत्मा, 'गामानय' इत्यादौ वाक्यशब्दप्रयोगदर्शनात् 'गाम्' इत्यादावदर्शनाच्च । अतः किमित्याह—तदिति । एतदव्ययं पञ्चम्यर्थे च । यतोऽनर्थकावयवानां न पारमार्थिकं वाक्यत्वम् , अत एव कारणादित्यर्थः । एतेष्वेवावयवेषु स्वयमनर्थकेष्विति । एतेष्वेवेत्यनेनार्थवत्तया प्रसिद्धिं सूचयति । अवयवेषु पदात्मकेषु । स्वयमनर्थकेष्विति । वाक्यार्थात्पृथक् यथास्वमभिधेयशून्येष्वभ्युपगतेष्वित्यर्थः । वाक्यात्मता वाक्यं नामात्मा येषां तेषां भावो वाक्यात्मता । कल्पितैवारोपितैव स्यादित्यन्वयः । सिंहतेव माणवकादौ । यथा 'सिंहो माणवकः' 'सिंहो देवदत्तः' इति माणवकादौ कल्पिता भवति, एवमनेकावयवात्मकं वाक्यमित्यपि वाक्यतो भिन्नेष्ववयवेषु वाक्यतौपचारिकी स्यान्न पारमार्थिकी ; न ह्यन्यस्यान्यात्मता स्वाभाविकी संभवति, अभावतत्त्वविरोधात् । अतः परशब्दस्य परत्र प्रयोगो भ्रान्तेरुपचाराद्वा सम-

**कल्पितैव सिंहतेव माणवकादौ स्यात् । अर्थवत्त्वे प्रत्येकं परिसमाप्तार्थतया वाक्यलक्षणापत्तेः प्रत्येकं वाक्यभावात् नानेकावयवात्मकं वाक्यम् । तदेकांशज्ञानाच्च वाक्यार्थज्ञानसिद्धेरंशान्तरवैयर्थ्यम् । कालक्षेपाभावश्च ।**

---

र्थनीयः । अनर्थकावयवात्मकं वाक्यमिति भवदीयं वचनमौपचारिकम्, भवतो भ्रान्तिकल्पनाया गरीयस्त्वात्; गौणताकल्पनं तु लघीयः । अथवा तस्माद्भवतो मतेऽवयवेषु वाक्यात्मता 'गामानयेत्येकं पदम्' इत्यादि ब्रुवाणैर्लौकिकैः कल्पितैवेति । ननु मुख्यस्य वाक्यस्यान्यत्रासिद्धौ कथं तत्रास्य कल्पना? उच्यते—

"लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता ।"

इति पक्षेऽन्यत्र सिद्धिरेपक्ष्यते ।

"अर्थे त्वर्थान्तरात्मानमध्यारोप्योपपादिते ।
वाच्यमासाद्य शब्दानां स्वयमेव प्रवर्तनम् ॥"

इत्यस्मिन् पक्षे नान्यत्र सिद्ध्यपेक्षा, 'खपुष्पस्थानीय आत्मा' 'खपुष्पं भवत्सिद्धान्तः' इत्यादिप्रयोगेऽत्यन्तासतः खपुष्पत्वादेः समारोपाङ्गीकरणात् । सिंहता च यद्यप्यन्यत्र विद्यते; तथाप्यत्र न विद्यत इत्यसत्या एवारोपः । अत्रैव द्वितीयं शिरो दूषयति—**अर्थवत्त्वे...सकलश्रुतेः** । अस्यार्थः—**अर्थवत्त्वे** चावयवानां वक्ष्यमाणदोषत्रयापातः । तथा हि—यद्यवयवानामर्थवत्त्वमाश्रीयते तर्हि भवदभिमतमनेकावयवात्मकं वाक्यमित्येतन्न सिध्यति । कुतः? प्रत्येकं वाक्यभावात् अवयवानां प्रत्येकं वाक्यत्वात् । तदपि कुतः? वाक्यलक्षणापत्तेः । प्रत्येकमवयवानाम् "अर्थैकत्वादेकं वाक्यम्" इति यद्वाक्यस्य लक्षणं तस्य प्रसङ्गात् । सापि कस्मात्? प्रत्येकं परिसमाप्तार्थतया । सापि कुतः? अर्थवत्त्वाङ्गीकरणादिति यथोत्तरं हेतुमद्भावः । प्रत्येकपरिसमाप्तार्थताचायुगपद्भुवां प्रत्येकमेव वाचकत्वेनार्थवत्त्वसम्भवात् । दूषणान्तरमाह—**तदेकांशज्ञानाच्च वाक्यार्थज्ञानसिद्धेरंशान्तरवैयर्थ्यमिति** । वाक्यं हि वाक्यार्थज्ञानायार्थ्यते नान्यस्मै प्रयोजनाय ।

**अथ मा भूदनेकावयवत्वहानिरिति सकृत्सकलावयवश्रवणम्, तथापि कालक्षेपो न स्यात्, सकृदेकांशावसायसमये सकलश्रुतेः। अनवयवपश्चिमकल्पेऽप्येकत्वात् क्रमेण गत्यसम्भवात् कालभेदो न युक्तः।**

---

तथा च तस्य वाक्यस्यानेकावयवात्मकस्य य एव कश्चिदंशस्तज्ज्ञानादेव केवलात्समभिलषितस्य वाक्यार्थज्ञानस्य सिद्धेरंशान्तराणां वैयर्थ्यमायुष्मतामापद्यत इति कृतं लौकिकपरीक्षकाणामन्यावयवश्रवणग्रहणादिपरिश्रमेणेति भावः। दूषणान्तरमाह—कालक्षेपाभावश्चेति। एष हि प्रथमं वर्णानवधारयति; पुनश्च तेषां प्रकृतिप्रत्ययविभागेन पदताम्, पदेभ्यश्च तदर्थान्, तेषां चाकाङ्क्षायोग्यतासत्तीरालोचयति; तद्वशेन च तेषां व्यतिषङ्गमाकलयति; ततश्च वाक्यार्थमवबुध्यत इति योऽयं कालस्य वाक्यार्थज्ञानजन्मनि क्षेपो विक्षेपो विलम्बो दृश्यते, सोऽपि नैवंवादिनां संभवति, झटित्येवैकस्माद्वर्णात् पदाद्वा वाक्यावयवाद्वाक्यार्थज्ञानसिद्धेरित्यर्थः। सम्प्रत्यत्रैव प्रकारान्तरमाशङ्कते—अथ मा भूदनेकावयवत्वहानिरिति सकृत्सकलावयवश्रवणमिति। प्रथमदोषभावाभावाधीनभावाभावावुत्तरौ दोषाविति कृत्वा प्रथमस्यैवोपन्यास। मा भूदनेकावयवत्वहानिरिति कृत्वेति सकृदेव सकलावयवश्रवणमाश्रीयत इति। यथा 'धवखदिरपलाशसहकारा वनम्' इति चक्षुषा सकृदेव गृह्यते, तथा श्रोत्रेण 'गामानयेति पदम्' इति सकृदेव गृह्यत इति। परिहरति—तथापि कालक्षेपो न स्यादिति। यद्यपि प्रथमद्वितीयदूषणोद्धारः शक्यते, तथापि तृतीयस्य नोद्धार इत्यर्थः। कारणमाह—सकृदेकांशावसायसमये सकलश्रुतेरिति। प्रथमस्यांशस्यान्यस्य वा कस्यचिदेकस्यांशस्यावसायसमये सकलश्रुतेः साकल्येन वाक्यस्य श्रवणप्रसङ्गादित्यर्थः। ततश्च न कालक्षेपावसितस्य वाक्यस्य तदैवावाचकत्वादिति भावः।

---

१. तदेकाशा– मूलम्.

**न ह्येकस्य क्रमेण ग्रृहीततोपन्ना[1] ; न ह्येकं गृहीतमगृहीतं च भवति, विरोधात् । ग्रहणाग्रहणभेदाच्च[2] क्रमः ; न चाक्रमा वाक्यप्रतिपत्तिरस्ति, सर्ववाक्यव्यवहारश्रवणस्मरणानामनेकक्षणनिमेषानु-**

---

एवं प्रथमपक्षस्य द्वेधा स्थितस्य दूषणं कृतम् । सम्प्रति द्वितीयं दूषयति—**अनवयवपश्चिमकल्पेऽप्येकत्वात्........न वा किञ्चित् ।** एकमनेकावयवात्मकमनवयवं वेत्यत्र अपिशब्देन स्फोटवादिसम्मतिं पूर्वोक्त-दोषपरिहारसम्भावनां च सूचयति । पश्चिमकल्पेऽपि कालभेदो न युक्तः । कालस्य भेदो नानात्वं विक्षेप इति यावत् । यथानेकावयवात्मक-प्रथमपक्षे कालक्षेपाभावोऽस्ति यद्यप्यन्यदोषाभावः । तत्र कारणमुक्तम्—क्रमेण गत्यसम्भवादिति । तत्र कारणमुक्तम्—एकत्वादिति । तत्रापि कारणमुक्तम्—अनवयवेति । एकत्वात् क्रमेण गत्यसम्भवमुपपादयति—**न ह्येकस्य क्रमेण गृहीततोपपन्नेति** । गत्यसम्भवादित्यत्र गतिशब्देन ग्रहणं विवक्षितमिति सूचितम्—**गृहीततेति** । अनुपपत्तिं सूचयति—**न ह्येकं गृहीतमगृहीतं च भवतीति** । कारणमाह—**विरोधादिति** । ग्रहणमेवास्तु मा भूदग्रहणमिति चेदत आह—**ग्रहणाग्रहणभेदाच्च क्रम इति** । यद्येकस्मिन् वस्तुनि ग्रहणान्यपि भिन्नानि ग्रहणप्रागभावरूपाण्यग्रहणान्यपि भिन्नानि सन्ति, तदैव च क्रम उपपद्यते ; नैकत्वे । ग्रहणाग्रहणयोर्यदि प्रथमग्रहणसमये ग्राह्यस्य प्रागभावोऽपि नष्टः, तर्हि सकृदेव गृहीतमिति कथं क्रमवाचो युक्तिः ? अथ न विनष्टः, कथं ग्रहणम् ? न चांशभेदेन तत्सम्भवः, निरवयवत्वा-श्रयणात् । न च निरवयवत्वे विरोधात् क्रमग्रहणमेव परित्यज्यतामिति वाच्यमित्याह—**न चाक्रमा वाक्यप्रतिपत्तिरस्तीति** । वाक्यप्रतिपत्तिर्वाक्यस्य कार्त्स्न्येन प्रतिपत्तिः । कारणमाह—**सर्ववाक्यव्यवहारश्रवणस्मरणानामनेक-**

---

१. ग्रहीति- मूलम्. २. गहणाद्ग्रहण- मूलम्.

**क्रमेण परिसमाप्तेः । न चैकमेकबुद्धिग्राह्यमपरामृष्टवर्णरूपं प्रतिभासते [1]शब्दरूपम्; अन्त्य[2]वर्णबुद्धावपि वर्णानुक्रमप्रतीतेः, तदभावे वाक्यभेद-**

---

क्षणनिमेषानुक्रमेण परिसमाप्तेरिति । सर्ववाक्यानामिति पाठेऽपि [3]व्यवहारादिव्यतिरेकजनिता षष्ठी; [3]व्यवहारो वक्तुरुच्चारणम्; श्रवणं श्रोत्राद्ग्रहणम्; स्मरणं पुनः पूर्वानुभूतानामुच्चारणार्थं पुनरनुसन्धानम्, श्रोत्रा वा पदार्थयोग्यतादिज्ञानार्थं पश्चात् क्रियमाणम्; तेषां वाक्यसम्बन्धिनामनेकेषु क्षणेषु निमेषेषु चानुक्रमेण परिसमाप्तेः । प्रथमं कस्मिंश्चित्क्षणे निमेषे वा सविषयस्य [3]व्यवहारादेः प्रक्रमं कृत्वा तस्यैव द्वितीयादिषु पुनरनुसन्धानमनुक्रमः; एवमनेकेषु क्षणेषु निमेषेषु वानुक्रमेण परिसमाप्तिः । फलनिष्पत्त्यापवर्गः । सर्ववाक्यानां सर्वेषां वाक्यानां लौकिकानां वैदिकानां च । अथवा सर्वशब्दः कृत्स्नविषयः; वाक्यानां कार्त्स्न्येन यानि [3]व्यवहारश्रवणस्मरणानि तेषामिति । अनुक्रमशब्देन क्रमशब्दप्रवृत्तिनिमित्ततां दर्शयति । पूर्वापरकालकलाकलितत्वं हि पौर्वापर्यापरपर्यायः क्रम इति भावः । तिष्ठतु तावदन्यदनुपपत्तिजातम्, अनुपलब्धिरेवैनं निरवयवं शब्दात्मानं वारयतीत्याह—न चैकमेकबुद्धिग्राह्यमपरामृष्टवर्णरूपं प्रतिभासते शब्दरूपमिति । भवतां यदेकमेकबुद्धिग्राह्यं शब्दरूपमभिमतम्, न तदपरामृष्टवर्णरूपं प्रतिभासत इत्यर्थः । सत्यं पूर्वासु बुद्धिषु परामृष्टवर्णरूपं प्रतिभासते, अन्त्यवर्णबुद्धौ तु वर्णोत्तीर्णं प्रकाशत एवेति चेदत आह—अन्त्यवर्णबुद्धावपि वर्णानुक्रमप्रतीतेरिति । अपिशब्देन "नादैराहितबीजायामन्त्येन ध्वनिना सह" इति । अत्र निरवयवप्रतीतेः सिद्धान्तिनाङ्गीकारं सूचयति । वर्णानुक्रमप्रतीतेरिति । वर्णानुक्रमेण वर्णरूपपरामर्शेनैव शब्दरूप-

---

१. शब्दतत्त्वम्. मूलम्.    ३. व्याहार- ख.

२. Omitted वर्ण. मूलम्.

प्रतीत्यभावात् । वर्णानुक्रमोपकारे ह्यनपेक्षिते यथाकथञ्चित्प्रयोगेऽपि

---

प्रतीतेरिति । यथोक्तम्--

"चित्ररूपां च तां बुद्धिं सदसद्वर्णगोचराम् ।" इति ।

तदेवं वर्णानुक्रमवाक्यप्रतीत्योरन्वयो दर्शितः । व्यतिरेके व्यतिरेकोऽप्यस्तीत्याह--तदभावे वाक्यभेदप्रतीत्यभावादिति । वर्णानुक्रमाभावे वाक्यविशेषप्रतीत्यनुदयात् । न हि वर्णानन्तरेण तत्प्रतीतिः, समुद्रशङ्खादिघोषेषु तददर्शनात् । न च तदनुक्रमं विना न च क्वचिद्वाक्ये वर्णरूपं विहाय किञ्चिच्छब्दरूपं प्रकाशते । यथोक्तम्--"भेददर्शनाभावात्" इति । तदेवं न चैकमित्यत्र हेतुद्वयमुक्तम् । अत्र चानवयवपश्चिमकल्पेऽपीत्यादिना परिसमाप्तेरित्यन्तेनैतद्विवक्षितम्--यत्क्रमेण गृह्यते तन्न निरवयवम्, यथा पटः ; क्रमेण च गृह्यते वाक्यम्, अतो न निरवयवमिति इति क्रमग्रहणस्य व्यापकं यदनेकात्मकत्वं तद्विरुद्धमेकत्वमुपलभ्यमानं क्रमग्रहणमपि निवर्तयतीति; क्रमग्रहणान्यथानुपपत्त्यानेकात्मकं वाक्यमिति । पुनश्च न चैकमेकबुद्धिग्राह्यमित्यादिनैतदुक्तम्--वर्णात्मकं वाक्यम्, नियमेन तत्परामर्शपूर्वं प्रतिभासात् ; यत्खलु नियमेन यत्परामर्शपूर्वं प्रतिभासते तत्तदात्मकम्, यथा तन्तुपरामर्शपूर्वकं प्रतीयमानः पट इति वर्णानात्मकत्वमभ्युपगम्यमानं नियमेन तत्परामर्शपूर्वं प्रतीयमानत्वमपि निवर्तयतीति दृष्टविरोधः । नियमेन तत्परामर्शपूर्वकं प्रतीयमानत्वसाधनाय च हेतुद्वयमुक्तम् । वर्णानुक्रमप्रतीतेस्तदभावे वाक्यभेदप्रतीत्यभावादिति च द्वितीयहेतुं विवृणोति--वर्णानुक्रमोपकारे ह्यनपेक्षिते यथाकथंचित्प्रयोगेऽपि तेषां कस्यचिद्वाक्यस्य प्रतीतिप्रसङ्गात् विना वेति । वर्णानुक्रमकृत उपकारो वर्णानुक्रमोपकारः । क्वचित्तथैव पाठः । हिशब्द उपपादनत्वद्योतनार्थः । अनपेक्षित इति । पुरुषेण वाक्यप्रतीतिसिद्ध्यर्थमिति सिध्यति । यथाकथंचित् प्रयोगेऽपि

**तेषां कस्यचिद्वाक्यस्य प्रतीतिप्रसङ्गात् विना वा, तदनुक्रमस्यानुपकारित्वात्, अक्रमेण च व्यवहरणाशक्तेः, गत्यन्तरासम्भवाच्च। न चेदं साम्प्रतम्—नैव वाक्यं वर्णात्मकम्, येन तदनुक्रमकृतो वाक्यभेदः**

---

तेषामिति। अभिमतक्रमेण विपरीतक्रमेण वा वर्णानां प्रयोग इति। कस्यचिद्वाक्यस्येति। यद्वक्तुर्विवक्षितं तस्य। प्रतीतिप्रसङ्गदिति। प्रतीतेः प्रसङ्गाद्वाक्यभेदप्रतीत्यभावादिति। प्रतीतेः प्रतिषेधः तत्प्रसङ्गे सति युज्यत इति प्रसङ्गग्रहणं कृतम्। विना वेति। वर्णैरेव वा विना कस्यचिद्वाक्यस्य प्रतीतिप्रसङ्गादित्यनुषङ्गः। अत्र च यथाकथंचित्प्रयोग इत्यनेन तदभाव इत्यस्य वर्णानुक्रमाभाव इति व्याख्या कृता। वेत्यनेन वर्णाभाव इति। साध्यं त्वनयोः पूर्वमेवेति द्रष्टव्यम्। उभयत्रापि कारणमाह—तदनुक्रमस्यानुपकारित्वादिति। अनुक्रमस्य वाक्यप्रतिपत्तावनुपकारकत्वात् वर्णानुक्रमोपकारे ह्यनपेक्षित इत्यनेनानुपकारित्वबीजकथनम्। परापेक्षितो ह्युपकारो भवति, अनपेक्षितं तु कुर्वन्नोपकारकः; तेनोक्तम्—अनुपकारित्वादिति। ननु यद्यक्रमा वाक्यप्रतिपत्तिर्न स्यात्तत एतत्सर्वं प्रसज्येत; युगपदेव वर्णाननुसन्धाय जानातु वाक्यमिति चेत् तत्राह—अक्रमेण च व्यवहरणाशक्तेरिति। उपलक्षणं चैतच्छ्रवणस्मरणयोरपि। अशक्तिश्च कार्यदर्शनाभावादुन्नीयते। हेत्वन्तरमाह—गत्यन्तरासम्भवाच्चेति। न च क्रमयौगपद्यमन्तरेणान्या काचिद्विधास्तीत्यर्थः। ननु गत्यन्तरं पूर्वमुक्तम्—'प्रयत्नभेदतो भिन्ना ध्वनयोऽस्य प्रकाशकाः' इत्यादिना। अत आह—न चेदं साम्प्रतम्—नैव वाक्यं वर्णात्मकम्, येन तदनुक्रमकृतो वाक्यभेदः स्यात्; अपि तु तत्प्रकृत्यैवाभिन्नमेकमाविद्यमानवर्णादिविभागमनानुपूर्व्यं व्यञ्जकक्रवशाच्च क्रमवत् भागवच्च प्रतिभाति—इति। अस्यार्थः—न चेदं वक्ष्यमाणं साम्प्रतं युक्तम्। इदंशब्दनिर्दिष्टमेव दर्शयति—नैव वाक्यं वर्णात्मकम्। निषेध्यस्य वर्णात्मकत्वस्य दोषवत्तामाह—येन तदनुक्रमकृतो

स्यात्; अपि तु तत् प्रकृत्यैवाभिन्नमेकमविद्यमानवर्णादिविभागमनानुपूर्व्यं व्यञ्जकक्रमवशाच्च क्रमवत् भागवच्च प्रतिभाति—इति, अक्रमस्य क्रमवताभिव्यक्त्ययोगात्; न हि तदेव व्यक्तमव्यक्तं च भवति विरोधात्, येन क्रमेण व्यज्येत। भेदे हि कस्यचिद्व्यक्तावपरमव्यक्तमिति क्रम उपपद्येत।

---

वाक्यभेदः स्यादिति। वर्णात्मकत्वेन हि वर्णानुक्रमकृतो वाक्यभेदः। वर्णानुक्रमाधीनो वाक्यभेदः स्यात्; अतश्च तत्रोक्ता दोषाः प्रसज्येरन्। अपि त्विति। कीदृशं पुनर्वाक्यम्? तत्प्रकृत्यैवाभिन्नमिति। तद्वाक्यं स्वत एवाभिन्नम्, नानुक्रमकृतैकबुद्धिग्राह्यत्वादिभिरित्यर्थः। एकमिति। नानेकमिति। अत्रापि प्रकृत्येति संबध्यते। यथाभिन्नस्याप्यवयविनो यथाङ्गप्रत्यङ्गविभागः नैवमप्यस्येत्युक्तम्—अविद्यमानवर्णादिविभागमिति। आदिशब्देन पदादिकमुपादत्ते। ईदृशस्य च क्रमोऽप्यसम्भावित एवेत्युक्तम्—अनानुपूर्व्यमिति। आनुपूर्व्यरहितमक्रममित्यर्थः। कुतस्तर्हि तथा प्रतीतिस्तदाह—व्यञ्जकक्रमवशाच्च क्रमवद्भागवच्च प्रतिभाति। इतिशब्दः प्रकारवचनः; इदंशब्देनानुसन्धानीयः, यदि पठ्यते यदि वाक्षिप्यते। इदं च पूर्वत्रोक्तमेवेति सुगमम्। असाम्प्रतत्वे कारणमाह—अक्रमस्य क्रमवताभिव्यक्त्ययोगात्। अक्रमस्य व्यङ्ग्यस्य क्रमवता व्यञ्जकेनाभिव्यक्त्यनुपपत्तेरिति। एतदेव स्फोरयति—न हि तदेव व्यक्तमव्यक्तं च भवति विरोधात्, येन क्रमेण व्यज्येत। भेदे हि कस्यचिद्व्यक्तावपरमव्यक्तमिति क्रम उपपद्यत इति। तदेवेति। एतन्निर्भागमेवेत्यर्थः। व्यक्तमव्यक्तं च भवति विरोधादिति सुगमम्। येनेति। येन कारणेन यस्मादित्यर्थः। यच्छब्देन च तस्यैव व्यक्ताव्यक्तत्वसम्भवः परामृश्यते। क्रमेणाभिव्यज्येतेति। वाक्यमिति सिध्यति। न चैष क्रमवद्भागपक्षेऽपि तुल्यो दोष इत्याह—भेदे हीति। अथवा न हि तदेव व्यक्तमव्यक्तं च भवतीत्येतदेव विपर्यये सम्भव-

**अभागत्वे च सकलाश्राविणो न स्याद्वाक्यबुद्धिः, वाक्यस्याश्रवणादवयवाभावाच्च । अतः सकलमेव वाक्यं श्रूयेत न वा किञ्चित् । अथ वर्णानां श्रवणेऽभिव्यक्तिहेतूनां समस्तवर्णोपजनितसंस्कारजन्ययान्त्यया**

---

प्रदर्शनेन साधयति—भेदे हीति । हिशब्दो हेतौ । कस्यचिद्व्यक्ताव-परमव्यक्तमिति क्रम उपपद्येत इति स्पष्टम् । दूषणान्तरमाह—अभागत्वे च सकलाश्राविणो न स्याद्वाक्यबुद्धिः, वाक्यस्याश्रवणादवयवाभावाच्च ; अतः सकलमेव वाक्यं श्रूयेत, न वा किञ्चिदिति । किं चाभागत्वे च वाक्यस्याश्रीयमाणे लोकवेदयोः श्रोतुर्न स्याज्जायेत । वाक्यबुद्धिः वाक्यविषया बुद्धिः । श्रोतारं विशिनष्टि—सकलाश्राविण इति । सकलं वाक्यं श्रोतुमसमर्थस्येति यावत् । कुतः ? वाक्यस्याश्रवणात् ; न हि सकलं वाक्यं सकृदेव श्रूयते, क्रमेणैव श्रवणादित्युक्तम् । न चावयवश्रवणं भवन्मते सम्भवतीत्युक्तम्—अवयवाभावाच्चेति । किं पुनस्तत्र भवेत् ? तदुक्तम्—अतः सकलमेव वाक्यं श्रूयेत, न वा किञ्चिदिति । श्रूयेतेत्यनुषङ्गः । अत्रोत्तरत्वेन पूर्वोक्तमनुभाषते—**अथ वर्णानां श्रवणेऽभिव्यक्तिहेतूनां समस्तवर्णोपजनितसंस्कारजन्ययान्त्यया बुद्ध्या वाक्यावधारणमितीति** । मनुष इति शेषः । वाक्यावधारणमिति । निरवयवस्य वाक्यस्य श्रोत्रेणानुभव इत्यर्थः । बुद्ध्येति । एकया बुद्ध्येत्यर्थः । अनेन क्रममन्तरेण वाक्यावधारणं दर्शयति । अन्त्ययेति । सकलवर्णश्रवणोत्तरकालीनयेत्यर्थः । किं तर्हि पूर्वाभिर्बुद्धिभिः कार्यम्, तदाह—वर्णानां श्रवणेऽभिव्यक्तिहेतूनामिति । वर्णानि हि वाक्यस्याभिव्यक्तिहेतवः; सकलवाक्यवर्तिनां वाक्याभिव्यक्तिहेतूनां निखिलानां वर्णानां श्रवणे निर्वृत्त इत्यर्थः । कथं क्रमवतां वर्णग्रहणानामेकवाक्याभिव्यक्तिहेतुत्वमिति चेत्तत उक्तम्—समस्तवर्णोपजनितसंस्कारजन्ययेति । प्रत्येकमनुभूतैर्वर्णैरन्येऽन्ये च संस्कारा जन्यन्ते, तैश्च सम्भूयैका बुद्धि-

**बुद्धया वाक्यावधारणमिति । तदपि मृषा, वर्णरूपविवेकेन कस्यचित् कदाचिदज्ञानात्, वर्णानां च क्रममन्तरेणाप्रतीतेः कुतोऽक्रममेकबुद्धिग्राह्यं वाक्यं नाम ? केवलमेष मनोरथः । क्रमवद्भ्यश्च ध्वनिभ्यः प्रत्येकमप्रतीतेः**

---

जन्यते ; संस्कारैः श्रोत्रमनुगृह्यते, अनुगृहीतं च श्रोत्रं बुद्धिं जनयतीति द्रष्टव्यम् । समस्तवर्णोपजनितैः संस्कारैः श्रोत्रानुग्रहद्वारा जन्ययेत्यर्थः । अतः क्रमग्रहणाद्युपपत्तिरिति भावः । परिहरति —**तदपि........अलमनेन** । यद्वर्णानां श्रवण इत्यादि पूर्वोक्तदूषणोद्धारणायोक्तम्, तदपि पूर्ववन्मिथ्येत्यर्थः । कारणमाह—वर्णरूपविवेकेन कस्यचित्कदाचिदज्ञानादिति । न हि वर्णरूप- विविक्तं वाक्यरूपं कस्यचिदपि पुरुषस्य कदाचिदपि कस्मिन्नपि काले ज्ञायत इति । उपलक्षणं चैतत्कदाचिदिति, कुत्रापि वा देश इति द्रष्टव्यम् । अथवा वर्णरूपविवेकेन कस्यचिद्यथातथा वा भवदभिमतस्य वाक्यस्य कदा- चिदेकैकवर्णज्ञानसमये सकलवर्णानुभवोत्तरकालं वा ज्ञायमानत्वाभावादित्यर्थः । अथ वर्णात्मकमेव वाक्यमित्यभ्युपगमः तत्राह—वर्णानां च क्रममन्तरेणा- प्रतिपत्तेः कुतोऽक्रममेकबुद्धिग्राह्यं वाक्यं नामेति । क्रममन्तरेणाप्रतिपत्तेरिति । यथोक्तम्—'न चाक्रमा वाक्यप्रतिपत्तिरस्ति' इत्यादि । ततश्च कुतो हेतो- रक्रममेकबुद्धिग्राह्यं वाक्यं नामेति । भवदभ्युपगमः सेत्स्यति । नामशब्देन 'तत्प्रकृत्यैवाभिन्नम्' इत्यादिनाभ्युपगतिं स्मारयति । अत एतज्जात्यन्धस्य कामिनीरूपसाक्षात्कारस्पृहेव मनोरथमात्रमित्याह—केवलमेष मनोरथ इति । एष इति । वर्णानां श्रवणेऽभिव्यक्तिहेतूनामिति । ईदृश इति । अथवा तदपि मृषेत्यत्र कुतोऽक्रममेकबुद्धिग्राह्यं वाक्यं नामेति हेतुः; तत्साधनाय च हेतुद्वयं वर्णरूपेत्यादि । यत्किल निरवयवं वाक्यं तद्वर्णरूपविविक्तं वा तद्रूपं वा अभ्युपेयते ? न तावत्तद्रूपरहितम् "वर्णत्रयपरित्यागे बुद्धिर्नान्यत्र जायते" इति स्थितत्वात् । न च वर्णात्मकम्; तस्य क्रममन्तरेणाप्रति-

समुदायाभावाच्चार्थप्रतीतिमन्विच्छन्नेकं शब्दात्मानं प्रकल्पयन्न तत्रावस्थातुमर्हति ; कर्मात्माप्यस्य हस्तसंज्ञादिषु प्रतिपत्तिहेतुरेकः कल्प्य आपतति ; तत्राप्येकांशादप्रतिपत्तिरप्रतिसन्धानं च कर्मक्षणानामिति । तस्मात्

---

पत्तेः । अतः कुतो हेतोरक्रममेकबुद्धिग्राह्यं वाक्यमिति संभवति ? अतो वर्णानां श्रवणमित्यादिकं मृषैव मनोरथमात्रमित्यर्थः । दूषणान्तरमाह—क्रमवद्भ्यश्च ध्वनिभ्यः प्रत्येकमप्रतीतेः । समुदायाभावाच्चार्थप्रतीतिमन्विच्छन्नेकं शब्दात्मानं प्रकल्पयन्न तत्रावस्थातुमर्हति । अस्यार्थः—ये खलु स्फोटस्याभिव्यञ्जका ध्वनयो वर्णा वा न ते क्रमेणार्थमवबोधयन्ति अदर्शनात् । न च समुदायस्तेषामस्ति , क्षणिकत्वेनायौगपद्यात् । तत्र कुतोऽर्थप्रतिपत्तिरेषेति निरूपयन् तत्कारणतया च निरवयवं शब्दात्मानं प्रकल्पयेत् । प्रकल्पयन्न तत्रैवावस्थातुमर्हति । एकशब्दकल्पनां कृत्वैव न विरन्तुमर्हति । अन्यदपि बहु कल्पनीयमापद्यते । क्वचित्पाठः प्रकल्पयन्नवस्थातुमर्हतीति । प्रकल्पनामारभमाणः स्वयमेव तत्रोपस्थातुमर्हति । कल्पनातो विरन्तुमर्हति अतिप्रसङ्गभयादित्यर्थः । किं तर्हीत्याह—कर्मात्मेति । पाठान्तरे कुत इत्यत्राह—कर्मात्माप्यस्य हस्तसंज्ञादिषु प्रतिपत्तिहेतुरेकः कल्प्य आपततीति । ये पुनर्हस्तसंज्ञादयोऽर्थप्रतीत्युपाया दृश्यन्ते तेष्वप्येकः क्रमात्मा ह्यनवयवोऽस्य स्फोटवादिनः कल्पनीयः प्रसज्येत—कर्मक्षणातिरिक्तः क्रमात्मार्थप्रतिपत्तिहेतुरिति । कारणमाह—तत्राप्येकांशादप्रतिपत्तिरप्रतिसन्धानं च कर्मक्षणानामितीति । इतिर्हेतौ । तत्रापि हस्तसंज्ञादिषु कर्मक्षणनिचयेष्वप्येकांशात् हस्तसंज्ञासमुदायस्य समुदायिन एकैकस्मात् कर्मक्षणादर्थस्याप्रतिपत्तिरिति दोषस्तावदस्ति । न च कर्मक्षणाः परस्परं प्रतिसन्धीयन्त इति वर्णवदेव साहित्याभावात् न समुदायस्य वाचकतेति तदतिरेकिणः कल्पनापातः । न च तदिष्यत इति । भवन्मते वा कथं

**क्रमभाविन एव यथास्वं करणप्रयोगाद्भिन्ना वर्णभागाः कर्मभागा**

---

क्षणिकेभ्योऽर्थप्रतिपत्तिः । अत आह—तस्मात्क्रमभाविन एव वर्णा यथास्वं करणप्रयोगाद्भिन्ना वर्णभागाः कर्मभागा इव विकल्पविषया यथासङ्केतं प्रत्ययहेतव इति । यस्माद्ध्वस्तसंज्ञादितुल्ययोगक्षेमत्वं वर्णानां तस्मादित्यर्थः । क्रमभाविन एवेति । वर्णभागविशेषणमेतत् । एवकारेण न साहित्यापेक्षेति दर्शयति । अथवा क्रमभाविन इति पञ्चमी । करणप्रयोगविशेषणमेव । एवकारेण च क्रमवत् कार्यानुगुण्यमस्त्येवेति सूचयति । यथास्वं करणप्रयोगाद्भिन्ना इति । वर्णानां हि भिन्नानि करणानि "स्पृष्टं करणं स्पर्शानाम्" इत्यादि । तेन यथास्वमात्मीयस्य करणस्य प्रयोगात् भिन्नाः परस्परविलक्षणा व्यावृत्तात्मानश्च निष्पन्नाः, न त्वेकमेव शब्दरूपमन्यथान्यथा च प्रकाशत इत्यर्थः । वर्णभागा इति कर्मधारयः । पदवाक्ययोर्हि वर्णा भागाः । कर्मभागा इवेति । अत्रापि वर्णभागवत् समासः । अथवा वर्णस्य भागा वर्णभागाः, कर्मणो भागाः कर्मभागाः, भागसमुदायस्तु वर्णशब्देन कर्मशब्देन चोच्यते । विकल्पविषया यथा सङ्केतं प्रत्ययहेतव इति । विकल्पस्य कल्पनाया विषया भूत्वा सङ्केतानुसारेणार्थप्रत्ययहेतव इति । वर्णानां भागेषु बहुष्वपि वर्ण इति विकल्पो जायते; तथा गकारादौकार इति च ; वर्णेषु च बहुषु 'गौरित्येकं पदम्' इति विकल्पः । तादृशेषु च पदेषु 'गामानयेत्येकं वाक्यम्' इत्यादिविकल्पः । तथा कर्मभागेष्वपि 'कर्म गमनम्' इत्यादिविकल्पो दर्शयितव्यः । क्वचित्तु क्रमभाविन एवेत्यस्यानन्तरं वर्णा इति पदमस्ति, तत्र वाशब्दाध्याहारेण वर्णा वर्णांशा वा विकल्पविषया यथासङ्केतं प्रत्ययहेतव इति योज्यम् । केचिद्धि वर्णस्वलक्षण एक इति प्रतिपन्नाः । अन्यैस्तु वर्णभागारब्धोऽवयवी वर्ण इत्यभ्युपगतम् । बौद्धैस्त्ववयवी नेष्यते, परमाणुसमूहस्यैव महत्त्व-

इव विकल्पविषया यथासङ्केतं प्रत्ययहेतवः । यैश्च दोषैरनभिमतं

---

स्वीकारात् । तेनोक्तम्—वर्णानां भागा इति । न च कर्म अवयवि कैश्चिदपीष्यते, तेनोक्तम्—कर्मभागा इवेति । ननु भिन्नानां वर्णानां कथं वाचकत्वनियमः—इयन्तोऽस्यार्थस्य वाचका इति ? कथं च प्रथमश्रवणे न प्रत्याययन्ति ? अत उक्तम्—यथासङ्केतमिति । ननु वर्णस्वलक्षणानां तद्भागस्वलक्षणानां वाभिलापसंसर्गयोग्यत्वाभावात् कथं 'गौरितिपदं सास्नादिमतो वाचकम्' इति सम्बन्धाख्यानसम्भवः ? विकल्पविषयत्वादर्थानां शब्दविषयत्वं शब्दानां च शब्दशब्दादिविषयत्वम् । के पुनरमी विकल्पा नाम ? येयं कल्पनेति प्रसिद्धा । का पुनरसौ अभिलापसंसर्गयोग्यप्रतिभास आकारो यस्याः प्रतीतेः सासौ । कस्तस्या विषयः ? स्वाकार एवेत्येके; कल्पितं निस्तत्त्वमलीकमित्यन्ये; अन्यव्यावृत्तिरूपं च तद्भावाभावसाधारणो ह्यर्थः शब्दादवगम्यते । यदि च यादृशो बहिर्ज्वलनादिरर्थक्रियासमर्थो दृष्टः, तादृश एव विकल्पैः समारोप्यते ; एवं तर्हि 'वृक्षः' इत्युक्ते सदसत्त्वे प्रत्यपेक्षा न स्यात् , तद्वचनशब्दसमभिव्याहारश्च यथा 'अस्ति वृक्षो न वा' इति । न हि बाह्ये दृश्यमाने सद्भावापेक्षा भवति, दृष्टस्य भावस्यैव सद्भावात्मकत्वात् । नाप्यभावापेक्षा, दृष्टस्वरूपस्यासत्त्वविरोधात् । एवमेव दृष्टसदृशः समारोपितोऽपि भावाव्यभिचारादभावविरोधाच्च 'अस्ति नास्ति' इति नापेक्षेत न च ताभ्यां संबध्येत । अतो विधिप्रतिषेधसाधारण उभयसम्बन्धयोग्यो विकल्पैरर्थोऽवसीयते इत्यनुभवायत्तमेतत् । एवं चोभयसाधारणो बाह्यविधर्मा आरोपितो विकल्पैरित्याश्रयणीयम् । दृष्टसदृशे ह्यारोप्यमाणे विधिरूपः शब्दार्थो भवेत्, दर्शनेन भावरूपविधानात् । अतो विधिरूपं स्प्रष्टुं तत्सदृशं चारोपयितुमसमर्थो विकल्पो वृक्षाभावनिष्ठं वृक्षमारोपयति ; शब्दोऽपि तत्समानविषयस्तथाविधमेवाभिनिविशते । एवं चावृक्षनिवृत्ति-

मात्रपर्यवसायिनि शब्दे भावाभावयोरुदासीने 'वृक्षः' इत्युक्ते युक्तैव भावाभावौ प्रत्यपेक्षा तद्वचनसम्बन्धश्च । नन्वेवं बाह्यविधर्मणो बहिरसतः कथं 'वृक्षोऽयम्' इति बहिरवभासः ? बाह्यसादृश्यात् । किं पुनरत्यन्तासतोऽलीकस्य परमार्थसता बाह्येन सादृश्यम् ? अतत्कारिव्यावृत्तिः , वृक्षो हि बहिरवस्थितोऽतत्कारिभ्यो व्यावृत्तः , तथाविधं च रूपमारोपितमित्येकान्तविसदृशयोरपि बाह्येतरयोरन्यव्यावृत्त्या युक्तमेव सादृश्यम् । अतश्च बाह्याध्यवसायः । के पुनरमी तत्कारिणः ? न ह्येकजातीयाः केचित् संभवन्ति, जातेरभावात् । अत एव कार्याणामप्येकता न सम्भवति । प्राक्कार्यादर्शनाददृष्टपूर्ववस्तुदर्शने कथं तत्कारिताध्यवसायः ? तदनवधारणे च कथमतत्कारिव्यावृत्तं रूपं विकल्पैरारोपितमभिनिविशन्ते शब्दाः ? अत्राहुः—किमत्र कार्यान्तरेण ? दर्शनमेव हि कार्यं दृश्यानां व्यक्तीनाम् । तच्चादृष्टपूर्ववस्तुदर्शनेऽपि जायमानं दृश्यत एवेति तदेककार्याभ्यश्च व्यक्तिभ्योऽन्या अतत्कारिणीः पराणुद्य गवादिशब्दार्था व्यवस्थाप्यन्ते । ननु दर्शनान्यपि यावद्दृश्यं भिद्यमानानि, कथमेकं कार्यम् ? न ; एकप्रत्यवमर्शहेतुत्वेन तेषामभेदात् ; भवति हि गां दृष्टवतः 'गौः' इति पूर्वापरयोरेकोऽवमर्शः ; तदेकत्वाच्च तत्कारिणां दर्शनानामभेदः, तदभेदाच्च दृश्यानां व्यक्तीनाम् । यथाहुः—

"एकप्रत्यवमर्शस्य हेतुत्वाद्धीरभेदिनी ।
एकधीहेतुभावेन व्यक्तीनामप्यभिन्नता ॥" इति ।

अतः समारोपितातत्कारिव्यावृत्त्यभिनिवेशिनो विकल्पाः शब्दाश्चेति न नोपपन्नम् । तदिदमुक्तम्—

"यस्यां[1] यद्रूपमाभाति बाह्यमेकमिवान्यतः ।
व्यावृत्तमिव निस्तत्त्वं परीक्षानङ्गभावतः ॥" इति ।

---

१. तस्याम्. ख.

**वर्णानां वाचकत्वम्, ते स्फोटस्यापि वाचकतामपाकुर्युः । तथा हि—यथैव ध्वनयः क्रमवर्तित्वात् अनवाप्तोपलम्भसाकल्या न वाचकाः,**

---

एष च ज्ञानाकारवादिनामपि साधारणः श्लोकः । तेषामप्येवमेवान्यापोहवचनत्वं शब्दानाम् । भवति चात्र यद्भावाभावसाधारणं ग्रहणे रूपमवसीयते ; तदन्यव्यावृत्तिनिष्ठम् । यथा घटावसायेन पटोऽवसीयमानः 'स ह्यस्ति न वा' इति भावाभावसाधारणोऽवसीयते अन्यनिवृत्तिनिष्ठश्च । तथा च सर्वे शब्दा भावाभावसाधारणरूपाभिनिवेशिन इत्यनुभवसिद्धम् । तेन गोशब्द स्यागोनिवृत्तिर्वाच्या ; शब्दशब्दस्याशब्दनिवृत्तिः ; गोशब्दत्वमगोशब्दव्यावृत्तिः ; तथा चागोशब्दव्यावृत्त्या गोशब्दत्वेन लक्षितानां वर्णानां वाचकत्वम् यथा हस्तसंज्ञादिकर्मभागा विकल्पविषया यथासङ्केतं प्रतीतिप्रवृत्तिहेतव इति । आहुश्च—

"स्वतो नैवास्ति शक्तत्वं वाच्यवाचकयोर्मिथः ।
प्रतीतिः समयात्पुंसां भवेदक्षिनिकोचवत् ॥" इति ।

ननु वर्णानां वाचकत्वं प्रतिक्षिप्तम् 'निरुद्धबुद्धयो नैव' इत्यादौ; अत आह—यैश्च दोषैरनभिमतं वर्णानां वाचकत्वं ते स्फोटस्यापि वाचकतामपाकुर्युरिति । यद्दोषभयाद्वर्णवाचकत्वं भवद्भिर्नाङ्गीक्रियते, तदेव निमित्तं स्फोटपरित्यागेऽप्यस्ति विनाभिनिवेशादित्यर्थः । अनेन च "यस्यानवयवस्फोटो व्यज्यते" इत्येवमादिनित्यवर्णवादिवचनं सत्यमेवेत्युक्तम् । एतदेव स्फोरयति—तथा हि—यथैव ध्वनयः क्रमवर्तित्वादनवाप्तोपलम्भसाकल्या न वाचकाः, तथा स्फोटोऽपीति । ध्वनिरेव शब्दः; ताल्वादिकरणको ध्वनिर्वर्ण इति लोके गीयते ; न ध्वनिव्यतिरिक्तो वर्णो नाम कश्चिदित्यभिप्रायेणोक्तम्—ध्वनय इति ।

---

१. अभिधायकत्वम्. मूलम्.
२. क्रमवत्त्वात्. मूलम्.
३. साकल्यत्वात्. मूलम्.

तथा स्फोटोऽपि । तथा हि—यथा ते नात्मन्युपलम्भसाकल्याय प्रभवन्ति, तथा स्फोटेऽपि, नियतक्रमवर्तित्वात् । नाप्येक एव तत्कुर्यात्, अन्यवैयर्थ्यप्रसङ्गात्; तत्काले च समस्तरूपानुपलक्षणात् ।

---

क्रमवर्तित्वादिति । ध्वनयो हि क्रमेणोत्पद्यन्ते, करणप्रयोगस्य क्रमवर्तित्वात्; तथैव कर्तुः शक्तेः । अनवाप्तोपलम्भसाकल्या इति । अनवाप्तं स्वविषयोपलम्भसाकल्यं यैरिति । उपलम्भानां साकल्यं सामस्त्यम्; न हि क्रमवर्तिनामुपलम्भाः संहता भवन्तीति न वाचका इति । तथा स्फोटोऽपीति । तथैव स्फोटोऽप्यनवाप्तोपलम्भसाकल्य इति न वाचक इत्यर्थः । ननु स्फोटो न क्रमवर्ती; तस्यैकत्वात् कथमनवाप्तोपलम्भसाकल्यत्वम्? अत आह—तथा हि यथा ते नात्मन्युपलम्भसाकल्याय प्रभवन्ति, तथा स्फोटेऽपीति । ते ध्वनय इत्यर्थः । नात्मन्युपलम्भसाकल्याय प्रभवन्तीति । स्वविषयोपलम्भसाकल्याय न समर्था इति । तथा स्फोटेऽपीति । स्फोटविषयोपलम्भसाकल्यमपि कर्तुं न प्रभवन्तीत्यर्थः । कारणमाह—नियतक्रमवर्तित्वादिति । न स्फोटस्य क्रमवर्तित्वं विवक्षितम्, किं तु ध्वनीनामेव क्रमवर्तित्वात् स्फोटस्याप्यनवाप्तोपलम्भसाकल्यमित्यर्थः । नन्वनेकवर्णात्मकत्वे वाक्यस्य न प्रत्येकं वर्णेषु वाक्यबुद्धिसाकल्यमस्ति; एकैकस्तु ध्वनिर्वाक्यबुद्धिसाकल्यमेव करोति 'प्रत्येकमनुपाख्येयज्ञानतद्भावनाक्रमात्' इति न्यायात् । अत आह—नाप्येक एव तत्कुर्यादिति । नापि चैक एव ध्वनिः स्फोटोपलम्भसाकल्यं करोतीति संभवतीत्यर्थः । कारणमाह—अन्यवैयर्थ्यप्रसङ्गादिति । यद्येको यः कश्चित् स्फोटे सकलोपलम्भं कुर्यात्, किं तदान्यैः कार्यमित्यानर्थक्यमन्येषां ध्वनीनामापद्येतेत्यर्थः । हेत्वन्तरमाह—तत्काले च समस्तरूपानुपलक्षणादिति । तत्काले एकवर्णकाले वाक्यस्य यत्समस्तं रूपं तस्यानुपलक्षणात्, ध्वनिना केनचिल्लक्षणेनाप्रतिपादनात्; न ह्येकैकवर्णविज्ञाने समस्तवाक्यबुद्धिर्दृश्यते,

---

१. Omitted. वर्ति. मूलम्.

तदयमलब्धसकलोपलम्भो नादवदेवोपलम्भसाकल्यसाध्यमर्थं न साधयितुमर्हति । उपलम्भाभावे सतोऽप्यसदविशेषादुपलम्भसाध्येऽर्थे सत्तामात्रेणासाधनात् व्यक्त्यपेक्षत्वाच्च[1] । सा च व्यक्तिः

---

एकदेशबुद्ध्युत्पत्तेरित्यर्थः । ततः किमित्याह—तदयमलब्धसकलोपलम्भो नादवदेवोपलम्भसाकल्यसाध्यमर्थं न साधयितुमर्हतीति । तत्तस्माद्यस्मात् प्रत्येकं ध्वनयोऽन्यानवगमितं रूपं वाक्यस्य प्रकाशयन्ति तस्मादित्यर्थः । अयं स्फोटः । अलब्धसकलोपलम्भ इति । न ह्यन्त्यध्वनिसमयेऽपि वाक्यस्य साकल्यमवगतम्, पूर्वावगतस्य तदानीमनुपलम्भनात् तत्कालिकस्य च पूर्वमित्यर्थः । नादवदेवेति । ध्वनिवदेवेत्यर्थः । उपलम्भसाकल्यसाध्यमर्थमिति । उपलम्भसाकल्यसाध्यता चान्वयव्यतिरेकाभ्यामवधृतेति भावः । न साधयितुमर्हतीति । न बोधयितुं शक्नोतीत्यर्थः । यद्यप्यन्त्यध्वनिसमये न साकल्येनोपलब्धिः, तथापि साकल्येन तदानीमस्त्येवेति किं न कार्यं कुर्यादत आह—उपलम्भाभावे सतोऽप्यसदविशेषादिति । यद्यपि सदेव वाक्यं भवताम्, तथापि तस्य साकल्येनोपलम्भाभावेऽस्मदभिमतातीतासद्वर्णेभ्यो न विशेषः कश्चन विद्यत इत्यर्थः । ननु चक्षुरादयो यथा भवतामेव सत्तयार्थज्ञानं जनयन्ति तथा अस्मन्मते वाक्यमपीति चेत्तत्राह—उपलम्भसाध्येऽर्थे सत्तामात्रेणासाधनादिति । यद्धि किलोपलम्भद्वारेणार्थबोधहेतुस्तन्न सत्तामात्रेणोपलम्भं वर्जयित्वार्थं बोधयितुं शक्नोति; लिङ्गशब्दयोश्च ज्ञाततया ज्ञानहेतुत्वमन्वमव्यतिरेकावधृतमिति भावः । नन्वस्तु सकलोपलम्भः, स चान्त्यध्वन्युत्तरकालं स्फुटमुपजायत एवेत्यत आह—व्यक्त्यपेक्षत्वाच्चेति । न हि ध्वनिकृताभिव्यक्तिमन्तरेण शब्दोऽक्षेण गृह्यत इति । नन्वस्तु ध्वनिभिरभिव्यक्तिरपि, अत आह—सा च व्यक्तिः क्रमवत्यलब्धसाकल्येति । अपि च या वाक्यस्याभिव्यक्तिः सापि ध्वनिकार्यभूता क्रमवत्त्वात् ध्वनीनां तद्वशा-

---

१. अपेक्षितत्वात्. मूलम्.

**क्रमवत्यलब्धसाकल्या सदसतोस्तुल्योपयोगात् तद्रूपोपलब्ध्यभावात् । अतो ध्वनिभिर्यदशक्यं तत्स्फोटेनापीत्यलमनेन ।**

**स्यान्मतम्—सरोरस इत्यादिपदेषु वर्णभेदाभावादर्थभेदाभावः, कारणाभेदे[1] कार्यभेदायोगादिति । तदसत्, आनुपूर्वीतो वर्णानां भेदात् ।**

---

त्तद्वदेव क्रमवर्ती नैकस्मिन् क्षणे लब्धसाकल्या संभवतीत्यर्थः । ननु व्यक्तता तावत् सर्वध्वनिकृता विद्यत एव । व्यक्तं च वाक्यं वाचकमत आह—सदसतोस्तुल्योपयोगात्तद्रूपोपलब्ध्यभावादिति । अभिव्यक्तिर्हि ज्ञानम्; व्यक्तता च ज्ञानकर्मत्वम्; तच्चोभयं क्षणिकमित्यविवादम्; अतोऽभिव्यक्त्यभावेऽभिव्यक्तताप्यसत्येव । ननु त्वत्पक्षे वाक्यमसदेव; अस्मत्पक्षे तु तस्य सत्त्वमस्तीति विशेषः । सत्यमस्त्येव विशेषः; यथा किलासतो वाक्यस्यार्थप्रतीतावनुपयोगः, तथा सतोऽप्यनुपयोग एव । कुतः? तद्रूपोपलब्ध्यभावाद्वाक्यरूपोपलब्ध्यभावात् । उपलब्ध्यभावश्च क्षणिकत्वेन निरन्वयविनष्टत्वादिति । अतः "सोऽपि पर्यनुयोगेन नैवानेन विमुच्यते" इत्यवस्थितमेवेत्युपसंहरन्नाह—अतो ध्वनिभिर्यदशक्यं तत्स्फोटेनापीति । अशक्यमित्यनुषङ्गः । इत्यलमनेनेति । इति हेतोः कृतमनेन स्फोटेनेति । अथवा स्फोटनिरासनिर्बन्धेन दूषणवचनप्रबन्धेनेति वा ।

सम्प्रत्यत्र स्फोटवादिनोक्तं विशेषमुपन्यस्यति—**स्यान्मतम्........ सिद्धिरिति** । स्यान्मतं सरोरस इत्यादिपदेषु वर्णभेदाभावादर्थभेदाभावः, कारणाभेदे कार्यभेदायोगादिति । अनेन च 'भिन्नेऽपि क्रमविज्ञाने' इत्यत्रोक्तमनुभाष्यते । सरोरस इत्यादिषु पदेष्वित्यादिशब्देन जराराजेत्यादिपरामर्शः । वर्णभेदाभावादर्थभेदाभाव इति । न ह्यत्र वर्णा भिद्यन्ते, विन्यासमात्रस्य भेदात् । कथं पुनरनयोर्हेतुहेतुमद्भावोऽत आह—कारणाभेदे

---

१. कारणभेदाभावे. मूलम्.

**का पुनरियमानुपूर्वी नाम[1] ? तद्धेतूनां चेतसां तद्ग्राहिणां च कार्यकारणता । तथा च[2] कार्यकारणभूतप्रत्ययनिर्वर्त्यस्तान्निर्वर्तकं चेत् प्रतिपदं**

---

कार्यभेदायोगादिति । सुगमो ग्रन्थः । परिहरति—तदसत् । कारणमाह—आनुपूर्वीतो वर्णानां भेदादिति । क्रमवतामभेदेऽपि क्रमस्य भेदात् क्रमवन्तोऽपि भिद्यन्त एवेत्यर्थः । शङ्कते—का पुनरियमानुपूर्वी नामेति । असत्सु क्रमवत्सु कथं तद्धर्मस्य क्रमस्य सम्भव इत्यभिप्रायः । उत्तरमाह—तद्धेतूनां चेतसां तद्ग्राहिणां च कार्यकारणतेति । कार्यकारणभाव इति वा पाठः । तच्छब्दद्वयेन वर्णपरामर्शः । वर्णकारणभूतानां वक्तृचेतसां परस्परं कार्यकारणता, वर्णग्राहिणां च श्रोतृचेतसां परस्परं कार्यकारणभावो वर्णानामानुपूर्वीत्यर्थः । न हि सर इत्यत्र ये वर्णाः त एव रस इत्यत्रेति नास्माकं सिद्धम्, सर्वेषां भावानां क्षणिकत्वात् । "क्षणिकाः सर्वसंस्काराः" इति स्थितेः । अतः क्रमभेदेऽपि समूहभेदोऽस्त्येवेत्यसिद्धम् 'न समूहो भेदवान्' इति । नन्वेवमपि वक्तृभेदे अर्थप्रतीतिः प्रसज्येत, अत उक्तम्—आनुपूर्वीतो वर्णानां भेदादिति । नन्वानुपूर्व्यपि न संहत्यज्ञाने संभवतीत्युक्तम्, अत उक्तम्—तद्धेतूनां चेतसां तद्ग्राहिणां च कार्यकारणतेति । एकस्मिन् सन्ताने वर्तमानानां ज्ञानानां कार्यकारणता नालयान्तरवर्तिनामालयान्तरवर्तिनां च परस्परं कार्यकारणभाव इति स्थितिः ; अतो नैकः पुरुषो वर्णानां प्रयोक्ता हेतुः, नैकश्च श्रोता वर्णानाम् ; किं त्वनेकानि चित्तानि; अतो नालयान्तरज्ञानेन ततोऽन्यालयज्ञानेन च समुत्थापितानां वर्णानां न वाचकतेत्यभिप्रायेणोक्तम्—कार्यकारणतेति । तत्र तद्धेतूनां चेतसां कार्यकारणतां पुरस्कुर्वन्नाह—तथा च कार्यकारणभूतप्रत्ययनिर्वर्त्यस्तान्निर्वर्तकं चेत् प्रतिपदं वर्णानां भिन्न एव स्वभावः, कर्तृचित्तसंस्कारभेदादिति । तथा च प्रतिपदं वर्णानां भिन्न एव स्वभावः । कुतः ? कार्यकारणभूतप्रत्ययनिर्वर्त्ये

---

१. Omitted. नाम. मूलम्    २. हि. मूलम्.

**वर्णानां भिन्न एव स्वभावः कर्तृचित्तसंस्कारभेदात्; अतोऽर्थभेद-सिद्धिरिति ॥**

---

तन्निर्वर्तकश्चेति कर्तृचित्तसंस्कारभेदादित्यन्वयः । वर्णानां कर्तृभूतस्य चित्तस्य यः संस्कारः वासना तस्य भेदात् विलक्षणत्वादिति । संस्कारेण हि कर्तृभूतं चित्तं वर्णानुत्पादयति ; संस्कारस्य च भिन्नस्वभावत्वात् वर्णानामपि भिन्न एव स्वभावः । कीदृशः संस्कारभेदः ? कार्यकारणभूतप्रत्ययनिर्वर्त्य-स्तन्निर्वर्तकश्चेतीति । भिन्नसन्ततिपतितचित्तजन्ययोर्वर्णयोर्वाचकत्वादर्शनात् मिथः कार्यकारणताङ्गमित्यवधृता; अतो रस इत्यत्र रेफस्य सकारजनक-चित्तक्षणपूर्वभावितत्कारणभूतचित्तक्षणजन्यसंस्कारहेतुताङ्गम्; सकारस्य पुना रेफकारणभूतचित्तक्षणानन्तरभावितत्कार्यभूतचित्तजनितसंस्कारहेतुताङ्गम् ; सर इत्यत्र विपरीतम् ; कार्यकारणभूतेन प्रत्ययेन चित्तेन निर्वर्त्यः संस्कारः तथा तन्निर्वर्तकः कार्यकारणभूतप्रत्ययनिर्वर्तक इत्येवं संस्कारभेदात्; प्रत्ययेन हि यद्यज्जन्यते तत्र तत्र तस्य संस्कारो व्यापार इति वेदितव्यम् । अथवा कार्यकारणभूतप्रत्ययनिर्वर्त्यस्तन्निर्वर्तकश्चेति वर्णानां भिन्न एव स्वभाव इति यथाविन्यासमेवान्वयः । कर्तृभूतेन कार्यकारणभूतेन प्रत्ययेन चित्तेन निर्वर्त्यो वर्णस्वभावः, तथा श्रोतृभूतस्य कार्यकारणभूतस्य प्रत्ययस्य यद्वर्णविषयं वृत्तिज्ञानं तस्य निर्वर्तकश्चेति भिन्न एव वर्णानां स्वभावः । अनेन हेतुत्वमेव वर्णानां विषयत्वमिति दर्शितम् । यथाहुः—

"भिन्नकालं कथं ग्राह्यमिति चेद्ग्राह्यतां विदुः ।
हेतुत्वमेव युक्तिज्ञा ज्ञानाकारार्पणक्षमम् ॥" इति ।

कथं पुनः कार्यकारणभूतप्रत्ययजन्यत्वेन वर्णानां स्वभावभेदः,

---

१. Omitted भेद. मूलम्.

तद्दर्शितम्—कर्तृचित्तसंस्कारभेदादिति । पूर्ववद्व्याख्या । अथवा संस्कारशब्देन कारणमभिधीयते ; कर्तृचित्तानां वर्णकारणानां भेदादिति । एवं च व्याख्यायमाने तद्धेतूनां चेतसां तद्ग्राहिणां चेत्युभयोरपि साधारणोऽयं ग्रन्थः । कार्यकारणभूतप्रत्ययनिर्वर्त्यस्तन्निर्वर्तकश्चेत्यत्राप्रयुक्तसंस्कारभेदस्यैव हेतुत्वसंभव इति तस्यैवोपन्यासः । तन्निर्वर्तकश्चेदिति पाठे "शास्त्राणि चेत्प्रमाणं स्युः" इतिवदसंशये चेदिति पदं द्रष्टव्यम् । वक्ता कार्यकारणभूतप्रत्ययनिर्वर्त्यः क्षणिकः कथं तन्निर्वर्तकः वर्णानामुत्पादकः ? नाभिव्यञ्जक इति चेदित्यर्थः । प्रतिपदं वर्णानां भिन्न एव स्वभाव इति । पदे पदे वर्णानां विलक्षणानां तेषामेव च सारूप्येण प्रतीयमानानां भिन्न एव विलक्षण एवात्मा, कर्तृचित्तसंस्कारभेदात् कर्तृभूतस्य चित्तस्य यः संस्कारः व्यापारः तस्य भेदात् ।

"तदतद्रूपिणो भावास्तदतद्रूपजा मताः" इति न्यायादिति ।

ननु कथं कार्यकारणभूतो वर्णानां रचयिता ? आत्मा हि सः; स च नित्य एवेत्यत आह—कर्तृचित्तसंस्कारभेदादिति । कर्तुश्चितस्य संस्कारस्य च भेदात् । भेदश्च कर्तृत्वाच्चित्तत्वात् संस्कारत्वाच्च । तथा हि—यत् कस्याञ्चित् क्रियायां कर्तृ तत् क्षणिकम्, स्थिरत्वे कर्तृत्वायोगात् ; कर्तृत्वं ह्यर्थक्रियाकारिता; सा च क्रमयौगपद्याभ्यां व्याप्ता; न चाक्षणिके तयोः सम्भवः; स्थायी हि पदार्थो न तावद्युगपदर्थक्रियाः सर्वाः कर्तुमर्हति । तथा सति द्वितीये क्षणे कृत्यभावादर्थक्रियाकारित्वविरहादतल्लक्षणापत्तेः क्षणिकत्वमेव स्यात् । अर्थक्रियाकारितैव हि सत्ता, नान्या काचित् ; न हि स भावः सत्तां लभते, यो न काञ्चिदर्थक्रियामारभत इति स्थितिः । नापि क्रमः

१. तथा. ख. २. कृत्याभावात्. ख.

तस्यापि —

अन्यस्य खलु वाङ्मात्राद्वदतोऽप्रतिभासनम् ।
वाक्ये पदे वा मर्यादा न विद्मः केन कल्पिता ॥ २८ ॥

---

संभवति ; स हि भावः सर्वार्थक्रियासमर्थः किमिति काश्चिदेवारभते नान्याम् , समर्थस्य क्षेपायोगात् ? तस्मान्नाक्षणिकस्य सत्तार्थक्रियाकारिता-परपर्यायं कर्तृत्वं संभवतीति सिद्धम् । चित्तमेव चात्मा । न च ज्ञानसुखादीनां गुणत्वाद्गुणस्य च गुणिनमन्तरेणासम्भवात् ततोऽन्य एव तेषामाश्रयोऽस्ति, स एव चात्मेति वाच्यम् ; न ह्याश्रयमन्तरेण ज्ञानमात्रमनुपपन्नम् । स्वतन्त्रमेव हि ज्ञानं किं नेष्यते ? सुखादयो हि ज्ञानविशेषा एव स्वतन्त्राश्च, अन्यस्याश्रयस्यानुपलब्धेः । ज्ञानमेव च ज्ञातृ , नान्यो ज्ञातास्ति । तच्च क्षणिकमेव शब्दादिस्थैर्यवादिनामपि । "न हि तत्क्षणमप्यास्ते" इत्युक्तत्वात् । संस्कारत्वाच्च क्षणिकत्वम् । संस्कार इति कृतकानां भावानां संज्ञा । कृतकानां च भावानामवश्यंभावी विनाशः, तेनापि क्षणिकत्वम् । तथा हि—यद्येषां ध्रुवभावि तत्र तेषां हेत्वन्तरापेक्षा नास्ति ; ध्रुवभावी च कृतकानां विनाश इति विरुद्धव्याप्तोपलब्धिरिति । कर्तृत्वाच्चित्तत्वात् संस्कारत्वाच्च तद्धेतूनां चेतसां तद्ग्राहिणां च वर्णानां च क्षणिकत्वमिति सिद्धम् । एषा च बाह्यार्थवादिसौत्रान्तिकादिमतेन व्याख्या । अतोऽर्थ-भेदसिद्धिरिति । यत एवं वर्णानां भिन्नः स्वभावः, अतः कारणात् प्रतिपदं वर्णेभ्योऽर्थसिद्धिरुपपन्ना । इतिशब्दः प्रकारार्थः । पूर्वेण 'योऽप्याह' इत्यनेन सम्बन्धनीयः ।

तस्यापीति । एष च तच्छब्दस्तेनैव यच्छब्देनानुसन्धानीयः । अष्टाविंशः श्लोकः **अन्यस्येति** । अस्यार्थः—तस्यापि वादिनः केन

दर्शितो हि भिन्नवर्णासम्भवी प्रतिभास एकात्मा अभिन्नवर्णासम्भवी च नानात्मा प्रतिभासः । वाङ्मात्रहेतुकस्तु प्रतिभासाभावो निर्मर्यादया

---

मर्यादा कल्पिता ? वादिनं विशिनष्टि—वाक्ये पदे वा वर्णेभ्योऽन्यस्य स्फोटात्मनोऽप्रतिभासनं वाङ्मात्राद्वदत इति । न विद्म इति वाक्यान्तरम् । खलुशब्देनान्यस्य प्रमाणप्रसिद्धिं दर्शयति ; मात्रशब्देनाप्रतिभासनस्य प्रमाणवत्तां व्यावर्तयति । अन्यस्य खलु वाङ्मात्रादप्रतिभासनमित्येतदेव व्यतिरेकप्रसिद्धिदर्शनेन व्याचष्टे—दर्शितो हि....प्रसङ्गादिति । भिन्न-वर्णासम्भवी प्रतिभास एकात्मेति । भिन्नेषु वर्णेषु विलक्षणेष्वेव गकारादिवर्णेष्व-सम्भवी प्रतिभास एकात्मा एकरूपः 'गौरित्येकं पदम्' इति । अभिन्नवर्णा-संभवी च नानात्मा प्रतिभास इति । नदीदीन इत्यादिषु वर्णाभेदेऽपि पदनानात्वावभासः । नदीत्यन्यत्पदं दीनेत्यन्यत्पदम्; नदीत्येतत् स्रवन्तीबोधकं दीनेत्येतत्खिन्नामन्त्रितमन्यत् पदमिति नानात्मावभासोऽभिन्नेषु वर्णेष्वसम्भवी । दर्शित इत्यनुषङ्गः । यथोपसंहृतम्—'तदेवमभिन्नेषु भिन्नेषु च वर्णात्मसु यन्नानैकं च प्रतिभासते तत्प्रत्यक्षं पदम्' इति । एवमभिप्रायं दर्शयित्वा श्लोकं व्याचष्टे—वाङ्मात्रहेतुकस्तु प्रतिभासाभावो निर्मर्यादया न किञ्चिन्निराकर्तुं क्षमत इति । वाङ्मात्रहेतुकः "अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि" इति न्यायाच्छब्दमात्रहेतुकः—अङ्गुल्यग्रे हस्तियूथशतमास्ते—इतिवत् ; न तु पारमार्थिकः अन्यस्य प्रतिभासाभाव इति । न किञ्चिन्निराकर्तु क्षमत इति । न वस्तु तुषमपि [१]पराकर्तुं पारयति । कुतः ? निर्मर्याद[२]या, व्यवस्थाभावात् अतिप्रसङ्गादित्यर्थः । अनेन च मर्यादा केन कल्पितेत्याक्षेपे किंशब्द इति दर्शितम् । क्वचित्पाठः निर्मर्यादतया निराकर्तुं

---

१. निराकर्तुम्. ख. २. निर्मर्यादतया. क.

**न किञ्चिन्निराकर्तुं क्षमते । अन्यरूपानुवेधेन चाप्रतिभासनमयुक्तम्, प्रभारूपाद्यनुस्यूतनीलाद्यप्रतिभासनप्रसङ्गादिति ॥**

---

क्षमत इति । मर्यादां विहाय निराकर्तुं क्षमत इत्यर्थः । ननु न वाङ्मात्रहेतुकः प्रतिभासाभावः; उक्तं हि—"वर्णत्रयपरित्यागे बुद्धिर्नान्यत्र जायते" इति; अत आह—अन्यरूपानुवेधेन चाप्रतिभासनमयुक्तमिति । अन्यरूपस्य वर्णरूपस्यानुवेधेन च कारणेन अन्यस्य स्फोटात्मनो यदप्रतिभासनमुच्यते, तन्न युक्तमङ्गीकर्तुमित्यर्थः । क्वचित्तु अन्यरूपानुवेधेऽप्यप्रतिभासनमिति पाठः । अन्यरूपानुवेधे सत्यपि नान्यस्याप्रतिभासनं युज्यत इति । कारणमाह—प्रभारूपाद्यनुस्यूतनीलाद्यप्रतिभासनप्रसङ्गादिति । एतच्च 'अन्यानुविद्धबोधेऽपि' इत्यत्र 'सर्वं चाक्षुषं प्रभानुविद्धंबोध्यम्, न ततोऽन्यविषयतामुज्झति' इति ग्रन्थनिरीक्षया व्याख्येयम् । आदिशब्दाभ्यां तत्रोक्तजातिव्यक्त्यादेः परामर्श इति ॥

इति स्फोटसिद्धिव्याख्यायाम्
अष्टाविंशः श्लोकः

---

१. नीलाद्यभाव. ख. २. Added बुद्धि. क.

**नानेकावयवं वाक्यं पदं वा स्फोटवादिनाम् ।**
**एकत्वेऽपि त्वभिन्नस्य क्रमशो दर्शिता गतिः ॥ २९ ॥**

**अनेकावयवात्मकदोषाभिधान तावन्नभोरोमन्थनप्रायम्, अनभ्युपगमात् । एकत्वेऽपि तु क्रमशो गतिरनुपाख्येयोपाख्येयाकारप्रत्ययभेदेन**

---

एवं पूर्वोक्तं स्वपक्षसाधनं स्मारयित्वा सम्प्रति परोक्तदूषणपरिहारमारभते —**नानेकावयवम्** ...**गतिः** । अस्यार्थः—एकोनत्रिंशः श्लोकः नानेकावयवमिति । पूर्वार्धं तावद्व्याचष्टे—**अनेकावयवात्मकदोषाभिधानं तावन्नभोरोमन्थनप्रायमिति** । अनेकावयवात्मकस्य पदस्य वाक्यस्य वा स्फोटात्मनो दोषाणां यदभिधानं तावत् कृतम्, तत्र पूर्वकल्पे—अवयवानामित्यादिना, तत्तु नभोरोमन्थनप्रायम् उपोषितगवा भक्षितद्रव्याभावेऽपि यदाकाशस्य प्रतिचर्वणं तत्सदृशमित्यर्थः । किं तत्सादृश्यमत आह —**अनभ्युपगमादिति** । यथा किल नभोरोमन्थनमनर्थकम्, तथास्माभिरनभ्युपगतस्य सावयवस्य वाक्यस्य यद्दोषाभिधानं तदप्यनर्थकम्, तेनास्माकं निग्रहाभावादिति । उत्तरार्धं व्याचष्टे—**एकत्वेऽपि तु क्रमशो गतिः अनुपाख्येयोपाख्येयाकारप्रत्ययभेदेन पुरस्तात् प्रपञ्चितेति** । एकत्वेऽपि त्वभिन्नस्य निर्भागस्य क्रमशो गतिरवगतिः मतिप्रमितिपर्याया । क्रमश इत्येतदेव व्याख्यायते, अनुपाख्येयोपाख्येयाकारप्रत्ययभेदेन अनुपाख्येयाकाराः प्रत्ययाः प्रथममुत्पद्यन्ते, पश्चात्तु तज्जनितसंस्कारनिचयसहकृतान्तिमध्वनिजन्य उपाख्येयः प्रत्यय उदेति—इतीदृशस्य भेदस्य विद्यमानत्वात्पुरस्तात् 'प्रत्येकमनुपाख्येयज्ञानतद्भावनाक्रमात्' इत्यादौ प्रपञ्चितेति । यच्चोक्तम्—'अभागत्वे च सकलाश्राविणो न स्याद्वाक्ये[3] प्रतिपत्तिः' इत्यादि, तदपि परिहरन्नाह—

---

१. मतिः. मूलम्.
२. Omitted. पुरस्तात्. मूलम्.
३. वाक्यप्रतिपत्तिः. क.

**पुरस्तात् प्रपञ्चिता । व्यञ्जकसादृश्यात्तु[1] शब्दान्तरग्रहणाभिमानः ; तेन नाश्रवणं स्यात् सकलश्रवणं वेति[2] ॥**

---

**व्यञ्जकसादृश्यात्तु शब्दान्तरग्रहणाभिमान इति** । शब्दो हि स्फोटः ततोऽन्यानि शब्दान्तराणि वर्णादीनि व्यञ्जकध्वनिसादृश्यात्तु तानि गृह्यन्त इति शब्दभावनापरपर्यायाविद्यावशादभिमानोऽस्त्येव प्रतिपत्तॄणामिति । ततः किमित्याह—**तेन नाश्रवणं स्यात् सकलश्रवणं वेति** । यत एवंभावावग्रहोऽस्त्येव भ्रान्त्या, तेन कारणेन परमार्थाभागपक्षेऽपि भागशो ग्रहणमुपपद्यत एव, न पुनरश्रवणं वा सकलश्रवणं वापद्येतेति ॥

इति स्फोटसिद्धिव्याख्यायाम्
एकोनत्रिंशः श्लोकः

---

१. च. मूलम्. २. Omitted. इति. मूलम्, ख.

उत्पत्तिवादिनो वर्णाः कामं सन्तु प्रभेदिनः ।
न त्वसाधारणस्तेषां भेदोऽर्थज्ञानकारणम् ॥ ३० ॥

भेदेऽपि हि प्रत्युत्पत्ति वर्णानां न तेनासाधारणेन रूपेणार्थस्य[1] ज्ञापकाः, तस्य पूर्वमदर्शनात् ; सामान्यात्मनैव[2] तु ; तच्चाविशिष्टं सर्वत्र । न चासाधारणोऽन्यः कश्चिदभेदोऽस्ति[3], येन प्रतीयेरन्[4] प्रत्यायकाः ;

---

उत्पत्तिवादिन इति त्रिंशः श्लोकः । **भेदेऽपि........इत्युक्तमिति ।** अस्यार्थः—यच्च पूर्वमुक्तम्—'न च पदवाक्यान्तरेषु तदविशेषेऽपि तदभावादसम्भवः इत्यादि, तस्य परिहारोऽनेन प्रस्तूयते । पूर्वार्धेन परस्य विवक्षितं हेतुमभ्यनुज्ञायोत्तरार्धेन तेन साध्यासिद्धिरुच्यत इति व्याचष्टे—भेदेऽपि हि प्रत्युत्पत्ति वर्णानामिति । यद्यपि प्रत्युच्चारणमुत्पत्तिभाजो विलक्षणा वर्णाः तथापीत्यर्थः । अनेन च पूर्वार्धो व्याख्यातः । न तेनासाधारणेन रूपेणार्थस्य ज्ञापका इति । तेनेति । स्वभावसिद्धेनेत्यर्थः । ज्ञापका इत्यत्रार्थाद्वर्णा इति सिध्यति । क्वचित्तु न तेऽसाधारणरूपेणेति पाठः । ते वर्णा इत्यर्थः । कुत इत्यत्राह—तस्य पूर्वमदर्शनादिति । तस्यासाधारणस्य रूपस्य वर्णोत्पत्तिक्षणतः पूर्वमदर्शनादिति । पूर्वविदितं हि पदमर्थस्य वाचकम्, सम्बन्धग्रहणसापेक्षत्वात् ; न च क्षणिकानां वर्णानां प्रत्युच्चारण-मन्यत्वादसाधारणरूपस्य पूर्वदर्शनं संभवति ; अतश्चागृहीतसम्बन्धत्वान्न तेन रूपेण तेषां वाचकतेत्यर्थः । केन तर्हीत्याह—सामान्यात्मनैव त्विति । तेऽर्थस्य ज्ञापका इत्यनुषङ्गः । ततः किमित्याह—तच्चाविशिष्टं सर्वत्रेति । तच्च सामान्यं सर्वेषूच्चारणेषु ये जायन्ते वर्णास्तेषु सर्वेष्वविशिष्टमिति पदभेदादर्थभेदाभावप्रसङ्ग इत्यभिप्रायः । समान्यं च वर्णत्वं शब्दत्वं वा

---

१. Omitted अर्थस्य. मूलम्. ३. कश्चिद्भेदः. मूलम्.
२. सामान्येनैव. मूलम्. ४. Omitted प्रतीयेरन्. मूलम्.

विवक्षितम्। ननु न शब्दत्ववर्णत्वाभ्यां तेषां वाचकता ; न च प्रत्येकस्वलक्षणवर्तिनां रूपेण । किं तर्हि ? गकारौकारविसर्जनीयानामसाधारणेनाभेदेन ; एवं सर्वत्र गोशब्दे गोशब्दत्वेन घटशब्दे घटशब्दत्वेनेत्येवमादि; अत आह—न चासाधारणोऽन्यः कश्चिदभेदोऽस्ति येन प्रतीयेरन् प्रत्यायका इति । न चैकपदतां प्राप्तेषु वर्णेष्वेव असाधारणः शब्दत्ववर्णत्वाभ्यामन्यः कश्चिद्गोशब्दावयवी गोशब्दत्वं वा तत्र तत्र तत्पदावयवी तत्पदत्वं वाभेदः सामान्यात्मास्ति, येन रूपेण वर्णा अर्थस्य प्रत्यायकाः प्रतीयेरन् ; येनात्मना सम्बन्धग्रहणं स्यादित्यर्थः । क्वचिद्भेद इति पाठः । भेदो विशेषः, शब्दावान्तरसामान्यमिति यावत् । न हि नैयायिकादिवद्भवन्तोऽवयविनं सामान्यं वानुमन्यन्त इति भावः । न च नित्यवर्णवादिमतेऽप्यस्ति । यथाहुः—

"विच्छिन्नयत्नव्यङ्ग्यैश्च नित्यैः सर्वगतैस्तथा ।
व्यतिरिक्तपदारम्भो वर्णैर्नात्रोपपद्यते ॥
अनारब्धे च गोशब्दे गोशब्दत्वं कथं भवेत् ।" इति ।

यद्यपि वस्तुरूपं सामान्यमस्मन्मते नास्ति, तथाप्यन्यापोहस्य विद्यमानत्वात् अगोशब्दव्यावृत्त्यात्मना गोशब्दस्य शक्तिग्रहणसम्भवः ; अत आह—न चासाधारणोऽन्यः कश्चिदभेदोऽस्तीति । न च गकारौकारविसर्जनीयासाधारणो वस्तुरूपत्वगोचरादन्यः कश्चिदगोशब्दव्यावृत्त्यात्मा शब्दत्वावान्तरविशेषोऽस्ति, अपोहसामान्यस्य प्रतिक्षेपात् । यथाहुः—

"अगोनिवृत्तिः सामान्यं वाच्यं यैः परिकल्पितम् ।
गोत्ववस्त्वेव तैरुक्तमगोऽपोहगिरा स्फुटम् ॥" इत्यादि ।

किञ्च, न चासाधारणोऽन्यव्यावृत्त्यात्मापि कश्चिदभेदः सामान्यविशेषो वा वर्णेभ्योऽन्यस्तत्समवायी भवन्मतेऽस्ति, येनात्मना सम्बन्धग्रहः स्यात् ।

परस्परसमवधानं तु स्यात् सामान्यरूपाश्रितानां विशेषकम् ; तच्च

---

स्वलक्षणस्य किञ्चिद्धर्मान्वयाभावात् अनुगतरूपप्रतिषेधे भेदानुगमोऽपि प्रतिषेध्यः । कथं हि व्यावृत्तस्वभावानां व्यावृत्तिरप्यनुगता भवेत्? यथाहुः— "य एवान्यव्यावृत्तः सैवान्यव्यावृत्तिः" इति । तेनामीषां वर्णस्वलक्षणानां स्वव्यतिरिक्तो नासाधारणोऽभेदोऽस्ति, येन लक्षिताः प्रतीयेरन्नर्थस्य प्रत्यायका इति सामान्याश्रितत्वमेषामास्थेयमिति भावः । यदि तूच्यते 'सामान्यमभ्येषिष्यामः' इति, तत्राह—परस्परसमवधानं तु स्यात् सामान्यरूपाश्रितानां विशेषकमिति । यद्यप्यन्यव्यावृत्तिरूपं वा वस्तुरूपं वा सामान्यमाश्रीयते, तथापि न तावतोपरन्तव्यम् ; किं तु परस्परसमवधानमपि वर्णानां सामान्यरूपेणाश्रितानां विशेषकमङ्गीकर्तव्यं स्यादित्यर्थः । तदप्यङ्गीक्रियतामिति चेदत आह—तच्च क्रमवदुपलब्धित्वादयुक्तमिति । क्रमवत्युपलब्धिर्येषां वर्णानां तेषां भावः क्रमवदुपलब्धित्वम् । परस्परसमवधानं तच्छब्देनोच्यते । न हीश्वरोऽपि वर्णान् युगपदुच्चारयितुं समर्थः; क्रमोच्चारितानां च निरन्वयनिरुद्धानां न युगपदेकसामान्याश्रयत्वं संभवति ; न च गोशब्दावयवी भवद्भिरिष्यत इति । क्वचित्पाठः परस्परसमवधानं न स्यादिति । यदुक्तम् 'तस्मात् क्रमभाविन एव विकल्पविषया यथासङ्केतं प्रत्ययहेतवः' इति । तत्राह—परस्परसमवधानं न स्यादिति । विकल्पविषयत्वेन सामान्यरूपाश्रितानां वर्णानां परस्परसमवधानं परस्परसाहित्यं वाचकत्वविशेषकं न स्यादपि, सामान्यरूपेणैव विशेषितानां वाचकत्वसिद्धेः । किं त्वित्याह—तच्च क्रमवदुपलब्धित्वादयुक्तमिति । परस्परसमवधानवदेव । तच्च तदपि सामान्यं सामान्येनाश्रयणं वा क्रमवदुपलब्धित्वात् क्रमेणैवोत्पद्य विनष्टत्वादयुक्तम् । न हि भिन्नानामेकरूपाश्रयणं त्वत्पक्षे संभवति । न चागोशब्दव्यावृत्तिरपि

---

१. -रूपपरिगृहीतानाम् . मूलम् .

क्रमवदुपलब्धित्वादयुक्तम् । एकोपलब्धौ तु साहित्येन यथाकथञ्चिदपि प्र[1]युक्तेभ्यः पुरस्तात् प्रत्ययप्रसङ्ग इत्युक्तम्, अविशेषात् ॥

---

निरन्वयविनष्टेषु गकारौकारविसर्जनीयेषु व्यासज्य वर्तते ; प्रत्येकवर्तिनी तद्वदेव विनष्टा कथमेककार्यजननायालं भवतीति । एवं पाठद्वयेऽपि क्रमवदुपलब्धित्वादेकसामान्याश्रयत्वं वर्णानामयुक्तमित्युक्तम् । यदि पुनर्वस्तु सदेव सामान्यमाश्रीयते, तदैष दोषः स्यात्; इह तु निस्तत्त्वमलीकमेव सामान्यमङ्गीक्रियते ; अत एव विकल्पविषया इत्युक्तम् । अतः क्रमेण कल्पनापोढप्रत्यक्षविषयीकृता वर्णस्वलक्षणा विकल्पज्ञाने निस्तत्त्वालीकसामान्याश्रयत्वेन प्रतिभासमाना वाचका इत्यत आह—एकोपलब्धौ तु साहित्येन यथाकथञ्चिदपि प्रयुक्तेभ्यः पुरस्तात् प्रत्ययप्रसङ्ग इत्युक्तमिति । यथाकथञ्चिदिति । व्युत्क्रमेण वक्तृभेदेन वा चरमचेतसा पुरस्तात् प्रयुक्तेभ्यो वर्णेभ्योऽर्थप्रत्ययप्रसङ्गः । 'चरमचेतसि समारूढेभ्यः' इत्युक्तिः 'निरुद्धबुद्धयो नैव' इत्यत्र । कारणमाह—अविशेषादिति । यथाकथञ्चिदपि पुरःप्रयुक्तेभ्यः प्रसङ्गः कुतः? अविशेषात् । न हि यथाभिमतानुपूर्वीयुक्तोच्चारणसमनन्तरे व्युत्क्रमोच्चारणसमनन्तरे वा चरमचेतसि वर्णानां कश्चिद्विशेषः, आनुपूर्व्याः प्रत्यस्तमयात् इत्युक्तमिति । विशेषादिति पाठे उत्तरत्रान्वयः ॥

इति स्फोटसिद्धिव्याख्यायां

त्रिंशः श्लोकः

---

१. प्रयुक्तैः पुरस्तात् प्रसङ्गः. मूलम् .

आनुपूर्व्यं विशेषकमिति चेत् । किमिदमानुपूर्व्यं नाम ?

**कार्यकारणभावश्चेत्क्रमस्तद्ग्राहिचेतसाम् ।**
**तद्धेतुरात्मभेदो वा वक्तृभेदेऽपि धीर्भवेत् ॥ ३१ ॥**

---

शङ्कते—आनुपूर्व्यं विशेषकमिति चेदिति । व्युत्क्रमाद्युच्चरितेभ्यो वर्णेभ्यो वाचकानां वर्णानामानुपूर्व्यं विशेषकम् । विशेषादानुपूर्व्यमिति पाठे क्रमविशेषादित्यर्थः । तथैव च क्वचित्पाठः । नित्यवर्णवादिनामन्यदानुपूर्व्यम्, यस्यासम्भवस्त्वयोक्तः; अस्माकं त्वन्यदेव क्षणिकवादिनामित्यभिप्रायः । परिहरति—किमिदमानुपूर्व्यं नामेति । त्वयोक्तोऽपि क्रमो विविच्य कथ्यताम्, सोऽपि च परीक्ष्यताम् । अथवा तवापि किं समुत्थापकचेतसां कार्यकारणभावो विवक्षितः क्रमत्वेन, आहोस्वित्तद्ग्राहिचेतसामित्यर्थः । तत्र प्रथमं तावत्तद्ग्राहिचेतसां पुरस्कारः क्रियते—**कार्यकारणभावश्चेत्**........**दृश्यत इति** । एकत्रिंशः श्लोकः कार्यकारणभावश्चेदिति । अस्यार्थः—तद्धेतूनां चेतसां तद्ग्राहिणां च कार्यकारणतेत्युक्तम्; तत्र किमुभयेषां कार्यकारणता समुच्चित्यक्रमः, उत विकल्पेन ? विकल्पेऽपि तद्ग्राहिचेतसां कार्यकारणभावः, तद्धेतुर्वात्मभेदः, तद्ग्राहिचेतसां हेतुरात्मनः स्वस्य वर्णात्मनो भेदः ? क्रमश्चेदभिमतः, तर्हि वक्तृभेदेऽपि भिन्नवक्तृप्रयुक्तेभ्यो वर्णेभ्योऽर्थप्रत्ययः प्रसज्येतेति । कार्यकारणभावो वा वर्णभेदो वेति मतभेदेन क्रमविकल्पो दर्शितः, उभयथापि पूर्वग्रन्थात्प्रतीतेः । तथा हि—'का पुनरियमानुपूर्वी नाम ?' इत्यस्य प्रश्नस्य 'कारणता' इत्यन्तेनोत्तरे दत्ते कथमनया वर्णभेदः, तद्दर्शितम् 'तथा च' इत्यादिना । अथवा 'का पुनरियमानुपूर्वी नाम ?' इत्यस्य 'भिन्न एव स्वभावः' इत्यन्तेनोत्तरं

---

१. Omitted नाम. मूलम्.

भवति[1] हि कदाचिदन्योच्चारितपूर्ववर्णदर्शनसमनन्तरप्रत्ययसहकारी प्रयोक्त्रन्तरप्रयुक्तो वर्णः तज्ज्ञानहेतुः[2]; न हि भिन्नैर्वक्तृभिरव्यवधानम्[3];

---

दीयते । तदा चायमर्थः—तद्धेतूनां चेतसां मिथः कार्यकारणता, तथा तद्ग्राहिणां च मिथः कार्यकारणता तावदस्ति क्षणिकविज्ञानसन्तानात्मवादिनाम् । ततः किमित्याह—तथा च मिथः कार्यकारणभूतकर्तृप्रत्ययनिर्वर्त्यो वर्णस्तन्निर्वर्तकश्चेत् मिथः कार्यकारणभूतस्वविषयश्रोतृप्रत्ययनिर्वर्तकश्चेत्प्रतिपदं वर्णानां भिन्न एव स्वभावः । स्वभावभेदे कारणमाह—कर्तृचित्तसंस्कारभेदात् वर्णकर्तॄणां वक्तृप्रत्ययानां मिथो भेदात् श्रोतृचित्तानां च वर्णनिर्वर्त्यानां मिथो भेदात् वर्णचित्तजन्यानां च संस्काराणां भेदात् भिन्नविकल्पप्रसूतिकारणत्वाच्च संस्कारभेदः ; तथा च भिन्न एव स्वभावानुपूर्वीत्युक्तं भवतीति । चतुर्थपादं व्याचष्टे---भवति हि कदाचिदिति । अन्योच्चारितपूर्ववर्णदर्शनसमनन्तरप्रत्ययसहकारीति । यदा खलु बहुभिस्तिरोहितव्यवहितैर्वक्तृभिः केनापि कारणेन वर्णा एकपदगता एकैकश उच्चार्यन्ते, तदा प्रथममेकेनोच्चारितस्य पूर्ववर्णस्य यद्दर्शनं तदेव समनन्तरप्रत्ययः सहकारी यस्येति बहुव्रीहिः । अनेन तद्ग्राहिचेतसां मिथः कार्यकारणभावो दर्शितः । प्रयोक्त्रन्तरप्रयुक्तो वर्ण इति । द्वितीय इति सिध्यति । तज्ज्ञानहेतुरिति । तस्यैव वर्णस्य ज्ञाने हेतुः । स्वरूपज्ञानहेतुरिति वा पाठः । अनेन तन्निर्वर्तकश्चेदित्यत्रोक्तं तद्धेतुरित्यत्रोक्तं च हेतुत्वं दर्शितम् ; तेन च विलक्षणकार्यजनकत्वाद्वर्णात्मापि भिन्न इति दर्शितं वेदितव्यम् । ननु वक्तृभेदे दैवात् कश्चिदपचारो भवत्येव, नैकवक्तृप्रयुक्तवद्भावः ; अत आह—न हि भिन्नैर्वक्तृभिरव्यवधानमिति । व्यवधानराहित्येन अक्षराणां

---

१. भवति खलु. मूलम्.
२. स्वरूपज्ञान- क.
३. अभिधानव्यवधानम्. मूलम्.

**उच्चारितेषु वर्णेषु क्रमभेदेन निरन्तरश्रवणेन कश्चन विशेषः । ततश्चानुपूर्वीविशेषस्य विद्यमानत्वात् तदा स्यादर्थावबोधः, न च दृश्यते ॥**

---

नैरन्तर्येणेत्यर्थः क्वचित्पाठः अभिधानव्यवधानमिति । अभिधानमुच्चारणम् । अभिधानस्योच्चारणस्य व्यवधानमदर्शनं यत्रेति व्यधिकरणबहुव्रीहिः । क्रियाविशेषणं चैतत् । अन्यथा वा पाठः अपिधानव्यवधानसमुच्चारितेष्विति । तदा 'तिरोहितव्यवहितप्रयुक्तौ वक्तुरेकता' इतिवद्व्याख्या । अपिधानं तिरोधानम् । तिरोधानव्यवधानाभ्यामुच्चारितेष्विति । उच्चारितेषु वर्णेष्विति । एकपदत्वेनाभिमतेषु । क्रमभेदेन निरन्तरश्रवणेन कश्चन विशेष इति । न हि क्रमभेदेन कश्चन विशेषः, तस्यैव क्रमभेदस्य बहुभिरप्यङ्गीकरणात् । नापि निरन्तरश्रवणेन विशेषः, तस्यैव नैरन्तर्यस्य प्रकाशनात् । क्वचित्पाठः क्षणभेदो न निरन्तरत्वं न कश्चन विशेष इति । न हि क्षणभेद इत्यन्वयः । न निरन्तरत्वमिति । अत्रापि न हीति सम्बध्यते । न हि निरन्तरत्वं च नास्ति, किं त्वस्त्येवेत्यर्थः । अन्योऽपि वक्तुरेकत्वान्न कश्चन विशेषोऽस्तीति । ततश्चानुपूर्वी विशेषस्य विद्यमानत्वात्तदा स्यादर्थावबोध इति । यत एवैकवक्तृप्रयोगादीदृशे भिन्नवक्तृप्रयोगे न कश्चिद्विशेषोऽस्ति तत इत्यर्थः । आनुपूर्वीविशेषस्येति । तद्ग्राहिचेतसां कार्यकारणभावस्य वर्णस्वभावस्य वा विद्यमानत्वात् तदा तिरोधानव्यवधानयोर्वक्तृभेदे सति स्यात्तादृशेभ्यो वर्णेभ्योऽर्थावबोध इति । ततः किमित्याह—न च दृश्यत इति । अर्थावबोध इति सिध्यति । अनेन च श्लोकस्य शेषो दर्शितः । चशब्दो वाक्यार्थसमुच्चये । न त्विति वा पाठः ॥

इति स्फोटसिद्धिव्याख्यायाम्

एकत्रिंशः श्लोकः

न हेतुफलभावोऽङ्गं समुत्थापकचेतसाम् ।
अर्थबुद्धेरनाश्रित्य सङ्केतज्ञानकालयोः ॥ ३२ ॥

अथापि स्यात् समुत्थापकचित्तकार्यकारणता[1] तद्धेतुर्वा स्वभावभेद आनुपूर्वीविशेषः; तन्निबन्धनोऽयं सरोरसोराजजे[2]रादिषु कार्यभेदः ।

---

द्वात्रिंशः श्लोकः न हेतुफलभाव इति । प्रथमं तावच्छ्लोकव्यावर्त्यामाशङ्कामाह—अथापि........कार्यभेदः । यद्यपि तद्ग्राहिचेतसां वक्तृभेदेऽपि कथञ्चित्कार्यकारणता तत्र च व्यभिचारः संभवति, तथापि न दोषः । यतः श्रोतृचेतसां कार्यकारणभावो नार्थप्रत्ययोऽङ्गं किं तु समुत्थापकचित्तकार्यकारणता समुत्थापकचित्तानां या परस्परं कार्यकारणता, तद्धेतुर्वा समुत्थापकचित्तानि हेतुर्यस्येति बहुव्रीहिः स्वभावभेदः वर्णानां स्वरूपभेदः आनुपूर्वीविशेष इष्यते । इदमाकूतम्—अङ्गं हि वक्तृचेतसां कार्यकारणभाव इष्यते; स च वक्तृभेदे नास्ति ; समुत्थापकचेतसो हि सन्तानान्तरगतस्य तद्गतं पूर्वं चेतः समनन्तरप्रत्ययः, द्वितीयवर्णोत्थापकस्य चेतस आलयान्तरगतस्य तत्रत्यं पूर्वं चेतः समनन्तरप्रत्ययः, नालयान्तरगतम्, [ये] (अतो) वक्तृभेदे कार्यकारणभूतसमुत्थापकचित्तजन्यत्वाभावान्न वर्णेभ्योऽर्थप्रत्ययः संभवति, अङ्गवैकल्यादिति । ततः किमित्याह—तन्निबन्धनोऽयं सरोरसोराजजरादिषु कार्यभेद इति । एवमादिषु पदेषु तत्तादृशानुपूर्वीविशेषकारणकः कार्यस्य वर्णकार्यस्यार्थावबोधस्य भेदः । यो हि सर इत्यत्र समुत्थापकचित्तकार्यकारणभावस्ततोऽन्यो रस इत्यत्र, चेतसां भेदात् तद्गतस्य कार्यकारणभावस्यापि भेदः ; वर्णस्वभावभेदोऽपि कार्यकारणभूतसमचित्तजनितोऽर्थप्रत्ययनिमित्तम्, न चित्तमात्रजनितः । अतो

---

१. कारणत्वम्. क.    २. जरेत्यादिषु. मूलम्.

**तदसत् ; न खलु समुत्थापकचित्तकार्यकारणता तत्कृतो वा स्वभावभेदोऽर्थप्रत्ययाङ्गम् ; ज्ञापकत्वे हि स्वविज्ञानमपेक्षेत । दृश्यते च तिरोहितव्यवहितप्रयुक्ताच्छब्दादर्थज्ञानम् । न च तत्र समुत्थापक-**

---

न वक्तृभेदे प्रसङ्गः । न च समानवर्णेषु पदेष्वर्थप्रत्ययसङ्कर इत्यर्थः । परिहरति—**तदसत्** । अत्र कारणत्वेन श्लोकं व्याचष्टे—**न खलु समुत्थापकचित्तकार्यकारणता तत्कृतो वा स्वभावभेदोऽर्थप्रत्ययाङ्गमिति** । अनेन च समुत्थापकचेतसां यो हेतुफलभावः, स नार्थबुद्धेरङ्गमित्यन्वयो दर्शितः । उपलक्षणं च हेतुफलभावग्रहणम्, तत्कृतस्य स्वभावभेदस्यापि इति च दर्शितम् । अनाश्रित्येति ल्यबन्तं पदम् ; हेतुफलभावो हि सङ्केतकाले ज्ञानकाले चाश्रित्यैवार्थबुद्धेरङ्गं भवति । यस्मिन् काले सङ्केतो ज्ञानं वाश्रितं भवति, तस्मिन्नेव तद्विषयतया संश्रित्यैवमवस्थायैवाङ्गं भवति ; नेतरथेत्यर्थः । अथवा सङ्केतज्ञानकालयोः संकेतं वा सङ्केतयितारं वा ज्ञानं वा ज्ञातारं वानाश्रित्य न हेतुफलभावोऽङ्गं भवतीति । कश्चित्त्वाह—न समानकर्तृकतावश्यमर्थनीया "यदोवैंशं नरः श्रुत्वा सर्वपापैः प्रमुच्यते ।" इत्यादिदर्शनात् । केचित्तु तृतीयान्तं पठन्ति । अनाश्रित्या अनाश्रयणेन सङ्केतज्ञानकालयोस्तत्कर्तृभिरङ्गत्वेनानाश्रितत्वादित्यर्थः । अत्र ज्ञानकालेऽनाश्रयणं तावद्व्याचष्टे—**ज्ञापकत्वे....हेतुरित्युक्तम्** । ज्ञापकत्वे हीति । ज्ञापनसामग्र्य-नुप्रवेशेन ज्ञापकत्वे सतीत्यर्थः । हिशब्देन पूर्वोक्ततां सूचयति । **स्वस्य** विज्ञानं स्वं स्वीयं वा विज्ञानमपेक्षेत कार्यकारणता तज्जन्यो वा स्वभावभेद आनुपूर्वीति सिध्यति । अपेक्षतां ज्ञापयतु चार्थमिति चेत् तत्राह—**दृश्यते चेति** । तिरोहितव्यवहितप्रयुक्ताच्छब्दादर्थज्ञानमिति । तिरोहितैर्व्यवहितैश्च प्रयुक्ताच्छब्दादर्थज्ञानं दृश्यत एव ; न हि परोक्षप्रयुक्तादर्थप्रत्ययो नोदेत्येव । ततः किमित्याह—न च तत्र समुत्थापकचित्तकार्यकारणतां कश्चन

---

१. Omitted शब्दात्. मूलम्, ख.

**चित्तकार्यकारणतां कश्चन निश्चेतुमर्हति । वक्त्रेकत्वे च निश्चिते सा निश्चीयेत । न चान्तरेण शब्दज्ञानं तन्निश्चयः । न च तिरोधानव्यवधानयोर्वक्तुरेकत्वे प्रमाणमास्ति ; कलकलश्रुतौ च न विवेकहेतुरित्युक्तम् ।**

---

निश्चेतुमर्हति । न च तिरोहितव्यवहितप्रयोगे समुत्थापकचित्तानां कार्यकारणतां कश्चन निपुणोऽपि निश्चेतुर्महति । कुत इत्याह—वक्त्रेकत्वे च निश्चिते सा निश्चीयेतेति । वक्तुरेकत्वे प्रमाणतो निश्चिते सा समुत्थापकचित्तकार्यकारणता निश्चीयेतेति । भिन्नवक्तृकत्वशङ्कायां च तन्निश्चयासम्भवात् । ननु वक्त्रेकत्वं निश्चित्य पश्चात् कार्यकारणतामपि निश्चिनोतु, शब्देन चार्थं जानातु ; अत आह—न चान्तरेण शब्दज्ञानं तन्निश्चयः । तिरोहितव्यवहितप्रयुक्तौ न शब्दज्ञानं विहायान्येन वक्तुरेकत्वनिश्चयः संभवतीति । न तावत्तत्र प्रत्यक्षं प्रमाणम्, व्यवधानतिरोधानयोस्तत्राशक्तत्वात् । शाब्दं च तत्र तदानीं नास्त्येव । उपमानं तु सादृश्यमात्रगोचरत्वादनाशङ्कनीयमेव । अभावस्य तु भावगोचरता दूरापास्ता । अतोऽनुमानं वार्थापत्तिर्वा संभवेत् । तयोश्च लिङ्गानुपपद्यमानप्रभवत्वात् तदन्वेषणायां न शब्दादन्यत् प्रतीयते । शब्दस्य च भिन्नकर्तृकत्वेऽपि व्यभिचाराद्भिन्नकर्तृकत्वेनैवोपपद्यमानत्वाच्च न तज्ज्ञानं वक्त्रेकत्वनिश्चायकमित्यर्थः । एतच्च नेदानीं प्रतिपादनीयम्, पूर्वमेवोक्तत्वादित्यह—न च तिरोधानव्यवधानयोर्वक्तुरेकत्वे प्रमाणमस्ति ; कलकलश्रुतौ च न विवेकहेतुरित्युक्तमिति । कलकलश्रुतौ च नैकानेकविवेकहेतुः कश्चिदस्तीत्यभिप्रायः । क्वचित्पाठः कलकलश्रुतौ चानेकविवेकहेतुरिति । क्वचिच्चशब्दस्थाने वाशब्दः । तत्र ताभ्यां नेत्याकृष्यते । अनेकेभ्यो वक्तृभ्यो वाक्यस्य विवेके हेतुरित्यर्थः । इत्युक्तमिति ।

---

१. एकवक्त्रेकत्वे हि. मूलम्. २. चानेकविवेक. ख.

ज्ञापनाङ्गत्वे च ज्ञापकः सङ्केतकाले नियोगत आश्रीयेत, सङ्केतरहितस्य ज्ञापनाशक्तेः । न च नियोगतस्तदैनामुपाश्रयन्ते व्यवहिततिरोहितप्रयुक्तशब्दार्थसम्बन्ध इत्युक्तमिति । तस्मादेक एव

'न प्रत्ययः स्यादेकत्वे प्रयोक्तुरविभाविते ।
न च तस्य परिज्ञानमकस्मादवकल्पते ॥' इत्यत्र ।

एवं तावज्ज्ञानकालेऽनाश्रितिर्दर्शिता; सम्प्रति सङ्केतकाले यानाश्रितिस्तां व्याचष्टे—ज्ञापनाङ्गत्वे·······इत्युक्तमिति । ज्ञापनां प्रत्यङ्गत्वे च ज्ञापकः सन् कार्यकारणभावः सङ्केतकाले नियोगत आश्रीयेत सङ्केतविषयतयेति । क्वचित्पाठः ज्ञापकाङ्गत्वे च ज्ञापकसङ्केतकाल इति । ज्ञापकस्य शब्दस्य यद्यङ्गं कार्यकारणत्वम्, तर्हि ज्ञापकस्य शब्दस्यार्थेन सम्बन्धकरणे तदङ्गमपि कार्यकाणत्वं स्वरादिवन्नियोगतो नियमात्तत्रार्थप्रत्यायकत्वकोटौ निवेशनीयमापद्येतेत्यर्थः । क्वचित्पाठः ज्ञापकाङ्गं च सङ्केतकाल इति । तदप्यत्रैव योज्यम् । कुत इत्याह—सङ्केतरहितस्य ज्ञापनाशक्तेरिति । सङ्केतरहितस्य ज्ञापकस्य तदङ्गस्य वार्थज्ञापनायामशक्तेरित्यर्थः । ज्ञापनशब्दस्य वा समासः । न हि सम्बन्धग्रहणमन्तरेण शाब्दसामग्री प्रत्यायिका दृष्टेति भावः । ततः किमित्याह—न च नियोगस्तदैनामुपाश्रयन्त इति । न च नियमेन सङ्केतसमये एनां कार्यकारणतां सङ्केतकारिण उपाश्रयन्त इति । क्वचित्पाठः न च नियोगतस्तत्सम्भेदानुपाश्रयन्त इति । तच्छब्देन कार्यकारणताया वक्तुरेकत्वस्य वा परामर्शः । वर्णानां संबन्धकरणेन वक्तुरेकतासम्भेदानुपरागानुपाश्रयन्त इति । ननु 'गौरित्यस्य सास्नादिमानार्थः' इत्युक्ते प्रत्यक्षसिद्धा वक्तुरेकतापि सङ्केतितैवेत्यत उक्तम्—नियोगत इति । तद्विवृणोति—व्यवहिततिरोहितप्रयुक्तशब्दार्थसम्बन्ध इति । व्यवहिततिरोहि-

१. तिरोहितव्यवहित. मूलम्. २. शब्दार्थ इति सङ्केत. मूलम्.

शब्दात्मा अर्थेषु सङ्केतेन नियुज्यते लोके प्रत्ययकाले चाश्रीयते ; अन्यथा वक्तृभेदे दुर्निवारः प्रत्ययः स्यात् । ननु तस्यापि सत्तामात्रेणा-प्रत्यायकत्वादतिप्रसङ्गादव्युत्पन्नस्यापि अतीन्द्रियत्त्वात्ततोऽपि नार्थप्रत्यय

---

ताभ्यां प्रयुक्तस्य शब्दस्यार्थेन सम्बन्धे कथ्यमान इत्यर्थः । इत्युक्तमिति । 'सम्बन्धज्ञानसमये ज्ञायते न नियोगतः' इत्यत्र । उपरिभागव्याख्यामुपसंहरति —**तस्मादेक एव शब्दात्मार्थेषु सङ्केतेन नियुज्यते लोके प्रत्ययकाले चाश्रीयते ; अन्यथा वक्तृभेदे दुर्निवारः प्रत्ययः स्यादिति** । यत एवं शब्दभेदेऽनुपपत्तिः, अत एव एको निरवयवः शब्दात्मा स्फोटशब्दा-भिधेयोऽर्थेषु सास्नादिमदादिषु सङ्केतेन नियुज्यते लोके प्रत्ययकाले चाश्रीयते । कुत इत्याह—अन्यथा । यदि वर्णात्मान आश्रीयन्ते शब्दतयेत्यर्थः । वक्तृभेदे दुर्निवारः प्रत्ययः स्यात् । अर्थप्रत्ययः पदप्रत्ययः वाक्यप्रत्ययश्च स्यादिति । पूर्वोक्तं शङ्कते—**ननु तस्यापि सत्तामात्रेणाप्रत्यायकत्वादतिप्रसङ्गात् अव्युत्पन्नस्याप्यतीन्द्रियत्वात्ततोऽपि नार्थप्रत्यय इत्युक्तमिति** । तस्यापि स्फोटस्यापीत्यर्थः । यथा वर्णवादिनं प्रति कार्यकारणभावस्य सत्तामात्रेणार्थप्रत्ययानङ्गत्वमुच्यते, तथा स्फोटवादिनोऽपि स्फोटस्यापि सत्तामात्रेणाङ्कितयार्थप्रत्यायकत्वासम्भवादित्यर्थः । कुत इत्याह—अतिप्रसङ्गादिति । सत्तामात्रेण प्रत्यायकत्वे सर्वत्र सर्वेषामर्थप्रत्ययः प्रसज्येते-त्यर्थः । अव्युत्पन्नस्यापीति कर्मणि निष्ठा । अपिशब्देनाप्रत्यायकत्वादित्याकृष्यते । यथा कार्यकारणभावस्याव्युत्पन्नस्याप्रत्यायकत्वम् , एवमस्याप्यव्युत्पन्नस्याप्रत्याय-कत्वादित्यर्थः । कुत इत्याह—अतीन्द्रियत्वादिति । अतीन्द्रियस्य शब्दस्य कथं व्युत्पत्तिः, कथं च ज्ञाततया करणत्वम् ? ततोऽपि नार्थप्रत्यय इति । स्फोटात्मनोऽपि नार्थप्रत्ययः संभवति । यथा कार्यकारणभावस्येतिकर्तव्यतात्वं

---

१. अर्थप्रत्यायनम् , अव्युत्पन्नस्यापि प्रसङ्गात् अतीन्द्रियत्वात् . मूलम् .

**इत्युक्तम् । न, ऐन्द्रियकत्वस्य दर्शितत्वात् ॥**

---

न संभवति, एवं स्फोटात्मनः कारणत्वमपि न संभवतीत्यर्थः । इत्युक्तमिति । 'तदपि मृषा, वर्णरूपविवेकेन कस्यचित्कदाचिदज्ञानात्' इति, 'तस्यातीन्द्रियत्वात्; सन्निधिमात्रादुत्पत्तावव्युत्पन्नस्यापि स्यात्' इति च । परिहरति—न, **ऐन्द्रियकत्वस्य दर्शितत्वादिति** । नैष दोषः । यत ऐन्द्रियकत्वमस्माभिराश्रितम् 'यथैव दर्शनैः पूर्वैः' इत्यारभ्येति । समुच्चयपक्षोऽप्यत एव निरस्तो वेदितव्यः । तथा च कार्यकारणभूतेत्यादेः समुत्थापकचित्तविषयत्वेऽपि परिहारग्रन्थस्यैषैव व्याख्या ॥

इति स्फोटसिद्धिव्याख्यायां
द्वात्रिंशः श्लोकः

---

१. आश्रितत्वात्—इति पाठो व्याख्यातृसंमत इव भाति ।

इष्ट उत्क्षेपणत्वादिर्नानाव्यक्तिविभावनः ।
एकस्त्रैविद्यवृद्धानां हस्तसंज्ञादिगोचरः ॥ ३३ ॥

कोऽयं प्रसङ्गः 'एकः कर्मात्माभ्युपगन्तव्यः' इति ? यदा त्रैविद्यवृद्धा हस्तसंज्ञादिविषयान् नानाकर्मक्षणव्यञ्जनीयानभिन्नानुत्क्षेपण-

---

त्रयस्त्रिंशः श्लोकः इष्ट उत्क्षेपणत्वादिरिति । यदुक्तम्—'कर्मस्वप्यस्य हस्तसंज्ञादिषु प्रतिपत्तिहेतुरेकः कल्प्यः' इत्यादि, तत्र परिहारोऽनेन दीयत इति दर्शयन् व्याचष्टे—कोऽयं........इत्युच्यन्त इति । कोऽयं प्रसङ्गः, एकः कर्मात्माभ्युपगन्तव्य इतीति । नायमनिष्टप्रसङ्ग इति भावः । किमा प्रसङ्गत्वाभाव उक्तः । तत्र कारणमाह—यदा त्रैविद्यवृद्धा इति । साङ्गो वेद एका विद्या, स्मृतीतिहासपुराणायुर्वेदादीन्येका विद्या, मीमांसा न्यायविस्तरा चैकेति ; तिस्रो विद्याः ये विदुरधीयते च तत्र च पारङ्गतास्ते त्रैविद्यवृद्धाः । हस्तसंज्ञादिविषयानिति । हस्तसंज्ञादिशब्दाभिधानीयानित्यर्थः । एतच्च हस्तसंज्ञादिगोचर इत्यस्य व्याख्यानम् । हस्तसंज्ञादिगोचर इत्यर्थः । नानाकर्मक्षणव्यञ्जनीयानिति । निरन्तरं प्रतीयमानैः नानाभूतैश्च कर्मक्षणैः प्रत्येकमभिव्यञ्जनीयान् । एतच्च नानाव्यक्तिविभावन इत्यस्य व्याख्यानम् । नानाव्यक्तिभिर्विभावनं व्यञ्जनं यस्येति बहुव्रीहिः । अनेन च व्यनक्तीति व्यक्तिरिति व्यक्तिशब्दव्युत्पत्तिर्दर्शिता । अभिन्नानिति । भिन्नेषु कर्मक्षणेषु समवायेऽपि भेदरहितानित्यर्थः । एकैव हि जातिः, सा व्यक्तिसर्वगता सर्वसर्वगता चेति मतभेदः । यथाहुः—

"पिण्डेष्वेव च सामान्यं नान्तरा गृह्यते यतः ।
न ह्याकाशवदिच्छन्ति सामान्यं नाम किञ्चन ॥

---

१. अभिन्नरूपान्. मूलम्. २. प्रतायमानैः ख.

त्वादिशब्दनिर्देश्यान् सामान्यविशेषानुपयन्त्येव—न ह्यन्यथा 'उत्क्षिपति' इत्यादिका शब्दप्रत्ययानुवृत्तिः स्यात्—इति वदन्तः। ते च हस्तादिसमवेतसमवायेन हस्तसंज्ञा इत्युच्यन्त इति ॥

---

यद्वा सर्वगतत्वेऽपि व्यक्तिशक्त्यनुरोधतः ।"

नान्तरा गृह्यत इत्यनुषङ्गः ।

"शक्तिः कार्यानुमेया हि व्यक्तिदर्शनहेतुका ।" इत्यादि ।

सामान्यविशेषानिति । सामान्य एव सामान्यस्यैव वा विशेषानवान्तरभेदान् । सत्ताजातेरवान्तरसामान्यं कर्मत्वम्, कर्मत्वसामान्यस्यावान्तरजातय उत्क्षेपणत्वादय इति । अथवा ये कर्मक्षणानां सामान्यानि सत्ताया महासामान्यस्य विशेषास्ते सामान्यविशेषा इति कर्मधारयः । उत्क्षेपणत्वादिकानिति सिध्यति । क्वचित्तु उत्क्षेपणत्वादिशब्दनिर्देश्यानिति अभिन्नरूपानित्यस्यानन्तरं पठन्ति । यथाहुः—

"उत्क्षेपणमवक्षेप आकुञ्चनमथापरम् ।
प्रसारणं गतिश्चेति भिद्यते कर्म पञ्चधा ॥

ऊर्ध्वं चाधः स्वाभिमुखं तिर्यग्विष्वगिति क्रमात् ।
तानि पञ्चापि कर्माणि दशसंयोगहेतवः ॥" इति ।

उपयन्त्येवेति । अङ्गीकुर्वन्त्येव । आदिशब्देनावक्षेपणत्वादेरुपादानम् । त्रैविद्यवृद्धान् विशिनष्टि—न ह्यन्यथोत्क्षिपतीत्यादिका शब्दप्रत्ययानुवृत्तिः स्यादिति वदन्तः । उत्क्षेपणत्वादिषूत्क्षेपणत्वादिका जातिरस्तीति प्रतिज्ञाय तस्यानन्तरं हेतुवचनमिदम् । हिशब्दो हेतौ । यद्युत्क्षेपणत्वादिका जातिर्नाङ्गीक्रियते, तर्ह्युत्क्षेपणकर्मव्यक्तिषु 'उत्क्षिपति' इति शब्दप्रत्यययोः, अवक्षेपणादि-

---

१. Added अवक्षिपति. मूलम् .

कर्मव्यक्तिषु 'अवक्षिपति' इत्यादिशब्दप्रत्यययोरनुवृत्तिर्न स्यादेव ; दृश्यते च । अतोऽस्ति तेषूत्क्षेपणत्वादिकं सामान्यमिति वदन्त इत्यर्थः । तथा च वैशेषिकसूत्राणि "सामान्यं विशेष इति बुद्ध्यपेक्षम्" "भावः सामान्यमेव" "द्रव्यत्वं गुणत्वं कर्मत्वं च सामान्यानि विशेषाश्च अन्यत्रान्त्येभ्यो विशेषेभ्यः" इति । सामान्यं विशेष इति व्यवस्थावचनमनुवृत्तिर्व्यावृत्तिबुद्ध्यपेक्षम् ; तत्र भावः सत्ताख्यः सामान्यमेव, अनुवृत्त्यैकबुद्धिगोचरत्वात् ; द्रव्यत्वं गुणत्वं कर्मत्वं च सामान्यानि विशेषाश्च, व्यावृत्तिबुद्धेरनुवृत्तिबुद्धेश्च गोचरत्वात् । अन्त्यास्तु विशेषा विशेषा एव, व्यावृत्तिबुद्ध्येकगोचरत्वात् । पुनश्चोक्तम् "सदिति यतो द्रव्यगुणकर्मसु सा सत्ता" इति । यतो वस्तु न सदिति शब्दप्रयोगः प्रत्ययश्च यत आविर्भवतो द्रव्येषु गुणेषु कर्मसु च सा सत्ता नाम जातिरिति । एवं चोत्क्षेपणमिति यत उत्क्षेपणक्षणेषु तदुत्क्षेपणत्वमिति लक्षणं सूचितम्, तदर्थतोऽनेनोपात्तम् । न ह्यन्यथेति वदन्त इति हेतौ शतृप्रत्ययः । यतस्त एवं वदन्ति, अतोऽभ्युपयन्त्येवेति । एवमन्येषामपि त्रैविद्यवृद्धानां वचनमुदाहरणीयम् । अथवा त्रयो वेदास्तिस्रो विद्याः, अन्येषां तत्रान्तर्गतत्वात् ; शेषं पूर्ववत् । अथवा त्रैविद्यवृद्धशब्दोऽपि प्रकरणाद्वैयाकरणानेव विषयीकरोति ; तेषामेव वचनं न ह्यन्यथेति । नन्वेवं कर्मसंज्ञेति स्यात् ; न हस्तसंज्ञेति, उत्क्षेपणत्वादीनां कर्मसमवायात् ; अत आह—ते च हस्तादिसमवेतसमवायेन हस्तसंज्ञा इत्युच्यन्त इति । ते चोत्क्षेपणत्वादयः हस्तादिषु समवेता ये कर्मक्षणाः तेषु समवायेन हस्तसंज्ञा इत्युच्यन्ते ; हस्तस्य संज्ञा इत्युच्यन्ते । समवायवत् समवेतसमवायोऽपि सम्बन्ध इत्यभिप्रायः । हस्तादीत्यादिशब्देन चक्षुरादेरुपादानम् । हस्तसंज्ञेत्युपलक्षणम् । तथा अक्षिनिकोचसंज्ञा इत्यादि अक्षिसंज्ञेति वा ॥

इति स्फोटसिद्धिव्याख्यायां

त्रयस्त्रिंशः श्लोकः

उपलब्धेश्च साकल्ये क्रमः प्रागेव चिन्तितः ।
नित्यत्वमविकल्प्यं तु सत्त्वादेवास्य जातिवत् ॥ ३४ ॥

उपलब्धिसाकल्यं येन क्रमेण वाचके ध्वनयः शक्नुवन्ति, स[1] क्रमः पूर्वमावेदित एव 'प्रयत्नभेदतो भिन्नाः' इत्यादिना[2] । यस्तु विकल्पः—सदपि तदनित्यं स्यात् नित्यं वा शब्दरूपमिति, सोऽनवकाश

---

चतुस्त्रिंशः श्लोकः उपलब्धेश्च साकल्य इति । 'तथा हि—ध्वनयः क्रमवर्तित्वात्' इत्यादेः परिहारार्थः पूर्वार्ध इति दर्शयन्नाह—**उपलब्धिसाकल्यं ........विमर्देनेति** । उपलब्धिसाकल्यं येन क्रमेण वाचके ध्वनयः शक्नुवन्ति, स क्रमः पूर्वमावेदित एव 'प्रयत्नभेदतो भिन्नाः' इत्यादिना । क्वचित्तु पूर्वमेवावेदित एवेत्येवकारद्वयमस्ति ; तत्र पूर्वमेव, नेदानीं प्रस्तावावकाशः ; आवेदित एव, न तत्र किञ्चिदावेदितव्यमवशिष्यत इत्यभिप्राय उन्नेतव्यः । 'अपि चैकमनेकावयवात्मकमनवयवं वा' इत्यत्र तच्छब्दरूपं नित्यमनित्यं वा ; नित्यत्वे निरवयवमेवेत्यविवादम् ; अनित्यत्वे तु सावयवं निरवयवं वेत्यभिप्रायः । तत्राद्यस्य विकल्पस्योत्तरार्धेन निराक्रियेति दर्शयन्नाह—यस्तु विकल्प इति । केचित्तु यस्तु विकल्प इत्यादिकं न पूर्वोक्तानुभाषणम्, परैः स्वग्रन्थ एवोक्तस्य विकल्पस्यात्रोपन्यास इत्याहुः । सदपीत्यपिशब्देन सत्त्वमभ्युपेत्य परेणोच्यत इति सूचयति । तच्छब्दरूपं स्फोटशब्दाभिधेयं कर्मादिवदनित्यं वा स्यात् , जात्यादिवन्नित्यं वा स्यात् इत्येवंरूपः । एवमविकल्प्यमित्यत्र धातूपसर्गयोरर्थ उक्तः । सम्प्रति नञः कृत्यस्य चार्थमाह—सोऽनवकाश एवेति । अनवकाशत्वादादावेवोपन्यस्तः । अथवा अनवकाशत्वादस्माभिरुपन्यस्तः । सत्त्वादेव नित्यत्वसिद्धेर्जातिवदिति ।

---

१. सक्रमपूर्वकम् . मूलम् . २. इत्यादि. मूलम् .

**एव, सत्त्वादेव नित्यत्वसिद्धेः जातिवत् । यथैव जातेर्यः सत्तावगमनिबन्धनमन्वितावभासः प्रत्ययः स नित्यतयैव सत्त्वमवगमयति— विनाशिनीत्वे हि व्यक्तेरिव तस्या अभावात् ; अतो न तत्र**

---

अस्य निरवयवस्य शब्दस्य सत्त्वमभ्युपगम्यते वा न वा ? यदि नेत्युच्यते, तदा तत्साधनाय प्रयासः कर्तव्यः; स च पूर्वमेव कृतः । अतः पूर्वोक्तप्रकारेण सत्त्वमभ्युपगम्यमानं नित्यत्वमन्तर्भाव्यैव सिद्ध्यतीति सत्त्वादेव कारणनिरपेक्षाच्छब्दरूपस्य नित्यत्वसिद्धेः । अत्र दृष्टान्तमाह—जातिवदिति । यथोक्तं प्राक् 'न च सत्त्वाद्यपह्नवः साधुः' इति । जातिवदित्येतद्व्याचष्टे— यथैवेति । उपरितनेन तथाशब्देनान्वयः । जातेर्यः सत्तावगमनिबन्धनमन्वितावभासः प्रत्यय इति । 'अयं गौः, अयं गौः' इति व्यक्तिषु परस्परव्यतिरेकप्रत्यये सत्येव योऽन्वितावभासोऽनुगताकारः प्रत्ययो जायते स तत्र सत्तावगमस्यैव साक्षान्निबन्धनमपि सन्नित्यतयैव नित्यतामपि क्रोडीकुर्वन्नेवात्र जातेः सत्त्वमवगमयतीति । अन्वितावभास इति । अन्वितोऽनुगत एक अवभासः आकारो यस्येति । अथवा 'गोत्वेनान्वितोऽयम्' इत्येवमाकार इत्यर्थः । क्वचित्पाठः नियतावभास इति । नियतो व्यभिचाररहितः आकारो यस्येति । सत्तावगमनिबन्धनमिति । सत्ताया योऽवगमो निश्चयः तस्य कारणमिति । क्वचित्पाठः सत्तावगमनिबन्धन इति । सत्तावगमो निबन्धनं हेतुः फलं यस्येति बहुव्रीहिः । नित्यतयैवेत्यवधारणाभिप्रायमाह—विनाशिनीत्वे हि व्यक्तेरिव तस्या अभावादिति । यदि जातेर्विनाशिनीत्वं तदा व्यक्तेरिव जातेरपि तत्र तत्राभावप्रसङ्गः । ततश्चान्वितावभासप्रत्ययानुदयप्रसङ्गः । अतो नित्यतयैव सत्त्वमवगमयति । हिशब्देन प्रसिद्धिं दर्शयति । नात्र कस्यचिद्विवाद

---

१. जातेः सत्तावगमनिबन्धनः. ख.
२. भासप्रत्ययः. ख.
३. आभासः. ख.

**नित्यानित्यविकल्पावतरणं[1] भवति—तथार्थाधिगमफलव्यवस्थाप्यमानसत्त्वः स्फोटात्मा नित्य एवावतिष्ठते । अनित्यत्वे पूर्वदर्शनाभावादर्थप्रत्यया-योगात् कुतो नित्यानित्य[2]विकल्पावकाश इत्यलमतिविमर्देन ॥**

---

इत्यभिप्रायः । विनाशिनीशब्दाच्च भावप्रत्ययः । यथा प्रमाणग्राहिणीशब्दात् प्रमाणग्राहिणीत्वेन । यस्मात् पूर्वविलक्षणेति । विनाशित्व इति पाठे सामान्यवचनाद्विनाशिशब्दादिति वेदितव्यम् । ततः किमित्याह—अतो न तत्र नित्यानित्यविकल्पावतरणं भवतीति । यत एव नित्यतामन्तर्भाव्यैव सत्तावगतिः, अत एव न जातौ नित्यानित्यविकल्पस्यावतरणं भवतीति । दार्ष्टान्तिके योजयति—तथार्थाधिगमफलव्यवस्थाप्यमानसत्त्व इति । अर्थाधिगमेन फलेन कार्येण व्यवस्थाप्यमानं सत्त्वं यस्येति । यथा च स्फोटात्मनः सत्त्वमर्थाधिगमेन फलेन व्यवस्थाप्यते, तथा पूर्वमेव निपुणं निरूपितम् । स्फोटात्मा नित्य एवावतिष्ठते इति । न त्वनित्य इति भावः । तत्र कारणमाह—अनित्यत्वे पूर्वदर्शनाभावादर्थप्रत्ययायोगादिति । अनित्यत्वे हि शब्दस्य प्रतिक्षणविनाशिनः पूर्वदर्शनाभावादर्थप्रत्यायनकालात् पूर्वस्मिन् काले सम्बन्धग्रहणार्थं दर्शनासम्भवादगृहीतसम्बन्धस्य चार्थप्रत्ययायोगान्नित्य एवावतिष्ठते ; सम्बन्धग्रहण-सापेक्षत्वं च स्थितमेवेति भावः । उपसंहरति—कुतो नित्यानित्यविकल्पावकाश इति । एवं च कुत इति द्रष्टव्यम् । यथोक्तम्—

> "अत्रोच्यते स्थिरः शब्दो धूमगोत्वादिजातिवत् ।
> सम्बन्धानुभवापेक्षसामान्यार्थावबोधनात् ॥" इति ।

इत्यलमतिविमर्देनेति । इति हेतोरलमतिसङ्घर्षेणेति । एतच्च शब्दाधिकरण-सिद्धत्वान्नास्माभिः क्लेशेन प्रतिपादनीयम् । शब्दाधिकरणे स्फोटनित्यता प्रतिपादितेति भावः ॥

इति स्फोटसिद्धिव्याख्यायां चतुस्त्रिंशः श्लोकः

---

१. त्योऽवतरं लभते. मूलम्. २. अनित्यत्वविकल्प. ख.

**यस्य दर्शनम्—अन्यग्रहणसापेक्षः पदप्रत्ययः कल्पनेति, तस्यापि**

**अन्यग्रहणसापेक्षं कथं जात्यादि वस्तुसत् ।**
**अर्थग्रहणसापेक्ष उक्तमन्योन्यसंश्रयम् ॥ ३५ ॥**

**यदि तावद्वर्णग्रहणसापेक्षत्वात् काल्पनिकः पदप्रत्यय इति,**

---

यच्च पूर्वमुक्तम् 'न चैकमेकबुद्धिग्राह्यम्' इत्यादि, तथा 'वर्णानुक्रमोपकारे ह्यनपेक्षिते' इति, पुनश्च 'विकल्पविषया यथासङ्केतम्' इत्युपसंहृतम् ; तदनुभाषते—**यस्य दर्शनम्** । तदेव दर्शयति—**अन्यग्रहणसापेक्षः पदप्रत्ययः कल्पनेति** । वर्णग्रहणसापेक्षः पदप्रत्ययः समारोप इत्यर्थः । क्वचित्पाठः वर्गवनवदन्यग्रहणसापेक्षः पदप्रत्ययः कल्पनयेति । कल्पनया कारणेन कृत इति सिध्यति । यथा वृक्षग्रहणसापेक्षो वनप्रत्ययः कल्पनया, यथा च ककारादिषु वर्गप्रत्ययः, यथा च शत्रुवर्गो मित्रवर्ग इति ; न हि वर्गो वनं वा परमार्थतोऽस्तीति । अन्यः पाठः वर्णवनवदिति । यथा भवतां वर्णाः काल्पनिकाः, वनं च सर्वेषां काल्पनिकमिति । **तस्यापीति** । उपस्कारः । अन्यग्रहणसापेक्षमिति पञ्चत्रिंशः श्लोकः । पूर्वार्धं व्याचष्टे—**यदि........ मनोहरमिति** । यदि तावद्वर्णग्रहणसापेक्षत्वात् काल्पनिकः पदप्रत्यय इति । अन्यग्रहणसापेक्षः पदप्रत्ययः कल्पनेति वदतो विवक्षितमिति शेषः । इदमाकूतम् —अन्यग्रहणसापेक्ष इति वदतोऽन्यशब्देन किं विवक्षितम् वर्णा वा अर्थो वा ? तत्र पूर्वं कल्पमधिकृत्य पूर्वार्धं प्रवर्तत इति दर्शयति—यदि तावदिति । वर्णग्रहणसापेक्षत्वादित्यनेनान्यग्रहणसापेक्ष इति अन्यग्रहणसापेक्षमिति चोभयमपि हेतुनिर्देशोऽन्यशब्देन च वर्णानां परामर्श इति दर्शितम् । काल्पनिक इति । संवृतिः कल्पना समारोप इति पर्यायाः । पदप्रत्ययः पदस्य प्रत्ययः इतीत्यत्र विवक्षितमित्यध्याहार इत्युक्तम् । अथवा यस्य दर्शनमिति, अतः ।

**जात्यादिप्रत्यया अपि कल्पनीयाः स्युरिति जात्यादीनां परमार्थसत्त्वं[1] हीयेत ; अर्थग्रहणस्य[2] सापेक्षत्वे च दर्शितमितरेतराश्रयत्वमिति[3] सर्वं[4] मनोहरम् ॥**

---

दूषयति—जात्यादिप्रत्यया अपि कल्पनीयाः स्युः । अत्र तर्हीत्यर्थसिद्धं द्रष्टव्यम् । कल्पनीयाः कल्पनाविषयाः ; कल्पना च व्याख्यातैव । तेऽपि ह्यन्यग्रहणसापेक्षाः । जातिप्रत्ययोऽपि व्यक्तिग्रहणसापेक्षः । अवयवग्रहण-सापेक्षोऽवयविप्रत्यय इत्यादि पूर्ववत् द्रष्टव्यम् । न च तथा नामेति वाच्यमित्याह—इति जात्यादीनां परमार्थसत्त्वं हीयेतेति । वस्तुसदित्यस्य व्याख्या परमार्थसत्त्वमिति । अनेन चान्यग्रहणसापेक्षं यज्जात्यादि, तत्कथं वस्तुसदिति योजना दर्शिता । पारमार्थिकं(कत्वं)चाकृतिग्रन्थे स्थितमिति भावः । वैशेषिकादिभिश्च साधितम् । अथार्थग्रहणसापेक्षः पदप्रत्ययः कल्पनेति विवक्षितम्, तत्राह—अर्थग्रहणस्य सापेक्षत्वे च दर्शितमितरेतराश्रयत्वमिति । पदप्रत्ययस्यार्थग्रहणं प्रति सापेक्षत्वे च पूर्वमेवास्माभिर्दर्शितमितरेतराश्रयत्वमिति । श्लोके चार्थग्रहणसापेक्ष इत्यत्र पदप्रत्यय इति विशेष्यं द्रष्टव्यम् । अर्थग्रहण-सापेक्षत्वं हि न स्फोटवादिभिराश्रीयते, किं तु वर्णवादिभिरेव । तत्र च दोषोऽस्माभिर्दर्शित एवेति किं तदस्मान् प्रत्युपन्यस्यत इत्यर्थः । उक्तिश्च—

'अर्थस्याधिगमो नर्ते पदरूपावधारणात् ।
तदर्थबोधादिति चेद्व्यक्तमन्योन्यसंश्रयम् ॥' इति ।

इति सर्वं मनोहरमिति । अतः स्फोटवाद्युक्तं सुन्दरमेवेत्यर्थः ॥

इति स्फोटसिद्धिव्याख्यायां
पञ्चत्रिंशः श्लोकः

---

१. पारमार्थ्यम्. ख.
२. ग्रहणसापेक्षत्वे. ख.
३. त्वम् । ततः. मूलम्.
४. Omitted. इति. ख.

निरस्तभेदं पदतत्त्वमेतद्
व्यादर्शि युक्त्यागमसंश्रयेण ।
विधूतभेदग्रहमेतयैव
दिशापरं संप्रतियन्त्वभेदम् ॥ ३६ ॥

---

अत्र च 'वाक्यं न भिन्नम्' इत्यादेः 'आकारान्तरवत्' इत्यन्तस्य 'अन्यस्य खलु वाङ्मात्रात्' इत्यादिना 'प्रसङ्गात्' इत्यन्तेन परिहार उक्तः । 'अपि चैकमनेकावयवम्' इत्यादेः 'सकलश्रुतेः' इत्यन्तस्य 'नानेकावयवम्' इत्यादिना सविवरणेनार्धश्लोकेन परिहार उक्तः, 'अनवयवपश्चिमकल्पेऽपि' इत्यादेरुत्तरार्धेन । 'न चान्यासम्भवि कार्यं गमकम्' इत्यादेः 'उत्पत्तिवादिनो वर्णाः' इत्यादिना, 'स्यान्मतं सरोरस इत्यादिषु पदेषु' इत्यादेः 'कार्यकारण-भावश्चेत्' इत्यादिना 'वर्णाविशेषेऽपि वाक्यभेदात्' इत्यादेः 'अन्यग्रहणसापेक्षम्' इत्यादिना परिहार उक्तः । पूर्वोक्तानां दोषाणां येऽस्माभिरनभ्युपगतार्थविषयाः तेषामुपेक्षैवोत्तरम् । ये पुनरभ्युपगतार्थविषयाः तेषां परिहारः साकल्येन दर्शित एवेत्यूहितव्यम् ।

षट्त्रिंशः श्लोकः निरस्तभेदमिति । मया व्यादर्शि विविच्य दर्शितमेतत्पदतत्त्वम् । पदतत्त्वं विशिनष्टि––निरस्तभेदं निरस्ता वर्णात्मानो भेदाः यस्य तत्तथोक्तम् । भेदानामप्रमाणकत्वमस्माभिर्दर्शितम्; पदतत्त्वस्य च प्रामाणिकत्वम् । एतस्य स्फोटात्मनो दुर्विदग्धैः कृतस्य अवक्षेपस्य निराकरणेन वैयाकरणानां प्रतितन्त्रसिद्धान्तः । एतत्पदतत्त्वं सजातीय-विजातीयेभ्यो विविच्याभिमुख्येन दर्शितम् । किं च 'गौरित्येकं पदम्' इति यज्ज्ञानमुदीयते लौकिकानामपरोक्षावभासं तत्परैरवक्षिप्तम्––न किल तद्वर्णातिरिक्तगोचरं वर्णत्रयमात्रगोचरत्वादिति । तत्र वर्णत्रयमात्रगोचरत्वे बाधकं

तदतिरिक्तगोचरत्वे साधकं चास्माभिरुपन्यस्तम् । ततश्च ज्ञानस्य स्फोटगोचरत्वमवस्थितम् । एतदेवास्माकं दर्शनप्रयोजकं यत् तत्परिपन्थिनिराकरणम् यथा दीपारोपस्य तमोनिरासः 'दीपो दर्शयति' इत्यत्र । एतच्च युक्त्यागमसंश्रयेणास्माभिः कृतम् । युक्तिर्न्यायः । आगमः संप्रदायः । यत्पूर्वम् 'यथागमं न्यायलेशो निदर्श्यते' इत्युक्तम्, तद्यथाप्रज्ञमस्माभिः कृतमित्यर्थः । 'दर्शने पददर्शिनाम्' इत्यत्र दर्शनशब्दस्य सिद्धान्तविषयत्वे प्रत्यक्षज्ञानविषयत्वे च युक्त्यागमसंश्रयेणेत्यस्य साधारणीयं व्याख्या ; सिद्धान्तविषयत्वे पुनरस्य व्याख्यानान्तरम्—युक्तिः अनुमानम् अन्यथानुपपत्तिश्च । आगमः शाब्दम् । तदुभयं समाश्रित्य साक्षिस्थानीयमुपन्यस्यावश्यकत्वं प्रतिपाद्य 'गौः' इत्यादिप्रत्यक्षज्ञानविषयत्वं स्फोटात्मनोऽत्रबोधितामिति । आगमश्च "गोशब्दादर्थं प्रतिपद्यामहे" "भावमाख्यातेनाचष्टे" "भावार्थाः कर्मशब्दाः" इत्यादिको द्रष्टव्यः । तथा "साक्षात्कृतधर्माणः" इत्यादिकः । तथा "एतं मन्त्रमपश्यत्" इत्यादिकं मन्त्रसाक्षात्करणं च वर्णातिरिक्तत्वे सत्येवोपपद्यत इत्याहुः । तथा "उत त्वः पश्यन्" इत्यादिमन्त्रवर्णानुसारेण वर्णातिरिक्तं पदतत्त्वमध्यवसीयत इति वर्णयन्ति । एतस्य सर्वस्य प्रत्यक्षज्ञानविषयत्वेऽपि स्फोटस्य हेतुत्वं सत्परम्परया संभवत्येवेति दर्शनशब्दस्य प्रत्यक्षज्ञानविषयत्वेऽपीयं व्याख्या सङ्गच्छत एव । एतच्च सर्वं विस्तरेण पूर्वाचार्यग्रन्थेषु द्रष्टव्यमेवेत्युपरम्यते । ननु यत्पूर्वं प्रतिज्ञातं पदविषयं प्रकरणम्—पदतत्त्ववद्वाक्यतत्त्वमपि परे नेच्छन्त्येव ; अवक्षिपन्ति च—किमिति पुनस्तदुपेक्ष्यते ? वाक्यतत्त्वेन च प्रयोजनम् । यथोक्तम्—

"अर्थेन च प्रयुक्तानां शब्दानां संस्क्रियोदिता ।
वाक्यमेवंविधं चेष्टं न पदान्यर्थवर्जनात् ॥" इति ।

अत आह—विधूतभेदग्रहमिति । क्रियाविशेषणमेतत् । विधूय भेदग्रहण-

मिति वा पाठः । वर्णपदादिभेदग्रहं भेदज्ञानं विधूयालीकत्वेन निश्चित्ये-त्यर्थः । एतयैव दिशेति । पुरोक्तप्रकारेणेत्यर्थः । परमिति । पदस्फोटात्परं वाक्यस्फोटमित्यर्थः । अन्यवचनः परशब्द उत्तरवचनो वा; पदपूर्वत्वाद्वाक्यस्य । अत एव वाक्यस्फोटं प्रसाध्य किमिति पदेऽतिदेशो न क्रियत इति न चोदनी-यम्, पदारभ्यत्वाद्वाक्यस्य । सम्प्रतीति । यदैवं पदतत्त्वं व्यादर्शि तदेदानीमित्यर्थः । यन्तु गत्यर्थन्यायाज्जानन्त्वित्यर्थः । अथवा सम्प्रतियन्तु सम्यक् प्रतिपद्यन्ताम् । अभेदं निरवयवमित्यर्थः । पदतत्त्वेऽयमस्मत्प्रयत्नो वाक्यविषयेऽपि समवहितमनसां फलं पुष्णात्येवेत्युपरम्यत इत्यभिप्रायः । केचित्त्विममेवार्धश्लोकं विधूय भेदग्रहमित्यादिकं वाक्यार्थस्यापि निर्भागत्वेऽपि व्याचक्षते, शब्दात्मकत्वेऽपि । तच्च **ब्रह्मसिद्धौ** अक्षरमित्यत्र द्रष्टव्यम् । विश्वस्य च सत्तात्मकत्वमेव, भेदस्त्वविद्यामात्रमिति दर्शितम्; शब्दात्मकं च तत् । तच्च पूर्वग्रन्थेषु दर्शितमित्युपरम्यते ॥

इति स्फोटसिद्धिव्याख्यायां

षट्त्रिंशः श्लोकः

———

१. त्वेवमेव. ख.

सान्द्राविद्यातिमिरपटलाच्छादितान्तर्दृशो ये
दृष्टिं मन्दा वरमुनिमते कुर्वते सावमानम् ।
तेभ्योऽविद्यातिमिरपटलोल्लेखिनी संहितेयं
स्पष्टन्यायैर्घटितसुमतिर्दर्शिता स्फोटसिद्धिः* ॥ ३७ ॥

इति मण्डनमिश्राणां कृतिः
स्फोटसिद्धिः समाप्ता

---

नन्वेवं स्फोटसिद्धिः पूर्वैराचार्यैः कृतैव । सैव च त्वयापि कृता । किमनया प्रयोजनम् ? अत आह—सान्द्राविद्येति । सान्द्राया घनाया अविद्याया विद्याप्रागभावेन विपर्ययज्ञानेन संस्कारेण चानादिना शब्दभावनाख्यया तिमिरपटलेनाच्छादिता अन्तर्दृगन्तःकरणाख्यं चक्षुर्येषामिति विग्रहः । ये तैर्थिका वैयाकरणशिष्या वा । दृष्टिमीक्षणम् । मन्दाः साध्वसाधुविवेकशक्तिरहिताः । वरमुनिमते वराणां पाणिन्यादिमुनीनां मते, वरे वा मुनिमते सिद्धान्ते । सावमानं सावज्ञमिति क्रियाविशेषणम् । स्त्रीलिङ्गत्वे दृष्टिविशेषणम् । कुर्वत इत्यात्मनेपदनिर्देशेन एषां सावज्ञदृष्टावादरः सूचितः, परमो हि पुरुषार्थोऽस्मासु भवितेति कर्त्रभिप्रायत्वात्क्रियाफलस्य । तेभ्यस्तदर्थमित्यर्थः । अविद्यातिमिरपटलोल्लेखिनी अपमार्जिनी संहितानुसंहिता पूर्वग्रन्थोक्तानुसन्धानमात्रमत्र कृतमिति भावः । सम्भृतेति पाठे एकत्रोपसंहृतेत्यर्थः । इयमितीदृशीति । सम्भृतार्थेति वा पाठः । सम्भृता अर्था यस्यामिति वक्तव्या येऽर्थाः पूर्वग्रन्थकृताभिप्रेताश्च तेऽस्यां सर्वे सम्भृता इति । स्पष्टन्यायैः

---

* वेदरक्षा तदूहश्च भेदसन्देहवारणम् ।
फलं व्याकरणस्याहुः शब्दज्ञानं च लाघवम् ॥ इति मूलेऽधिकम् ।

स्पष्टैर्न्यायैः । पूर्वग्रन्थगता न्याया दुर्ग्रहा इह स्पष्टतयोक्ता इति । तैर्घटिता सुमतिः शोभना मतिः निरस्तसन्देहविपर्यया यस्यामिति विग्रहः । दर्शिता अस्माभिरनेन प्रयत्नेन । स्फोटसिद्धिः स्फोटस्य सिद्धिर्ज्ञानं सत्ता वा तत्कारणत्वात् ग्रन्थोऽपि स्फोटसिद्धिरित्युच्यते । अविद्यातिमिरपटलेति रूपकम् ।

"उपमैव तिरोभूतभेदा रूपकमुच्यते" ।

वरमुनिमतं कात्स्न्र्येन स्वाविद्यया ये न जानन्ति तद्बलेन च न्यायाभासानुपन्यस्यन्ति तेषामन्यतीर्थिकानामस्मच्छिष्याणां वा कृतेऽयं ग्रन्थो निर्मितः । यथा चिकित्सको नेत्रव्याधेस्तिमिरपटलस्योल्लेखिनीमोषधिं दर्शयति, तथा अस्माभिरविद्योन्मोचनी स्फोटसिद्धिर्दर्शिता । अथवा स्पष्टस्य न्यायैर्दर्शितेति सम्बन्धः । घटितसुमतिः स्वस्यां घटिताः योजिताः सुमतयः सुमनसो निर्मत्सरा विद्वांसो यया सेत्यर्थः । एतच्च 'दुर्विदग्धैरवक्षिप्ते' इत्यत्रोक्तस्य प्रपञ्च इति वेदितव्यम् । तथा हि 'दर्शने न्यायलेशो निदर्श्यते' इत्युक्तम्, तदेवात्रोपसंहृतं स्पष्टन्यायैरित्यादिना । पूर्वार्धेन तत्रत्यः पूर्वार्धो विवृत इति प्रतिज्ञातं सर्वमविकलमेव प्रतिष्ठितम् ॥

इति श्रीमदृषिपुत्रपरमेश्वरविरचितायां स्फोटसिद्धिव्याख्यायां
गोपालिकाख्यायां सप्तत्रिंशः श्लोकः

---

तत्त्वबिन्दोः कृता येन व्याख्या तत्त्वविभावना ।
तेनेयं रचिता व्याख्या नाम्ना **गोपालिका** स्मृता ॥ १ ॥

शब्दानां पालकं ह्येतदस्या मूलं निबन्धनम् ।
एषा व्याख्येयशब्दानामुपादानाच्च पालिका ॥ २ ॥

नन्दगोपसुता देवी **वेदारण्य**निवासिनी ।
मात्रा **गोपालिका**नाम्ना सेवितास्मदपेक्षया ॥ ३ ॥

तत्प्रसादादियं व्याख्या मया विरचिता किल ।
इति गोपालिकासंज्ञामस्या व्याचक्षते बुधाः ॥ ४ ॥

**मण्डनाचार्य**कृतयो येष्वतिष्ठन्त कृत्स्नशः ।
तद्वंश्येन मयाप्येषा रचिताराध्य देवताम् ॥ ५ ॥

ब्रह्मविष्णुमहेशानरूपिणीं विश्वमातरम् ।
**ऋषिं** पितरमानम्य भवदासमनन्तरम् ॥ ६ ॥

गुरूनन्यांश्च रचिता व्याख्येयं क्षम्यतां बुधैः ।
यन्न्यूनमतिरिक्तं च दुरुक्तं चेह किञ्चन ॥ ७ ॥

परमेश्वर एवास्याः कर्ता साक्षान्निरञ्जनः ।
नायं जनस्तु तन्नामा साञ्जनो मन्दचेतनः ॥ ८ ॥

यथोक्तं भट्टपादैः—

"यदीयशक्त्यनाविष्टं जगत्स्पन्दितुमक्षमम् ।
युक्तिभिस्तमपह्नोतुं कः शक्तः परमेश्वरम् ॥" इति ॥

इति श्रीमदृषिपुत्रपरमेश्वरविरचिता स्फोटसिद्धिव्याख्या
गोपालिकाख्या संपूर्णा



## अनुबन्धः प्रथमः. १.

## स्फोटसिद्धिकारिकाः

---

योगदान्तैकदृश्यात्मा यो गदान्तकरो नृणाम् ।
तत्त्वावस्थाणवे तस्मै तत्त्वावस्थाणवे नमः ॥ १ ॥

दुर्विदग्धैरवक्षिप्ते दर्शने पददर्शिनाम् ।
यथागमं यथाप्रज्ञं न्यायलेशो निदर्श्यते ॥ २ ॥

अर्थावसायप्रसवनिमित्तं शब्द इष्यते ।
तदेतत्प्रक्रमापेक्षं भाष्यकृत्प्रत्यपीपदत् ॥ ३ ॥

अविशिष्टादजातस्य विशिष्टाद्भाव इष्यते ।
सत्यं स तु विशेषोऽत्र न कश्चन निरूप्यते ॥ ४ ॥

एकार्थकारिणो येऽपि दृश्यन्ते क्रमवर्तिनः ।
इष्टं विपश्चितां तत्र कार्यं स्थाय्युपकारकम् ॥ ५ ॥

संस्काराः खलु यद्वस्तुरूपप्रख्याप्रभाविताः ।
विज्ञानहेतवस्तत्र ततोऽर्थे धीर्न कल्पते ॥ ६ ॥

शक्तेः शक्त्यन्तरायोगस्तत्र सत्यप्यदर्शनम् ।
विलक्षणस्योपजनो नाविशेषाच्च कारणात् ॥ ७ ॥

पूर्वोपलब्धिभेदेऽपि भवेदर्थस्य दर्शनम् ।
एकोपलब्धौ नैतेषां भेदः कश्चन लक्ष्यते ॥ ८ ॥

नेक्षिता जातिशब्दानां समुदायानुपातिता ।
जातिमाचक्षते ते हि व्यक्तीर्वा जातिसङ्गताः ॥ ९ ॥

अपूर्वमिव नैवान्यः संस्कारः स्फोटवादिनः ।
प्रक्लृप्तवासनारूपाद्यथा स्याद्वर्णवादिनः ॥ १० ॥

कर्तृक्रमादिनियमात्तत्राद्दष्टस्य भूयसः ।
कल्पनाम्नानसामर्थ्यादिह तस्यास्तु हीयते ॥ ११ ॥

न संस्कारविशेषश्च युक्तो हेत्वविशेषतः ।
अन्यसन्निधितो भेदो नास्य नापि स्वरूपतः ॥ १२ ॥

न चान्त्यवर्णमात्रस्य पुरःसम्बन्धवेदनम् ।
अक्षवर्त्मातिवृत्तत्वात्संस्कारस्य न तद्गतः ॥ १३ ॥

निरुद्धबुद्धयो नैव पूर्वे वर्णा विशेषकाः ।
एकबुद्धावुपारोहे क्रमाद्यस्तमुपागतम् ॥ १४ ॥

न प्रत्ययः स्यादेकत्वे प्रयोक्तुरविभाविते ।
न च तस्य परिज्ञानमकस्मादवकल्पते ॥ १५ ॥

सम्बन्धज्ञानसमये ज्ञायते न नियोगतः ।
तिरोहितव्यवहितप्रयुक्तौ वक्तुरेकता ॥ १६ ॥

अनङ्गे वक्तुरेकत्वे वक्तृभेदे निरुद्धवा ।
संस्कारादावभिन्नेऽपि धीर्हेत्वन्तरसूचनी ॥ १७ ॥

प्रयत्नभेदतो भिन्ना ध्वनयोऽस्य प्रकाशकाः ।
प्रत्येकमनुपाख्येयज्ञानतद्भावनाक्रमात् ॥ १८ ॥

आरूपालोचितेष्वस्ति ह्यन्यथात्वप्रकाशनम् ।
तत्संस्कारक्रमाच्चापि व्यक्तं तत्त्वं प्रकाशते ॥ १९ ॥

ध्वनयः सदृशात्मानो विपर्यासस्य हेतवः ।
उपलम्भकमेवेष्टं विपर्यासस्य कारणम् ॥ २० ॥

उपायत्वाच्च नियमः परदर्शितदर्शिनाम् ।
ज्ञानस्येव च वाचोऽयं लोके ध्रुव उपप्लवः ॥ २१ ॥

विपर्यासो निमित्तं च सम्यग्बोधस्य दर्शितः ।
किञ्चिद्भेदानुकारेऽपि दृष्ट एव विपर्ययः ॥ २२ ॥

प्रत्यक्षज्ञाननियता व्यक्ताव्यक्तावभासिता ।
मानान्तरेषु ग्रहणमथवा नैव हि ग्रहः ॥ २३ ॥

अन्यानुविद्धबोधेऽपि नान्यत्वमुपरुध्यते ।
एकरूपपरिच्छेदे कथमन्याप्रकाशनम् ॥ २४ ॥

तद्ग्राह्यैकार्थताभ्यां च शब्देषु वदतैकताम् ।
विवेकहेत्वभावेन सर्वत्रोत्सारिता भवेत् ॥ २५ ॥

अर्थस्याधिगमो नर्ते पदरूपावधारणात् ।
तदर्थबोधाद्यदि च व्यक्तमन्योन्यसंश्रयः ॥ २६ ॥

भिन्नक्रमेऽपि विज्ञाने समूहिषु न भेदवान् ।
समूहः पदरूपं तु स्पष्टभेदं प्रतीयते ॥ २७ ॥

अन्यस्य खलु वाङ्मात्राद्वदतोऽप्रतिभासनम् ।
वाक्ये पदे वा मर्यादा न विघ्नः केन कल्पिता ॥ २८ ॥

नानेकावयवं वाक्यं पदं वा स्फोटवादिनाम् ।
एकत्वेऽपि त्वभिन्नस्य क्रमशो दर्शिता गतिः ॥ २९ ॥

उत्पत्तिवादिनो वर्णाः कामं सन्तु प्रभेदिनः ।
न त्वसाधारणस्तेषां भेदोऽर्थज्ञानकारणम् ॥ ३० ॥

कार्यकारणभावश्चेत्क्रमस्तद्ग्राहिचेतसाम् ।
तद्धेतुरात्मभेदो वा वक्तृभेदेऽपि धीर्भवेत् ॥ ३१ ॥

न हेतुफलभावोऽङ्गं समुत्थापकचेतसाम् ।
अर्थबुद्धेरनाश्रित्य सङ्केतज्ञानकालयोः ॥ ३२ ॥

इष्ट उत्क्षेपणत्वादिर्नानाव्यक्तिविभावनः ।
एकस्मैविद्यवृद्धानां हस्तसंज्ञादिगोचरः ॥ ३३ ॥

उपलब्धेश्च साकल्ये क्रमः प्रागेव चिन्तितः ।
नित्यत्वमविकल्प्यं तु सत्त्वादेवास्य जातिवत् ॥ ३४ ॥

अन्यग्रहणसापेक्षं कथं जात्यादि वस्तुसत् ।
अर्थग्रहणसापेक्ष उक्तमन्योन्यसंश्रयम् ॥ ३५ ॥

निरस्तभेदं पदतत्त्वमेतद्व्यादर्शि युक्त्यागमसंश्रयेण ।
विधूतभेदग्रहमेतयैव दिशापरं सम्प्रतियन्त्वभेदम् ॥ ३६ ॥

सान्द्राविद्यातिमिरपटलाच्छादितान्तर्दृशो ये
दृष्टिं मन्दा वरमुनिमते कुर्वते सावमानम् ।
तेभ्योऽविद्यातिमिरपटलोल्लेखिनी संहितेयं
स्पष्टन्यायैर्घटितसुमतिर्दर्शिता स्फोटसिद्धिः ॥ ३७ ॥

## अनुबन्धो द्वितीयः २.

## स्फोटसिद्धिकारिकार्द्धानां वर्णानुक्रमसूची

---

## अनुबन्धस्तृतीयः ३.

## स्फोटसिद्धिगोपालिकयोरुदाहृतानां श्लोकार्द्धानां वाक्यानां च वर्णानुक्रमसूची

---

## अनुबन्धश्चतुर्थः ४

## योगसूत्रभाष्यविवरणम्

Adyar library XXXIX. C. 13. Vol. 2. P. 577.

"अत्र कश्चिदाह—

"वर्णा वा ध्वनयो वापि स्फोटं न पदवाक्ययोः ।
व्यञ्जन्ति व्यञ्जकत्वेन यथा दीपप्रभादयः ॥

सत्त्वाद्धटादिवच्चेति साधनानि यथारुचि ।
लौकिकव्यवहारेण[1] कल्पितेऽर्थे भवन्ति हि ॥

नार्थस्य वाचकः स्फोटो वर्णेभ्यो व्यतिरेकतः ।
घटादिवन्न दृष्टेन विरोधो धर्म्यसिद्धितः ॥

प्रतिषेधेत्तु यो वर्णांस्तज्ज्ञानानन्तरोद्भवान् ।
दृष्टबाधो भवेत्तस्य शशिचन्द्रनिषेधवत् ॥

वर्णाद्वाक्यार्थधीरेषा तज्ज्ञानानन्तरोद्भवा ।
येदृशी सा तदर्था हि धूमादेरिव वह्निधीः ॥

दीपवद्वा गकारादिर्गवादेः प्रतिपादकः ।
ध्रुवं प्रतीयमानत्वात्तत्पूर्वं प्रतिपादनात् ॥" इति ॥

अत्रोच्यते—"वर्णा वा ध्वनयो वापि स्फोटं न पदवाक्ययोः" इति पदं वाक्यं वा स्वतस्तावन्न प्रसिद्धम् । तत्रासति वर्णव्यतिरिक्ते पदे वाक्ये वा पदवाक्ययोः स्फोटं न व्यञ्जन्तीति[2] कथं चेतस्विनां वचनावकाशः

---

१. व्यतिरेकेण. अन्यत्र. २. व्यञ्जयन्ति. मातृका.

स्यात्‌ ? एवं च सति उद्दिश्य पदवाक्ययोः स्फोटं प्रतिषेधता पदं वाक्यं चाभ्युपगतं भवेत्‌ । अथापि पराभिप्रायेणोच्येत, तथापि सिद्धसाध्यता ; न परस्य पदवाक्ययोरन्यः स्फोटो विद्यते, यः प्रतिषिध्येत ; पदवाक्ये एव हि तस्य स्फोटः । अथापि ब्रूयात्‌—अर्थावच्छेदका विशिष्टक्रमोपनिवेशिनो वर्णाः पदं वाक्यं वा प्रतिषिध्यत इति । तच्च न युक्तम्‌ , स्वतो विरोधात्‌ । अथापि ब्रूयात्‌—वर्णव्यतिरिक्तं पदं वाक्यं वा प्रतिषिध्यत इति, तथापि व्यातरिक्तमुद्दिश्य तस्य व्यञ्जनप्रतिषेधे व्यतिरिक्तपदवाक्याभ्युपगमः प्रसक्तः । अथापि परिकल्पित-पदवाक्यप्रतिषेधः, एवमपि व्यञ्जकत्वादित्यसिद्धो हेतुः । कथं स्वात्मव्यतिरिक्तस्य वा पदस्य व्यञ्जकत्वम्‌ , अव्यतिरिक्तस्य वा व्यञ्जकत्वम्‌ , अर्थस्य वा व्यञ्जकत्वं वर्णानामिति त्रयी विकल्पना । यदि व्यतिरिक्तस्य व्यञ्जकत्वम्‌ , तदा स्वतोऽसिद्धः स्यात्‌ । अथाव्यतिरिक्तस्य, तथापि परस्यासिद्धः । किञ्चिद्व्यञ्जकत्वाच्च व्यतिरिक्तस्यैव व्यञ्जकत्वम्‌ , नाव्यतिरिक्तस्य प्रदीपादेरिव ; अन्यव्यञ्जनार्थं हि व्यञ्जकः प्रदीपादिरुपादीयते, न स्वात्मव्यञ्जनाय । स्वात्मव्यक्त्यर्थं चेदुपादास्यते, जातु पा(वा)न्धस्यापि व्यज्येत । अथ व्यतिरिक्तव्यञ्जकत्वे सिद्धे पदस्य व्यञ्जका भवेयुरर्थस्य वा ? तत्र अनेकसाध्यम्‌ , यथा शिबिको-द्वहनादि तदन्यतमेन न शक्यमनुष्ठातुमेवमन्यतमेन वर्णानामर्थस्य प्रतिपादन-मनेकसाध्यत्वादशक्यमिति प्रतिपादितम्‌ । न च कूपखानकन्यायेन कश्चि-त्कश्चिद्व्यङ्‌क्ष्ये संस्कारमाधाय वर्णा निवर्तन्त इति शक्यं वक्तुम्‌ , अभिधेयस्यैक-बुद्धिविषयत्वात्‌ । यथा च सुगतसिद्धान्ते[2] प्रध्वंसमानमुत्पत्स्यमानस्य विज्ञान-संस्कारमाधातुमपर्याप्तं स्थितस्य धर्मिणः कस्यचिदभावादेवान्योऽन्यसम्बन्धभावा-दयुगपत्समयजन्मनां वर्णानां पूर्वस्य पूर्वस्य विनश्यत उत्तरस्योत्तरस्योपजनि-ष्यमाणस्य बलाधानानुपपत्तिरिति नार्थस्य व्यञ्जका वर्णाः परिशेषात्पदस्यैव व्यतिरिक्तस्याभिव्यञ्जितार इति स्थितधर्मः । अस्माकं तु स्थिते धर्मिणि चेतसि

१. प्रतिषेधात्यति मातृका. २. कृतान्ते. मातृका.

पूर्वपूर्ववर्णप्रत्युपस्थितसंस्कारपरंपरापरिपाकविशारदे पश्चिमवर्णजन्मवेलायां निरवयवमेकबुद्धिनिर्ग्राह्यं बुद्धिनिर्भासात्मकं झटिति समुन्मिषतीति न संस्काराधानासामर्थ्यदोषप्रसङ्गः । किं च, यद्यपि वर्णाः स्वबुद्धिं [1]व्यञ्जन्ति, सा बुद्धिरर्थप्रतीतिं प्रति करणभूतैवाभिव्यज्यते, न तु फलं प्रति; वर्णाः करणत्वेन व्याप्रियन्ते, करणभूतबुद्ध्युत्पादनोपक्षयात् ; बुद्धेरेव हि फलं प्रति व्यापारः । यस्य हि फलं प्रति व्यापारः तत्प्रमाणम्, स शब्दः । ततश्चार्थप्रतीतिं प्रति करणभूतबुद्धिव्यवहितत्वान्न वर्णानां वाचकत्वम् ; परम्परया तु पदं प्रत्युपायत्वं न वर्णानां प्रतिषिध्यते । तस्मादेवमयं श्लोकः पठितव्यः—

वर्णा वा ध्वनयो वापि भिन्नं[2] वाक्यपदात्मनोः ।
[3]व्यञ्जन्ति व्यञ्जकत्वेन यथा दीपप्रभादयः ॥

तथा घटादीनामप्यर्थान्तरप्रत्युपस्थापनमात्रत्वमभ्युपगम्यत एव । घटादयो हि दर्शनमात्रेण [4]उदकाहरणधारणादियोग्यताबुद्धिमन्यद्वा किञ्चिदुपस्थापयन्त्येव, तथा वर्णानां पारम्पर्येणात्मव्यतिरिक्तपदप्रत्युपस्थापकत्वं सत्त्वात् घटादिवदिष्यत एवेति तुल्यमेतदपि—

सत्त्वाद्घटादिवच्चेति साधनानि यथारुचि ।
लौकिकव्यतिरेकेण कल्पितेऽर्थे भवन्ति हि ॥

सर्वथा जातिर्वा बुद्धिर्वा भवतु ; यतो वा कुतश्चिदुच्चारितप्रध्वस्तवर्णानन्तरभाविनो वर्णव्यतिरिक्तादर्थप्रतिपत्तिः, स स्फोटः ; स चेदवश्यं वर्णासम्भवित्वात्कार्यस्याभ्युपगमनीयः । तथा च—

'नार्थस्य वाचकः स्फोटो वर्णेभ्यो व्यतिरेकतः ।''

---

१. व्यञ्जयन्ति. मातृका.
२. भिन्नमवाच्यमात्मनो. मातृका.
३. व्यञ्जयन्ति. मातृका.
४. स्थानमात्र. मातृका.
५. वचनाभरण. मातृका.
६. व्यवहारेण. मातृका.

इति ब्रुवतोऽभ्युपगमविरोधः स्यात् । अपि च, वर्णेभ्यो व्यतिरेकत इत्यन्यतरासिद्धः, स्वतोव्यतिरेकस्यासिद्धत्वात् । किं च, नामाख्यातोपसर्गनिपातपदजातिचतुष्टयमभ्युपगच्छता जातिव्यञ्जकं वर्णव्यतिरिक्तमन्यदभ्युपगन्तव्यम् । न वर्णाः पदजातिमभिव्यङ्क्तुमुत्सहन्ते[1] । वर्णा हि वर्णजातिमभिव्यञ्जन्ति । न चावयवेषु भिन्नकालमकालजन्मविनाशेष्ववयविजातिव्यञ्जनमुपपद्यते । व्यवस्थितेष्वपि नाम तावदवयवेषु न पाणिपादादयः शरीरादृते शरीरत्वमभिव्यञ्जन्ति ; किं पुनरनवस्थितेषु । किं च अश्वः अयातमायातमक्षो (?) भवति, तेन मम वायुर्वायुरित्यादिषु तुल्यस्वरूपस्वरूपेषु नामत्वाख्यातत्वे परस्परविरुद्धजातीये नैक एव वर्णोऽभिव्यनक्ति । यदि वाश्व इति नामजात्या अभिव्यञ्जकाः अकारशकारवकाराकारविसर्जनीया आख्यातजात्यभिव्यञ्जकेभ्यो भिन्ना भवेयुस्तदा उपपद्यते भिन्नानां भिन्नजात्यभिव्यञ्जकत्वम् ; तदेकत्वे नोपपद्येत । यद्यप्यर्थप्रकरणशब्दान्तरसन्निधानादिभिः 'इदं नाम' 'इदमाख्यातम्' इति परिकल्प्येत, तथापि नामाख्यातजात्यभिव्यक्तिमर्थप्रकरणादिभिरेक एव वर्णो न शक्नोति कर्तुम् ; न हि ब्राह्मण एव ब्राह्मणत्वं क्षत्रियत्वं चाभिव्यनक्ति । तस्माद्भिन्ना अकाराः शकारवकारादयश्च बहव एषितव्याः । एवं गोशब्दादयोऽपि भिन्ना एव । तथा गोशब्दत्वमश्वशब्दत्वं च सिद्धम् ; एवमत्वमात्वमित्वमीत्वं च सिद्धम् ; एवं च सत्यकारादयो वर्णा अत्वादीन्येव सामान्यान्यभिव्यञ्जन्ति, नाश्वादीनामाख्यातजातिभेदानिति । तस्माद्वर्णव्यतिरिक्तं पदत्वसामान्याभिव्यञ्जकं पदमभ्युपगन्तव्यम् । एवं च सत्येष श्लोक एवं पठितव्यः—

"प्रतिषेधेत यः स्फोटं वर्णधीसमनन्तरम् ।
दृष्टबाधो भवेत्तस्य शशिचन्द्रनिषेधवत् ॥" इति ।

---

१. व्यञ्जितुम्. मातृका.

वर्णार्था वर्णधीरेषा तज्ज्ञानानन्तरोद्भवात् ॥ इति ।

करणबुद्धिव्यवहितत्वात् अनन्तरोद्भवत्वमसिद्धम् । पारम्पर्येण चेत्सिद्धसाध्यता । धूमस्यापि न वह्निधियं प्रति कारणत्वम्, धूमधियः कारणत्वात् । धूमादीनां पारम्पर्यवद्वर्णादीनामपि पारम्पर्येणोपकारकत्वमिष्यत इत्युक्तम् । तस्मादयमपि श्लोक एवं पठितव्यः—

वर्णोत्था नार्थधीरेषाऽतदनन्तरोद्भवात् [तज्ज्ञानानन्तरोद्भवा] ।
येदृशी सा तदर्था न धूमादेरिव वह्निधीः ॥

न च दीपवत्सन्निपत्य गकारौकारौ सास्नादिमदर्थव्यञ्जकौ ; अर्थव्यक्तिकालानवस्थानादनयोर्दृष्टो व्यभिचारो विसर्जनीयविषयेऽपि समुन्नीयते । निरवस्थाना हि वर्णा नार्थव्यक्तिसमानकालावस्थायिनः ; प्रदीपस्तु व्यङ्ग्यकालेन तुल्यकालावस्थावस्थानात् करणत्वं प्रतिलभते । तस्मादयमप्येवं श्लोकः पठितव्यः—

दीपवद्वा गकारादिर्गवादीनामवाचकः ।
ध्रुवं प्रतीयमानत्वात्तत्पूर्वं प्रतिपादनात् ॥

प्रमाणञ्चात्र भवति—अर्थस्य न वाचकाः ; नाप्यर्थं प्रति प्रमाणं वर्णाः, साक्षात्सङ्केतापेक्षत्वात्, अङ्कप्रतिमादिवत् ; यथा शैङ्खचक्राद्यङ्का विष्णुप्रतिमाश्च सङ्केतापेक्षा आगममेव द्योतयन्ति न विष्णुशैङ्खाद्यर्थं प्रति प्रमाणत्वमुपयान्ति । यत्तु नापेक्षते सङ्केतं तत्प्रमाणम्, यथा वाक्यं दीपादिजात्यन्तरञ्च ; न तथा वर्णा इति प्रतिप्रतिमादिवदेषां प्रामाण्यमापतितं तथा वर्णाः अर्थप्रतिपादकमात्मव्यञ्जनमभिव्यञ्जयन्ति, साक्षात्सङ्केतापेक्षत्वादङ्कविष्णुप्रतिमादिवत् स्फोटस्तत्सङ्केतं न साक्षादपेक्षत इत्यवादिष्म । तस्मादेवमनेकयुक्तिपरिवारप्रत्युदानीतबलाधानं कः स्फोटमपाकर्तुं शक्नोति ? तदेवं गते भाष्यमिदानी-

१. शङ्काद्यङ्का. मातृका. २. शताद्यर्थप्रति मातृका.

मुच्यते—तस्य पदस्य सङ्केतबुद्धितः प्रविभागः शब्दार्थज्ञानव्यतिभिन्नरूपा हि संकेतबुद्धिः तस्याः सकाशात् पदस्य प्रविभागः करणीयः। संकेतरूपं दर्शयति—एतावतां वर्णानामेवंजातीयकोऽनुसंहार एतस्यार्थस्य वाचक इति। यथायमङ्कः शतसहस्रं (शङ्खचक्रादिः) 'विष्णुरेषा प्रतिमा' इति च सङ्केतस्तु पदपदार्थयोरितरेतराध्याससमृत्यात्मा न प्रमाणभूतः यथा विष्णुरेषा प्रतिमा, एष एव चतुर्भुज इति। तथा प्रत्यय उभयस्मिन्नु-भयं नु प्रत्यय इत्यन्योन्याध्यस्तरूपा विष्णुप्रतिमाप्रत्ययास्तथा योऽयं शब्दः सोऽयमर्थो योऽर्थः स शब्दः यश्च प्रत्ययः सोऽर्थः शब्दश्चेति। एवमितरेतराध्यासरूपः सङ्केतो भवति, एवमेते शब्दार्थप्रत्यया इतरेतराध्यासात् संकीर्णाः, तद्यथा गौरिति शब्दो गौरित्यर्थो गौरिति ज्ञानमिति। य एषां शब्दार्थप्रत्ययानां प्रविभागज्ञः स सर्वज्ञः। कस्मात्? अशक्यत्वात्प्रविभाग-ज्ञानस्य। न ह्यसर्वज्ञः शक्नोति प्रविभागेन तानवगन्तुम्। सर्वपदेषु चास्ति वाक्यशक्तिः वृक्ष इत्युक्ते अस्तीति गम्यते न सत्तां पदार्थो व्यभिचरतीति। किमर्थमेतदुच्यते? इह सर्वभूतरुतज्ञानोपायः प्रतिपिपादयिषितः; सर्वभूतरुतञ्च वाक्यार्थविषयमेव न पदार्थविषयम्; पदानां केवलानां वर्णानामिवानर्थ-कत्वात्, संव्यवहाराभावाच्च। यथैव वर्णानां वर्णान्तराभिसमीक्षया पदावद्योतन-प्रयोजनवत्त्वम्, एवं पदानामपि पदान्तरापेक्षया वाक्योपस्थापनोपायत्वम्, एवं सति वाक्यस्यैव प्रामाण्यं केवलपदप्रयोगेऽर्थाप्रतीतेः। किञ्च केवलं पदमप्रमाणम्, तावता निर्णयाभावादेकैकवर्णवत्। नापि पदं वाचकम्, सङ्केतार्थापेक्षत्वात् च्युताद्यङ्कवत्। नामाख्याते केवले न वाचके, केवला-प्रयोगादुपसर्गवत्। यत्रापि केवलं पदं प्रयुयुक्षितम्, तत्राप्यवश्यमस्तितिष्ठति-देवदत्तादिपदं बुद्धौ विपरिवर्तत इति न केवलाप्रयोगादसिद्धिः। प्रलम्बते, पर्यागच्छति, अभ्यागच्छतीत्यादिषु उपसर्गकर्मप्रवचनीयानां न कश्चिदर्थः। तथा अभिमनायते, सुमनायते, दुर्मनायते इत्यादिषु चोपसर्गाणां द्योतकत्वं

सिद्धम् । तथा प्रतिष्ठते, अधीते इत्यादिष्वप्युपसर्गाणां द्योतकत्वमेव न वाचकत्वमिति । तथा न ह्यसाधना क्रियास्ति केवलकर्मप्रयोगे किमपि साधनं द्रव्यं गुणो वा अवगम्यते ।

किञ्च, प्रकृतिप्रत्ययानामनवस्थितावधित्वाद्व्यभिचारादवाचकत्वम् । तद्यथा दरिद्रातिः केषांचित् द्रव्यमात्र एव पठयते । [दरिद्र] (दरि) शब्दस्तु निपातोपसर्गस्थानीयः पुनरागच्छति । द्राति, निद्राति, दरिद्रातीति । तत्र का प्रकृतिरिति वक्तव्यम्, किं द्रा[कु लिंदं] (निद्रा) वा दरिद्रेति । केषुचित्तु दरिद्रेत्येतावत्पठयते । तथा द्राशब्दोऽपि पृथगाम्नायते, एवमस्ति सकारमात्रं पठन्ति, तीति च प्रत्ययेऽकारमागमं कुर्वन्ति । केचित्तु सहाकारेण पठित्वा असिति च, प्रत्यये लोपमकारस्य कुर्वन्ति । तत्र का प्रकृतिरिति वक्तव्यम् । नानिर्ज्ञाते प्रकृत्यवधौ प्रत्ययावधौ वा प्रकृतिप्रत्ययार्थौ शक्यौ विवेक्तुम् । क्वचिदुपसर्गोऽपि 'असंग्रामायत शूरः' इत्यादिषु प्रकृत्ये-कदेशतामापन्नः । तथा अततेर्नः अः, अस्यापत्यमिरित्यादौ इयानधुनेत्यादौ कः प्रकृत्यर्थभागमसत्यां प्रकृतौ ब्रूयात् ? अग्निचित्, सोमसुत्, भित्, छित्, अधोक्, कति, अम, पच, पठेत्यादिषु प्रत्ययार्थमसति प्रत्यये को ब्रूयात् ? एवमादिषु लक्षितापचाराणां प्रकृतिप्रत्ययानां कः शक्नुयादर्थवत्त्वं कल्पयितुम् ? अत्र भवतु नान्यत्रेति नार्धजरतीयं लभ्यम् । उद्दालकपुष्पभञ्जिका पारंनपुष्प-प्रचायिकेत्यत्र कः पूर्वपदार्थोत्तरपदार्थः ? प्रज्ञः संज्ञ इत्यादिषु प्र(कृ)त्यन्वयोऽपि नास्तीति कस्य कोऽर्थ इति । ऋषभो वृषभो वृषः, उदकमुदकुम्भः, क्षीरोदो यावो यावकः, कूपः सूपोऽपूप इत्यादिषु कस्य कोऽर्थ इति वक्तव्यम् । दध्यशान मध्वत्रेत्यादिषु किमवधि किंपदं वाचकम् ? तस्मात्सर्वत्र दृष्टापचाराणां वर्णप्रकृतिप्रत्ययपदानामनर्थकानामदृष्टापचारनिरवयववाक्योपायत्वमेव । तानि निःसंधिबन्धनानि निरवयत्वान्मिथ्याभूतवर्णपदध्वनिकृतचित्रीभावाद्वाक्यादपोद्धृत्य

व्याकरणीयानि । तानि च वाक्यस्यानवयवभूतान्युपायत्वात् वाक्यावयववदवभासमानानि यावत्फलमसत्त्वात् शताद्यङ्कवदेव मिथ्याभूतानि उच्चार्यमाणवाक्यवत् द्योतनार्थं करणसन्निपाते विशेषेणोपादाय परिहीयमाणानि स्वकीयक्रमनिष्पन्ननिवृत्तकालादिभेदविचित्रतया वक्यात्मानं क्रमवन्तमिव निष्पद्यमानमिव निर्वर्तमानमिव द्राघीयांसमिव कालवन्तमिव भेदवन्तमिव विचित्राकारतामापादयन्ति । एवञ्च सति यदुच्यते शशविषाणादपोद्धृत्य खरविषाणस्य किन्तदिति, एतदलीकं यथैव मृगतृष्णिकातोयमलीकमपि सत्यादूषरादपोद्ध्रियते , यथा च स्थाणोः पुरुषः पुरुषाच्च स्थाणुः शुक्तिकातश्च रजतमपोद्ध्रियते , यथैव च मृगतोयादयो यथाभूतोषरादिवस्तुप्रतिपत्तिहेतवः, तथा वर्णपदप्रकृतिप्रत्यया यथाभूतवाक्यार्थप्रतिपत्तिकारणे तत्प्रतिपत्तौ चापोद्ध्रियन्ते । क्वचिदर्थप्राप्तमपोद्ध्रियते । यथा मृगतोयादिकम् । क्वचित्तु प्रयोजनत्वेन विवक्षितं यथा शतादिसंख्यातः शताद्यङ्कापोद्धारः क्रियते यथा च लिप्यक्षराणि सङ्केतापेक्षत्वात् कृतसमयरूपाण्यकारादिवर्णादपोद्ध्रियन्ते अथ च सर्वाण्येतानि यथाभूतार्थप्रतिपादनोपायत्वं प्रतिपद्यन्ते न च तावता मिथ्यात्वमेषां नास्ति । तथा पदादीन्यपि । यो हि प्रकृतिप्रत्ययपदवर्णानां सङ्केतद्वारेणान्योपायानां मिथ्याभूतलिप्यक्षरकल्पानां स्वयमपि स्वसङ्केतेन वाक्यार्थप्रतिपत्त्युपायमनेकधा निर्माय व्यवहरमाणः सत्यत्वमेषां मन्यते, नूनमसावभ्रे चन्द्रमसं दिदृक्षमाणः चन्द्रदर्शनोपायभूतमभ्रमपि चन्द्रत्वेन प्रतिपद्यत इति । यथा च वाक्यमेव सत्यं तथा च वाक्यार्थस्यैव सत्यत्वं न पदानि पदार्था वा केवलाः सत्यत्वमुपयान्ति, सर्वमेव सामान्यविशेषात्मकं वस्तु । न हि सामान्यव्यावृत्तो विशेषः विशेषव्यावृत्तं वा सामान्यमस्ति, गौरित्युक्ते अस्तीति गम्यते । तेन केवलपदप्रयोगेऽप्यन्तर्णीतपदान्तरार्थो वाक्यार्थ एव प्रतीयते न केवलपदार्थः । एवं च सति—

"पदार्था गमयन्त्येनं प्रत्येकं संशये सति ।

सामस्त्ये निर्णयोत्पादात् स्थाणुर्मूर्धस्थकाकवत् ॥"

इत्यसिद्धमस्माकम् । न हि स्थाणुर्नाम वाक्यार्थः पृथक्त्वादार्थत्वेन प्रसिद्धः, यस्माद्वृक्षः सन् स्थाणुः सन् मूर्धा सन् काकः सन् काकः सन्मूर्धनि स्थाणोरित्यन्तर्णीतप्रतीयमानपदान्तरोपस्थानापेक्षायां स्थाणुमूर्धस्थकाकबुद्धिरेव न स्यात्; सत्स्वपि तेषु सद्बुद्धिसमुत्पत्तेः सत्पदार्थान्तरबुद्धिरवश्यं भाविनीति । तस्माद्वाक्यार्थ एव प्रत्येकमपि संशायत्मक इति कुतः पदार्थाः प्रत्येकमसन्तो वाक्यार्थं गमयेयुः ? तस्मादेवमयं श्लोकः पठितव्यः—

वाक्यं तु गमयत्येनं प्रत्येकं संशये सति ।
सामस्त्ये निर्णयोत्पादात् स्थाणुर्मूर्धस्थकाकवत् ॥

एवं च—

वाक्येनैवोच्यते तस्माद्वाक्यार्थोऽन्यैररूपणात् ।
अन्ये चास्तीति बोधाच्च वृक्षेणैव च वृक्षता ॥

यत्तु पलाशशब्देन वृक्षता नोच्यत इति, सत्यमेवमेतत्; न हि पलाशवाक्येन वृक्षवाक्यार्थस्याभिधानम्, भिन्नविषयत्वात्; अन्यो हि पलाशवाक्यार्थः, पलाशोऽस्ति तिष्ठति वा, अन्यो वृक्षवाक्यार्थः । यदा च पदवर्णानां निरवयवानां पृथगस्तित्वमभ्युपगम्यते, तदा निरवयववर्णपदोपादानं वाक्यं सावयवं कथमवकल्पेत ? न हि क्रियाकाशादिभिः सावयवं शक्यमारब्धुम् । अथ सावयवत्वमभ्युपायिष्यते, तत्रापि दोष एव प्रसज्येत ।

सद्भावे पदवर्णानामभेदो यः पराणुवत् ।
सर्वभावस्ततश्चेति सेयं वृद्धविभीषिका ॥

परमाणूनां सत्त्वादिधर्ममात्रत्वाभ्युपगमात् विवृत्य सुष्ठु भाषामहे सेयं वृद्धविभीषिकेति । अथ केवलपदप्रयोगे पदार्थान्तरस्यापि संप्रहात् किमनेक-

पदप्रयोगेणेति चेत्, नियमार्थोऽनुवादः । कर्तृकरणकर्मणां चैत्राग्नितण्डुलानां क्रियावचनासाधनता विद्यत इत्यर्थप्राप्तानामनियमात् नियमः—-चैत्र एव कर्ता अग्निनैव करणेन तण्डुलानेव कर्मेति । अपि च नियमार्थमन्तरेणानुवादः दृष्टश्च वाक्यार्थे केवलं पदम्; यथा "श्रोत्रियं छन्दोऽधीते" इति साधनवचनमेव केवलश्रोत्रियपदं छन्दोऽधीत इत्यस्मिन् क्रियासाधनसमुदाये वर्तते, तथा जीवतीति क्रियापदमाक्षिप्तक्रियासाधनविशेषं छात्रं छन्दोऽधीते प्राणान् धारयतीति वाक्ये 'श्रोत्रियो जीवतीति' च पदार्थाभिव्यक्तिः । सर्वथा सर्वपदेषु वाक्यशक्तिरित्यङ्गीकृतपदान्तरार्थान्येव सर्वाणि पदानीत्येतदुच्यते । तस्मात् क्वचित्क्रियापदेनैव साधनमुपक्षिप्तम्, क्वचिच्च नामपदेनैव क्रियाभिहिता । तस्मात्तेषां विभागो दुरवबोध इति ततो वाक्यात्प्रविभज्य व्याकरणीयम् । क्रिया-वाचकं वा जीवतीत्यादि कारकवाचकं वा श्रोत्रियः क्षत्त्रिय इत्यादि । अन्यथा यदि वाक्यात्प्रविभज्य न व्याक्रियेत तदा ततो 'भवत्यश्वो जायते' इत्येवमादिषु नामाख्यातसारूप्यादपि अविज्ञातं कथं क्रियायां कारके वा व्याप्रियेत ? भवति निधेहीति सर्वनाम्नः शत्रन्तस्य वा सप्तम्यां रूपं भवति । बीजादंकुर इत्याख्यातम् । अश्वश्चरतीति जातिवाचकम्, अश्वस्त्वं ग्रामम् इति श्वयतेर्लुङन्तस्य मध्यमपुरुषैकवचनान्तस्य प्रयोगः, 'अजापयः पीयतामिति' नामपदम्, 'अजापयस्त्वं राजानम्' इति जपतेर्णिजन्तस्य लङ्मध्यमपुरुषैकवचनान्तस्य रूपम् ।

तेषां शब्दार्थप्रत्ययानां संकरं प्रदर्श्य विभागः प्रतिपाद्यते—श्वेतते प्रासाद इति क्रियार्थः । श्वेतः प्रासाद इति कारकार्थः । क्रियाकारकत्वा-द्वस्तुनः श्वेततेः श्वेत इति च क्रियार्थेन च कारकार्थेन चाभिधानम् । यथा शब्दः क्रियाकारकात्मा यः श्वेतः स श्वेतते यः श्वेतते सः श्वेत इत्येवं क्रियाकारकाव्यतिरिक्त एकः शब्दः तथार्थस्तद्वाच्यः क्रियाकार-कात्मा, तथा तद्विषयः प्रत्ययः क्रियाकारकात्मा, तथार्थः शब्दप्रत्ययात्मा

प्रत्ययोऽपि शब्दार्थात्मा । कस्मात् ? सोऽयमित्यभिसंबन्धात्——योऽर्थः स शब्दः, य शब्दः सोऽर्थः प्रत्ययश्च , यः प्रत्ययः सोऽर्थः शब्दश्चेत्येवमभेदाकारप्रत्ययः स्मृत्यात्मा संकेत इत्येवमसंकररूपतः प्रविभागः कार्यः । कथम् ? यस्तु श्वेतोऽर्थः श्वेतगुणः प्रासादादिरर्थः स शब्दप्रत्ययालम्बनीभूतः वाच्यत्वेन विषयत्वेन च । स च स्वाभिरवस्थाभिः नवपुराणत्वादिभिः विक्रियमाणः न शब्दसहगतो नापि बुद्धिसहगतः शब्दप्रत्ययाभावेऽपि भावात् । एवं प्रत्ययो न शब्दसहगतो नाप्यर्थसहगत इतराभावेऽपि भावात् । तथा शब्दोऽप्यर्थप्रत्ययव्यभिचारादित्येवमन्यथार्थोऽन्यथा शब्दोऽन्यथा प्रत्यय इति प्रविभागः ।

एवं च प्रविभागसंयमादिदं वर्णैः संकेतितैः वाक्यात्मकमभिव्यज्यमानम् । अयमर्थः—प्रत्ययश्चायमिति प्रविभागेन संयमात् प्रविभक्तपदार्थप्रत्ययानां स्वेन रूपेण साक्षात्करणाद्योगिनः सर्वभूतरुतज्ञानं सम्पद्यते ॥

* * * * *

वदनाहितपूर्णचन्द्रकं
गुरुमीशानमभूतिभूषणम् ।
प्रणमाम्यभुजङ्गसङ्ग्रहं
भगवत्पाद(म)पूर्वशङ्करम् ॥[1]

इति श्रीगोविन्दभगवत्पादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य
शङ्करभगवतः कृतौ पातञ्जलयोगशास्त्रभाष्यविवरणे
चतुर्थः पादः समाप्तः



१. इदं पद्यं 'इति श्रीगोविन्द-' इत्यादि च ग्रन्थान्तस्थम्.

## शुद्धाशुद्धपाठाः.

| पुटे. | पङ्क्त्याम्. | अशुद्धाः | | शुद्धाः. |
|---|---|---|---|---|
| ११. | १. | यनोच्चारितेन .... | ... | येनोच्चारितेन |
| १४. | २३. | प्रसिद्धतः .... | ... | प्रसिद्धितः. |
| २०. | १२. | चैककवर्ण .... | .... | चैकैकवर्ण. |
| ३०. | १९. | मृशा ... | .... | मृशति. |
| ३२. | १८. | न्यसिध्यन्ते .... | .... | न्यसिष्यन्ते. |
| ६४. | २. | केचिदाहुर्यया.... | .... | केचिदाहुर्यथा. |
| ८५. | १०. | स्फोटद्धि ... | ... | स्फोटसिद्धि. |
| १३५. | १९. | स्वभाविकं ... | .... | स्वाभाविकं |
| १५३. | १६. | पीरच्छेदं ... | .... | परिच्छेदं |
| २१५. | ९. | रेपक्ष्यते ... | .... | रपेक्ष्यते. |
| २३२. | २. | वर्तकं चेत् .... | .... | वर्तकश्च. |
| २३२. | २१. | वर्तकं चेत् .... | .... | वर्तकश्च. |
| २५५. | ४. | विशेषाश्च अन्यत्र | .... | विशेषाश्च'' ''अन्यत्र. |
| अनुबन्ध. २३. | १. | शब्दार्थ .... | .... | शब्दादर्थ |